KÂVYAMÂLÂ. 42.



# THE NÂTYAS'ÂSTRA

OF

# BHARATA MUNI.

EDITED BY

PAṆDIT S'IVADATTA

Head Professor and Superintendent, Sanskrit Department,
Oriental College, Lahore.

AND

KÂS'ÎNÂTH PÂṆDURANG PARAB.



PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF JAVAJI DADAJI'S "NIRNAYA-SAGARA" PRESS.

BOMBAY.

1894.

*Price 3 Rupees.*

काव्यमाला. ४२.

श्रीभरतमुनिप्रणीतं

# नाट्यशास्त्रम् ।

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसाददारक-
केदारनाथकृपाङ्गीकृतशोधनकर्मणा शिवदत्तशर्मणा,
मुम्बापुरवासिपरबोपाह्वपाण्डुरङ्गात्मजकाशिनाथ-
शर्मणा च संशोधितम् ।

तच्च
मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।

१८९४



मूल्यं रूप्यकत्रयम् ।

## श्रीभरतमुनिप्रणीतं

# नाट्यशास्त्रम् ।

### प्रथमोऽध्यायः ।

प्रणम्य शिरसा देवौ पितामहमहेश्वरौ ।
नाट्यशास्त्रं प्रवक्ष्यामि ब्रह्मणा यदुदाहृतम् ॥ १ ॥
समाप्तजप्यं व्रतिनं स्वसुतैः परिवारितम् ।
अनध्याये कदाचित्तं भरतं नाट्यकोविदम् ॥ २ ॥
मुनयः पर्युपास्यैनमात्रेयप्रमुखाः पुरा ।
पप्रच्छुस्ते महात्मानो नियतेन्द्रियबुद्धयः ॥ ३ ॥
योऽयं भगवता सम्यक्कथितो वेदसंमितः ।
नाट्यवेदः कथं चायमुत्पन्नः कस्य वा कृते ॥ ४ ॥
कत्यङ्गः किंप्रमाणश्च प्रयोगश्चास्य कीदृशः ।
सर्वमेतद्यथातत्त्वं भगवन्वक्तुमर्हसि ॥ ५ ॥
तेषां तद्वचनं श्रुत्वा मुनीनां भरतो मुनिः ।
प्रत्युवाच ततो वाक्यं नाट्यवेदकथां प्रति ॥ ६ ॥
भवद्भिः शुचिभिर्भूत्वा तथावहितमानसैः ।
श्रूयतां नाट्यवेदस्य संक्षेपो ब्रह्मनिर्मितः ॥ ७ ॥
पूर्वं कृतयुगे विप्रा वृत्ते स्वायंभुवेऽन्तरे ।
त्रेतायुगे संप्रवृत्ते मनोर्वैवस्वतस्य च ॥ ८ ॥
ग्राम्यधर्मे प्रवृत्ते तु कामलोभवशंगते ।
ईर्ष्याक्रोधादिसंमूढे लोके सुखितदुःखिते ॥ ९ ॥
देवदानवगन्धर्वै रक्षोयक्षमहोरगैः ।

जम्बूद्वीपे समाक्रान्ते लोकपालप्रतिष्ठिते ॥ १० ॥
महेन्द्रप्रमुखैर्देवैरुक्तः किल पितामहः ।
क्रीडनीयकमिच्छामो दृश्यं श्रव्यं च यद्भवेत् ॥ ११ ॥
नव्य(न च) वेदविहारोऽयं संश्राव्यः शूद्रजातिषु ।
तस्मात्सृजापरं वेदं पञ्चमं सार्ववर्णिकम् ॥ १२ ॥
एवमस्त्विति तानुक्त्वा देवराजं विसृज्य च ।
सस्मार चतुरो वेदान्योगमास्थाय तत्त्ववित् ॥ १३ ॥
धर्म्यमर्थ्यं यशस्यं च सोपदेशं ससंग्रहम् ।
भविष्यतश्च लोकस्य[1] सर्वकर्मानुदर्शकम् ॥ १४ ॥
सर्वशास्त्रार्थसंपन्नं सर्वशिष्यप्रवर्तकम् ।
नाट्याख्यं पञ्चमं वेदं सेतिहासं करोम्यहम् ॥ १५ ॥
संकल्प्य भगवानेवं सर्वान्वेदाननुस्मरन् ।
नाट्यवेदं ततश्चक्रे चतुर्वेदाङ्गसंभवम् ॥ १६ ॥
जग्राह पाठ्यमृग्वेदात्सामभ्यो गीतमेव च ।
यजुर्वेदादभिनयान्रसानाथर्वणादपि ॥ १७ ॥
वेदोपवेदैः संबद्धो नाट्यवेदो महात्मना ।
येन[2] नारदसंयुक्तो वेदवेदाङ्गकारणम् ॥ १८ ॥
उपस्थितोऽहं लोकेशं प्रयोगार्थं कृताञ्जलिः[3] ।
नाट्यस्य ग्रहणं प्राप्तं ब्रूहि किं करवाण्यहम् ॥ १९ ॥
एतत्तु वचनं श्रुत्वा प्रत्युवाच पितामहः ।
महानयं प्रयोगश्च समया समुपस्थितः ॥ २० ॥
अयं ध्वजमहः श्रीमान्महेन्द्रस्य प्रवर्तते ।
अत्रेदानीमयं वेदो नाट्यसंज्ञः प्रयुज्यताम् ॥ २१ ॥
ततस्तस्मिन्ध्वजमहे निर्हता[4]सुरदानवैः ।
प्रहृष्टामरसंकीर्णे महेन्द्रविजयोत्सवे ॥ २२ ॥

---

१. 'लोकेऽस्य' ख. २. 'शिवनारदसंप्रोक्तो' क. ३. 'कृताञ्जलिम्' क. ४. 'निहत्य' ख.

नान्दी कृता मया पूर्वमाशीर्वचनसंयुता ।
अष्टाङ्गपदसंयुक्ता विचित्रा वेदनिर्मिता ॥ २३ ॥
तदन्तेऽनुकृतिर्बद्धा[1] यथा दैत्याः सुरैर्जिताः ।
संफेटविद्रवकृता छेद्यभेद्यारवात्मिका ॥ २४ ॥
ततो ब्रह्मादयो देवाः प्रयोगपरितोषिताः ।
प्रददुर्हृष्टमनसः सर्वोपकरणानि नः ॥ २५ ॥
प्रीतस्तु प्रथमं शक्रो दत्तस्तु(ऽदत्त तु) ध्वजमुत्तमम् ।
ब्रह्मा कुटिलकं चैव भृङ्गारं वरुणस्तथा ॥ २६ ॥
सूर्यश्छत्रं शिवा सिद्धिं(?) वायुर्व्यजनमेव च ।
विष्णुः सिंहासनं चैव कुबेरो मुकुटं तथा ॥ २७ ॥
शेषा ये देवगन्धर्वा यक्षराक्षसपन्नगाः ।
तस्मिन्सदस्यतिप्रीता नानाजातिगणाश्रयाः ॥ २८ ॥
अंशांशैर्भाषितं भावान्रसान्रूपं बलं तथा ।
प्रददुर्मत्सुतेभ्यश्च चित्रमाभरणं बहु ॥ २९ ॥
एवं प्रयोगे प्रारब्धे दैत्यदानवनाशने ।
अभवन्क्षुभिताः सर्वे दैत्या ये तत्र संगताः ॥ ३० ॥
विरूपाक्षपुरोगांश्च विघ्नानुत्सा(त्पा)द्य तेऽब्रुवन् ।
नेत्थमिच्छामहे[2] नाट्यमेतदागम्यतामिति ॥ ३१ ॥
ततस्तैरसुरैः सार्धं विघ्न(घ्ना)मायामुपाश्रिताः ।
वाचश्चेष्टां स्मृतिं चैव स्तम्भयन्ति स्म नृत्यताम् ॥ ३२ ॥
एवं विध्वंसितं दृष्ट्वा सूत्रधारस्य देवराट् ।
कस्मात्प्रयोगवैषम्यमित्युक्त्वा ध्यानमाविशत् ॥ ३३ ॥
अथापश्यत्सदो विघ्नैः समन्तात्परिवारितम् ।
सहेतरैः सूत्रधारं नष्टसंज्ञं जडीकृतम् ॥ ३४ ॥

---

१. 'तदन्ते तु कृति' ख. २. 'इष्यामहे' क.

अथोत्थाय द्रुतं क्रोधाद्दिव्यं जग्राह स ध्वजम् ।
सर्वरत्नोज्ज्वलतनुः किंचिदुद्वृत्तलोचनः ॥ ३५ ॥
रङ्गपीठगतान्विघ्नानसुरांश्चैव देवराट् ।
जर्जरीकृतदेहांस्तानकरोज्जर्जरेण सः ॥ ३६ ॥
निहतेषु तु सर्वेषु विघ्नेषु सह दानवैः ।
संप्रदास्य(?) ततो वाक्यमाहुः सर्वे दिवौकसः ॥ ३७ ॥
अहो प्रहरणं दिव्यमिदमासादितं त्वया ।
जर्जरीकृतसर्वाङ्गा [1]येनैते दानवाः कृताः ॥ ३८ ॥
यस्मादनेन ते विघ्नाः सासुरा जर्जरीकृताः ।
तस्माज्जर्जर एवेति नामतोऽयं भविष्यति ॥ ३९ ॥
शेषा ये चैव विघ्नार्थमुपस्थास्यन्ति विघ्नकाः ।
दृष्ट्वैव जर्जरं तेऽपि गमिष्यन्त्येवमेव तु ॥ ४० ॥
एवमेवास्त्विति ततः शक्रः प्रोवाच तान्सुरान् ।
रक्षाभूतश्च सर्वेषां भविष्यत्येष जर्जरः ॥ ४१ ॥
प्रयोगे प्रस्तुते ह्येवं स्फीते [2]शक्रमहे पुरे(रा) ।
त्रासं संजनयन्ति स्म विघ्नाः शेषास्तु नृत्यताम् ॥ ४२ ॥
दृष्ट्वा तेषां व्यवसितं दैत्यानां विघ्नकारकम् ।
उपस्थितोऽहं ब्रह्माणं सुतैः सर्वैः समन्वितः ॥ ४३ ॥
निःसृता भगवन्विघ्ना नाट्यस्यास्य विनाशने ।
अतो [3]रक्षाविधिं सम्यगाज्ञापय सुरेश्वर ॥ ४४ ॥
ततस्तु विश्वकर्माणमाह ब्रह्मा प्रयत्नतः ।
[4]कुरु लक्षणसंपन्नं नाट्यवेश्म महामते ॥ ४५ ॥
ततोऽचिरेण कालेन विश्वकर्मा शुभं महत् ।
सर्वलक्षणसंपन्नं कृत्वा नाट्यगृहं तु सः ॥ ४६ ॥
प्रोक्तवान्द्रुहिणं गत्वा सभायां तु कृताञ्जलिः ।
सज्जं नाट्यगृहं देव तदवेक्षितुमर्हसि ॥ ४७ ॥

---

१. 'येन ते' क. २. 'शक्रसदे' ख. ३. 'विधिः' क. ४. 'गुरु' क-ख.

ततः सह महेन्द्रेण सुरैः सर्वैश्च सेतरैः ।
अगच्छत्त्वरितो द्रष्टुं द्रुहिणो नाट्यमण्डपम् ॥ ४८ ॥
दृष्ट्वा नाट्यगृहं ब्रह्मा प्राह सर्वान्सुरांस्ततः ।
अंशभागैर्भवद्भिस्तु रक्ष्योऽयं नाट्यमण्डपः ॥ ४९ ॥
रक्षणे मण्डपस्यास्य विनियुक्तस्तु चन्द्रमाः ।
यथादिग्लोकपालाश्च विदिक्ष्वपि च मारुताः ॥ ५० ॥
नेपथ्यभूमौ मित्रस्तु निक्षिप्तो वरुणेश्वरः ।
वेदिकारक्षणे वह्निर्भाण्डे सर्वदिवौकसः ॥ ५१ ॥
वर्णाश्चत्वार एवास्य स्तम्भेषु विनियोजिताः ।
आदित्याश्चैव रुद्राश्च न्यस्ताः स्तम्भान्तरेषु च ॥ ५२ ॥
धारणेष्वथ भूतानि शालास्वप्सरसस्तथा ।
सर्ववेश्मसु यक्षिण्यो महीपृष्ठे महोदधिः ॥ ५३ ॥
द्वारशाखानियुक्तौ तु कृतान्तः काल एव च ।
स्थापितौ द्वारपात्रे तु नागमुख्यौ महाख(ब)लौ ॥ ५४ ॥
देहल्याय(ल्यां च) महेन्द्रस्तु शूलं तस्योपरि स्थितम् ।
द्वारपालौ स्थितौ चोभौ नियतिर्मृत्युरेव च ॥ ५५ ॥
पार्श्वे च रङ्गपीठस्य महेन्द्रः स्थितवान्स्वयम् ।
स्थापिता मत्तवारण्यां विद्युद्दैत्यनिषूदिनी ॥ ५६ ॥
स्तम्भेषु मत्तवारण्याः स्थापिताः परिरक्षणे ।
भूतयक्षपिशाचाश्च गुह्यकाश्च महाबलाः ॥ ५७ ॥
जर्जरे तु विनिक्षिप्तं वज्रं दैत्यनिबर्हणम् ।
तत्पर्वसु विनिक्षिप्ताः सुरेन्द्रा ह्यमितौजसः ॥ ५८ ॥
शिरः पार्श्वे ततो ब्रह्मा द्वितीये शंकरस्तथा ।
तृतीये च स्थितो विष्णुश्चतुर्थे स्कन्द एव च ॥ ५९ ॥
पञ्चमे च महाभागाः शेषवासुकितक्षकाः ।
एवं विघ्नविनाशाय स्थापिता जर्जरेश्वराः ॥ ६० ॥

रङ्गपीठस्य मध्ये तु स्वयं ब्रह्मा प्रतिष्ठितः ।
इत्यर्थं रङ्गमध्ये तु क्रियते पुष्पमोक्षणम् ॥ ६१ ॥
पातालवासिनो ये च यक्षगुह्यकपन्नगाः ।
अधस्ताद्रङ्गपीठस्य रक्षणे ते नियोजिताः ॥ ६२ ॥
नायकं रक्षतीन्द्रस्तु नायिकां तु सरस्वती ।
विदूषकमथोंकारः शेषास्तु प्रकृतीर्हरः ॥ ६३ ॥
यान्येतानि नियुक्तानि दैवतानीह रक्षणे ।
एतेषामधिदेवास्तु भविष्यन्तीत्युवाच सः ॥ ६४ ॥
एतस्मिन्नन्तरे देवैः सर्वैरुक्तः पितामहः ।
साम्ना तावदिमे विघ्नाः स्थाप्यन्तां वचसा त्वया ॥ ६५ ॥
पूर्वं साम प्रयोक्तव्यं द्वितीयं दानमेव च ।
तयोरुपरि भेदस्तु ततो दण्डः प्रशस्यते ॥ ६६ ॥
देवानां वचनं श्रुत्वा ब्रह्मा[1] विघ्नानुवाच ह ।
कथं भवन्तो नाट्यस्य विनाशार्थमुपस्थिताः ॥ ६७ ॥
ब्रह्मणो वचनं श्रुत्वा विरूपाक्षोऽब्रवीद्वचः ।
दैत्यैर्विघ्नगणैः सार्धं सामपूर्वमिदं ततः ॥ ६८ ॥
योऽयं भगवता सृष्टो नाट्यवेदः सुरेच्छया ।
प्रत्यादेशोऽयमस्माकं सुरार्थं भवता कृतः ॥ ६९ ॥
तत्रैतदेवं कर्तव्यं त्वया लोकपितामह ।
यथा देवास्तथा दैत्या[2]स्त्वत्तः पूर्वविनिर्गताः ॥ ७० ॥
विरूपाक्षवचः श्रुत्वा ब्रह्मा वचनमब्रवीत् ।
अलं वो मन्युना दैत्या विषादस्त्यज्यतामयम् ॥ ७१ ॥
भवतां देवतानां च शुभाशुभविकल्पकैः ।
कर्मभावान्वयापेक्षी नाट्यवेदो मया कृतः ॥ ७२ ॥
नैकान्ततोऽत्र भवतां देवानां चापि भावनम् ।
त्रैलोक्यस्यास्य सर्वस्य नाट्यं भावानुकीर्तनम् ॥ ७३ ॥

---

१. 'वत्सा विष्णुमुवाच ह' ख. २. 'देव्याः' क-ख.

क्वचिद्बन्धः(द्वन्द्वः) क्वचित्क्रीडा क्वचिदर्थः क्वचित्समः ।
क्वचिद्धास्यं क्वचिद्युद्धं क्वचित्कामः क्वचिद्वधः ॥ ७४ ॥
धर्मो धर्मप्रवृत्तानां कामाः[1] कामार्थसेविनाम् ।
निग्रहं दुर्विनीतानां मत्तानां दमनक्रिया ॥ ७५ ॥
क्लीबानामपि धृ(धू ?)नां वा उत्साहेश्वरमानिनाम्(?) ।
अबोधानां विबोधश्च वैदग्ध्यं विदुषामपि ॥ ७६ ॥
ईश्वराणां विलासश्च स्थैर्यं दुःखार्दितस्य च ।
सर्वोपजीविनामर्थो यतिरुद्विग्नचेतसाम् ॥ ७७ ॥
नानाभावोपसंपन्नं नानावस्थान्तरात्मकम् ।
लोकवृत्तानुकरणं नाट्यमेतन्मया कृतम् ॥ ७८ ॥
उत्तमाधममध्यानां नराणां कर्मसंश्रयम् ।
हितोपदेशजननं धृतिक्रीडासुखादिकृत् ॥ ७९ ॥
दुःखार्तानां समर्थानां शोकार्तानां तपस्विनाम् ।
विश्रान्तिजननं काले नाट्यमेतन्मया कृतम् ॥ ८० ॥
धर्म्यं यशस्यमायुष्यं हितं बुद्धिविवर्धनम् ।
लोकोपदेशजननं नाट्यमेतद्भविष्यति ॥ ८१ ॥
न तच्छ्रुतं न तच्छिल्पं न सा विद्या न सा कला ।
नासौ योगो न तत्कर्म यन्नाट्येऽस्मिन्न दृश्यते ॥ ८२ ॥
तन्नात्र मन्युः कर्तव्यो भवद्भिरमरान्प्रति ।
यन्नात्र करणं(?) नाट्यमेतत्तद्यन्मया कृतम् ॥ ८३ ॥
देवानामसुराणां च राज्ये(ज्ञ)लोकस्य चैव हि ।
ब्रह्मर्षीणां च विज्ञेयं नाट्यं वृत्तान्तदर्शकम् ॥ ८४ ॥
योऽयं स्वभावो लोकस्य सुखदुःखसमन्वितः[2] ।
सोऽङ्गाद्यभिनयोपेतो नाट्यमित्यभिधीयते ॥ ८५ ॥
वेदविद्येतिहासानामर्थानां परिकल्पनम् ।
विनोदकरणं लोके नाट्यमेतद्भविष्यति ॥ ८६ ॥

१. 'कामात्' क-ख. २. 'समन्वितम्' क.

एतस्मिन्नन्तरे देवान्सर्वानाह पितामहः ।
कुरु मन्त्रस्य(कुरुध्वमस्य ?) यजनं विधिवन्नाट्यमण्डपे ॥ ८७ ॥
बलिप्रदानैर्होमैश्च मन्त्रौषधिसमन्वितैः ।
भोज्यैर्भक्ष्यैश्च पानैश्च बलिः समुपकल्प्यताम् ॥ ८८ ॥
मर्त्यलोकगताः सर्वे शुभां पूजामवाप्स्यथ ।
अपूजयित्वा रङ्गं तु नैव प्रेक्षां प्रवर्तयेत् ॥ ८९ ॥
अपूजयित्वा रङ्गं तु यः प्रेक्षां कल्पयिष्यति ।
तस्य तन्निष्फलं ज्ञानं तिर्यग्योनिं च यास्यति ॥ ९० ॥
यज्ञेन संमतं ह्येतद्रङ्गदैवतपूजनम् ।
तस्मात्सर्वप्रयत्नेन कर्तव्यं नाट्ययोक्तृभिः ॥ ९१ ॥
तेत्र[1] कोऽर्थपतिर्वापि(?) यः पूजां न करिष्यति ।
न कारयिष्यत्यन्यैर्वा प्राप्स्यत्यपचयं तु सः ॥ ९२ ॥
यथाविधि यथादृष्टं यस्तु पूजां करिष्यति ।
स लप्स्यते शुभानर्थान्स्वर्गलोकं च यास्यति ॥ ९३ ॥
एवमुक्त्वा तु भगवान्द्रुहिणः सर्वदैवतैः ।
रङ्गपूजां कुरुष्वेति मामेवं समचोदयत् ॥ ९४ ॥
इति श्रीभारतीये नाट्यशास्त्रे नाट्योत्पत्तिः प्रथमोऽध्यायः ।

---

## द्वितीयोऽध्यायः ।

भरतस्य वचः श्रुत्वा प्रत्यूचुर्मुनयस्ततः ।
भगवञ्श्रोतुमिच्छामो यजनं रङ्गसंश्रयम् ॥ १ ॥
अथ वा याः क्रियास्तत्र लक्षणं यच्च पूजनम् ।
भविष्यद्भिर्नरैः कार्यं कथं तन्नाट्यवेश्मनि ॥ २ ॥
इहादिर्नाट्ययोगस्य नाट्यमण्डप एव हि ।
तस्मात्तस्यैव तावत्त्वं लक्षणं वक्तुमर्हसि ॥ ३ ॥

---

१. 'तत्' ख.

तेषां तु वचनं श्रुत्वा मुनीनां भरतोऽब्रवीत् ।
लक्षणं पूजनं चैव श्रूयतां नाट्यवेश्मनि ॥ ४ ॥
देवानां मानसी सृष्टिर्गृहेषूपवनेषु च ।
यथा भावाभिनिर्वर्त्याः सर्वे भावास्तु मानुषाः ॥ ५ ॥
नराणां यत्नतः कार्या लक्षणाभिहिताः क्रियाः ।
.................................................... ॥ ६ ॥
श्रूयतां तद्यथा यत्र कर्तव्यो नाट्यमण्डपः ।
तस्य वास्तु च पूजा च यथा योज्या प्रयत्नतः ॥ ७ ॥
इह प्रेक्षागृहं दृष्ट्वा श्रीमता विश्वकर्मणा ।
त्रिविधः संनिवेशश्च शास्त्रतः परिकल्पितः ॥ ८ ॥
विकृष्टश्चतुरस्रश्च त्र्यस्रश्चैव तु मण्डपः ।
तेषां त्रीणि प्रमाणानि ज्येष्ठं मध्यं तथावरम् ॥ ९ ॥
प्रमाणमेषां निर्दिष्टं हस्तदण्डसमाश्रयम् ।
शतं चाष्टौ चतुःषष्टिर्हस्ता द्वात्रिंशदेव च ॥ १० ॥
अष्टाधिकं शतं ज्येष्ठं चतुःषष्टिस्तु मध्यमम् ।
कनीयस्तु तथा वेश्म हस्ता द्वात्रिंशदिष्यते ॥ ११ ॥
देवानां तु भवेज्ज्येष्ठं नृपाणां मध्यमं भवेत् ।
शेषाणां प्रकृतीनां तु कनीयः संविधीयते ॥ १२ ॥
प्रेक्षागृहाणां सर्वेषां त्रिप्रकारो विधिः स्मृतः ।
विकृष्टश्चतुरस्रश्च त्र्यस्रश्चैव प्रयोक्तृभिः ॥ १३ ॥
कनीयस्तु स्मृतं त्र्यस्रं चतुरस्रं तु मध्यमम् ।
ज्येष्ठं विकृष्टं विज्ञेयं नाट्यवेदप्रयोक्तृभिः ॥ १४ ॥
प्रमाणं यच्च निर्दिष्टं लक्षणं विश्वकर्मणा ।
प्रेक्षागृहाणां सर्वेषां तच्चैव हि निबोधत ॥ १५ ॥
अणू रजश्च वालश्च लिक्षा यूका यवस्तथा ।
अङ्गुलं च तथा हस्तो दण्डश्चैव प्रकीर्तितः ॥ १६ ॥

---

१. श्लोकोऽयमग्रेऽपि वर्तते, तत्रैव चोचितः.

अणवोऽष्टौ रजः प्रोक्तं तान्यष्टौ वाल उच्यते ।
वालास्त्वष्टौ भवेल्लिक्षा यूका लिक्षाष्टकं भवेत् ॥ १७ ॥
यूकास्त्वष्टौ यवो ज्ञेयो यवास्त्वष्टौ तथाङ्गुलम् ।
अङ्गुलानि तथा हस्तश्चतुर्विंशतिरुच्यते ॥ १८ ॥
चतुर्हस्तो भवेद्दण्डो निर्दिष्टस्तु प्रमाणतः ।
अनेनैव प्रमाणेन वक्ष्याम्येषां विनिर्णयम् ॥ १९ ॥
चतुःषष्टिकरान्कुर्याद्दीर्घत्वेन तु मण्डपम् ।
द्वात्रिंशतं च विस्तारान्मर्त्यानां यो भवेदिह ॥ २० ॥
अत ऊर्ध्वं न कर्तव्यः कर्तृभिर्नाट्यमण्डपः ।
यस्मादव्यक्तभावं हि तत्र नाट्यं व्रजेदिति ॥ २१ ॥
मण्डपे विप्रकृष्टे तु पाठ्यमुच्चरितस्वरम् ।
अनिःसरणधर्मत्वाद्विस्वरत्वं भृशं व्रजेत् ॥ २२ ॥
यस्य लास्यगतो भावो नानादृष्टिसमन्वितः ।
सर्वेभ्यो विप्रकृष्टत्वाद्व्रजेदव्यक्ततां पराम् ॥ २३ ॥
प्रेक्षागृहाणां सर्वेषां तस्मान्मध्यममिष्यते ।
यावत्पाठ्यं च गेयं च तत्र श्रव्यतरं भवेत् ॥ २४ ॥
[प्रेक्षागृहाणां सर्वेषां त्रिप्रकारो विधिः स्मृतः ।
विकृष्टश्चतुरस्रश्च त्र्यस्रश्चैव प्रयोक्तृभिः ॥
कनीयस्तु स्मृतं त्र्यस्रं चतुरस्रं च मध्यमम् ।
ज्येष्ठं विकृष्टं विज्ञेयं नाट्यवेश्मप्रयोक्तृभिः ॥]
देवानां मानसी सृष्टिर्वनेषूपवनेषु च ।
यत्र भावाभिनिष्पन्नाः सर्वे भावा हि मानुषाः ॥ २५ ॥
तस्माद्देवकृतैर्भावैर्न विस्पर्धेत मानुषः ।
मानुषस्य तु गेयस्य संप्रवक्ष्यामि लक्षणम् ॥ २६ ॥
भूमेर्विभागं पूर्वं तु परीक्षेत प्रयोजकः ।
ततो वास्तुप्रमाणेन प्रारभेत शुभेच्छया ॥ २७ ॥

---

१. श्लोकद्वयं पुस्तकद्वयेऽपि पुनरुक्तमस्ति.

समा स्थिरा तु कठिना कृष्णा गौरी च या भवेत् ।
भूमिस्तत्रैव कर्तव्यः कर्तृभिर्नाट्यमण्डपः ॥ २८ ॥
प्रथमं शोधनं कृत्वा लाङ्गलेन समुत्कृषेत् ।
अस्थिकीलकपालानि तृणगुल्मांश्च शोधयेत् ॥ २९ ॥
शोधयित्वा वसुमतीं प्रमाणं निर्दिशेत्ततः ।
पुष्यनक्षत्रयोगेण शुक्लसूत्रं प्रसारयेत् ॥ ३० ॥
कार्पासं बाल्वजं वापि मौञ्जं वाल्कलमेव च ।
सूत्रं बुधैस्तु कर्तव्यं छेदो यस्य न विद्यते ॥ ३१ ॥
अर्धच्छिन्ने भवेत्सूत्रे स्वामिनो मरणं ध्रुवम् ।
त्रिभागच्छिन्नया रज्ज्वा राष्ट्रकोपो विधीयते ॥ ३२ ॥
छिन्नायां तु चतुर्भागे प्रयोक्तुर्नाश उच्यते ।
हस्तात्प्रभ्रष्टया वापि कश्चित्त्वपचयो भवेत् ॥ ३३ ॥
तस्मान्नित्यं प्रयत्नेन रज्जुग्रहणमिष्यते ।
कार्यं चैव प्रयत्नेन मानं नाट्यगृहस्य तु ॥ ३४ ॥
मुहूर्तेनानुकूलेन तिथ्या सुकरणेन तु ।
ब्राह्मणांस्तर्पयित्वा तु ततः सूत्रं प्रसारयेत् ॥ ३५ ॥
चतुःषष्टिकरान्कृत्वा द्विधाभूतान्पुनस्ततः ।
पृष्ठतो यो भवेद्भागो द्विधाभूतस्य तस्य तु ॥ ३६ ॥
तस्याप्यर्धार्धभागे तु रङ्गशीर्षं प्रकल्पयेत् ।
पश्चिमेऽथ विभागे च नेपथ्यगृहमादिशेत् ॥ ३७ ॥
विकल्प्य भागान्विधिवद्यथावदनुपूर्वशः ।
शुभे नक्षत्रयोगे च मण्डपस्य निवेशनम् ॥ ३८ ॥
शङ्खदुन्दुभिनिर्घोषैर्मृदङ्गपणवादिभिः ।
सर्वातोद्यैः प्रणदितैः[1] स्थापनं कार्यमेव तु ॥ ३९ ॥
उत्सार्याणि त्वनिष्टानि पाषण्ड्याश्रमिणस्तथा ।
कषायवसनाश्चैव विकलाश्चैव ये नराः ॥ ४० ॥

---

१. 'प्रणुदितैः' क-ख.

निशायां च बलिः कार्यो नानाभोजनसंश्रयः ।
गन्धपुष्पफलोपेतो दिशो दश समाश्रितः ॥ ४१ ॥
पूर्वेण शुक्लान्नयुतो नीलश्चैव तु दक्षिणः ।
पश्चिमेन बलिः पीतो रक्तश्चैवोत्तरेण तु ॥ ४२ ॥
यादृशं दिशि यस्यां तु दैवतं परिकल्पितम् ।
तादृशस्तत्र दातव्यो बलिर्मन्त्रपुरस्कृतः ॥ ४३ ॥
स्थापने ब्राह्मणेभ्यश्च दातव्यं घृतपायसम् ।
मधुपर्कस्तथा राज्ञे कर्तृभ्यश्च गुडोदनम् ॥ ४४ ॥
नक्षत्रेण तु कर्तव्यं मूलेन स्थापनं बुधैः ।
मुहूर्तेनानुकूलेन तिथ्या सुकरणेन च ॥ ४५ ॥
एवं तु स्थापनं कृत्वा भित्तिकर्म प्रयोजयेत् ।
भित्तिकर्मणि निर्वृत्ते स्तम्भानां स्थापनं ततः ॥ ४६ ॥
तिथिनक्षत्रयोगेण शुभेन करणेन च ।
आचार्येण सुयुक्तेन कार्यं सूर्योदये शुभे ॥ ४७ ॥
प्रथमे ब्राह्मणस्तम्भे सर्पिःसर्षपसंस्कृते ।
सर्वशुक्लो विधिः कार्यो दद्यात्पायसमेव च ॥ ४८ ॥
ततश्च क्षत्रियस्तम्भे वस्त्रमाल्यानुलेपनम् ।
सर्वं रक्तं प्रदातव्यं द्विजेभ्यश्च गुडोदनम् ॥ ४९ ॥
वैश्यस्तम्भे विधिः कार्यो दिग्भागे पश्चिमोत्तरे ।
पीतं सर्वं प्रदातव्यं द्विजेभ्यश्च घृताशनम् ॥ ५० ॥
शूद्रस्तम्भविधिः कार्यः सम्यक्पूर्वोत्तराश्रये ।
नीलप्रायः प्रयत्नेन कृशरा च द्विजाशनम् ॥ ५१ ॥
पूर्वोक्तब्राह्मणस्तम्भे शुक्लमाल्यानुलेपने ।
निक्षिपेत्कनकं मूले कर्णाभरणसंश्रयम् ॥ ५२ ॥
ताम्रं चाधः प्रदातव्यं स्तम्भे क्षत्रियसंज्ञके ।
वैश्यस्य स्तम्भमूले तु रजतं संप्रदापयेत् ॥ ५३ ॥

१. 'घृताशवं' क; 'मृताशवं' ख.

शूद्रस्य स्तम्भमूले तु दद्यादायसमेव च ।
शेषेष्वेव तु निक्षिप्तं स्तम्भमूले तथैव च ॥ ५४ ॥
मनोवर्णानि देयानि तथा भूतप्रियो बलिः[1] ।
आयसं ताम्र(तत्र) दातव्यं स्तम्भानां कुशलैरधः ॥ ५५ ॥
भोजने कृशरा चैव दातव्या ब्राह्मणाशनम् ।
एवं विधिपुरस्कारैः कर्तव्या मत्तवारु(र)णी ॥ ५६ ॥
रङ्गपीठं ततः कार्यं विधिदृष्टेन कर्मणा ।
रङ्गशीर्षं तु कर्तव्यं षड् दारु(र)कसमन्वितम् ॥ ५७ ॥
कार्यं द्वारद्वयं चात्र नेपथ्यगृहकस्य च ।
पूरणे मृत्तिका चात्र कृष्णा देया प्रयत्नतः ॥ ५८ ॥
लाङ्गलेन समुत्कृष्य निर्लोष्टतृणक(श)र्कराम् ।
लाङ्गले शुद्धवर्णौ[2] तु धुर्यौ योज्यौ प्रयत्नतः ॥ ५९ ॥
कर्तारः पुरुषाश्चात्र येऽङ्गदोषविवर्जिताः ।
अहीनाङ्गैश्च वोढव्या मृत्तिका पिटकैर्नवैः ॥ ६० ॥
एवंविधं[3] प्रकर्तव्यं रङ्गशीर्षं प्रयत्नतः ।
कूर्मपृष्ठं न कर्तव्यं मत्स्यपृष्ठं तथैव च ॥ ६१ ॥
शुद्धादर्शतलप्रख्यं रङ्गपीठं प्रशस्यते ।
रत्नानि चात्र देयानि पूर्वे वैज्रं[4] विचक्षणैः ॥ ६२ ॥
वैदूर्यं दक्षिणे पार्श्वे स्फटिकं पश्चिमे तथा ।
प्रवालमुत्तरे चैव मध्ये तु कनकं भवेत् ॥ ६३ ॥
एवं रङ्गशिरः कृत्वा दारुकर्म प्रयोजयेत् ।
ऊहप्रत्यूहसंयुक्तं नानाशिल्पप्रयोजितम् ॥ ६४ ॥
नानाभंजवरोपेतं (?) बहुव्यालोपशोभितम् ।
अैट्टालभञ्जिकाभिश्च[5] समन्तात्समलंकृतम् ॥ ६५ ॥

---

१. 'बलिं' क-ख. २. 'वर्णे' क-ख. ३. 'विधिः' क-ख. ४. 'वज्रविचक्षणैः' क-ख.
५. 'अट्टालं क-ख.

निर्यूहकुहु(ह)रोपेतं नानाग्रथितवेदिकम् ।
नानाविन्याससंयुक्तं यन्त्रजालगवाक्षकम् ॥ ६६ ॥
सुपीठधरणीयुक्तं कपोतालीसमाकुलम् ।
नानाकुट्टिमविन्यस्तैः स्तम्भैश्चाप्युपशोभितम् ॥ ६७ ॥
एवं काष्ठविधिं कृत्वा भित्तिकर्म प्रयोजयेत् ।
स्तम्भं वा नागदन्तं वा वातायनमथापि वा ॥ ६८ ॥
काष्ण्र्यायसं प्रतिद्वारं द्वारविद्धं न कारयेत् ।
कार्यः शैलगुहाकारो द्विभूमिर्नाट्यमण्डपः ॥ ६९ ॥
मन्दवातायनोपेतो निर्वातो धीरशब्दवान् ।
तस्मान्निवातः कर्तव्यः कर्तृभिर्नाट्यमण्डपः ॥ ७० ॥
गम्भीरस्वरता येन कुतपस्य भविष्यति ।
भित्तिकर्मविधिं कृत्वा भित्तिलेपं प्रदापयेत् ॥ ७१ ॥
सुधाकर्मविधिस्तस्य विधातव्यः[1] प्रयत्नतः ।
भित्तिष्वथ विलिप्तासु परिमृष्टासु सर्वतः ॥ ७२ ॥
समासु जातशोभासु चित्रकर्म प्रयोजयेत् ।
चित्रकर्मणि चालेख्याः पुरुषाः स्त्रीजनस्तथा ॥ ७३ ॥
लताबन्धाश्च कर्तव्याश्चरितं चात्मभोमजम् (?) ।
एवं विकृष्टं कर्तव्यं नाट्यवेश्म प्रयोक्तृभिः ॥ ७४ ॥
पुनरेव हि वक्ष्यामि चतुरस्रस्य लक्षणम् ।
समन्ततश्च कर्तव्या हस्ता द्वात्रिंशदेव तु ॥ ७५ ॥
शुभभूमिविभागस्थो नाट्यज्ञैर्नाट्यमण्डपः ।
यो विधिः पूर्वमुक्तस्तु लक्षणं मङ्गलानि च ॥ ७६ ॥
विकृष्टे तान्यशेषाणि चतुरस्रेऽपि कारयेत् ।
चतुरस्रं समं कृत्वा सूत्रेण प्रविभज्य च ॥ ७७ ॥
बाह्यतः सर्वतः कार्या भित्तिः श्लिष्टेष्टकादयः ।
तत्राभ्यन्तरतः कार्यं(र्या) रङ्गपीठं परि स्थिताः ॥ ७८ ॥

१. 'विधातव्यं' क-ख.

दश प्रयोक्तृभिः स्तम्भाः शस्ता मण्डपलक्षणे ।
स्तम्भानां बाह्यतश्चापि सोपानाकृतिपीठकम् ॥ ७९ ॥
इष्टकादारुभिः कार्यं प्रेक्षकाणां निवेशनम् ।
हस्तप्रमाणैरुत्सेधैर्भूमिभागसमुत्थितैः ॥ ८० ॥
रङ्गपीठावलोक्यं तु कुर्यादासनजं विधिम् ।
षडन्यानन्तरे चैव पुनः स्तम्भान्यथादिशम् ॥ ८१ ॥
विधिना धारयेत्तज्ज्ञो दृढान्मण्डपधारणा[न्] ।
अष्टौ स्तम्भान्पुनश्चैव तेषामुपरि कल्पयेत् ॥ ८२ ॥
विद्धास्यमष्टहस्तं[1] च पीठं तेषु ततो न्यसेत् ।
तत्र स्तम्भाः प्रदातव्यास्तज्ज्ञैर्मण्डपधारणे ॥ ८३ ॥
धारणीधारणास्ते च शालस्त्रीभिरलंकृताः ।
नेपथ्यगृहकं चैव ततः कार्यं प्रयत्नतः ॥ ८४ ॥
द्वारं चैकं भवेत्तत्र रङ्गपीठं प्रयत्नतः ।
जनप्रवेशनं चान्यदाभिमुख्येन कारयेत् ॥ ८५ ॥
रङ्गस्याभिमुखं कार्यं द्वितीयं द्वारमेव तु ।
अष्टहस्तं तु कर्तव्यं रङ्गपीठं प्रमाणतः ॥ ८६ ॥
चतुरस्रे(स्रं) समतलं वेदिकासमलंकृतम् ।
पूर्वप्रमाणनिर्दिष्टा कर्तव्या मत्तवारणी ॥ ८७ ॥
चतुःस्तम्भसमायुक्ता वेदिकायास्तु पार्श्वतः ।
समुन्नतं समं चैव रङ्गशीर्षं तु कारयेत् ॥ ८८ ॥
विकृष्टेरुन्नतं कार्यं चतुरस्रं समं तथा ।
एवमेतेन विधिना चतुरस्रं गृहं भवेत् ॥ ८९ ॥
अतःपरं प्रवक्ष्यामि त्र्यस्रगेहस्य लक्षणम् ।
त्र्यस्रं त्रिकोणं कर्तव्यं नाट्यवेश्म प्रयोक्तृभिः ॥ ९० ॥
मध्ये त्रिकोणमेवास्य रङ्गपीठं तु कारयेत् ।
द्वारं तेनैव कोणेन कर्तव्यं तस्य वेश्मनः ॥ ९१ ॥

---

१. 'विद्धास्य' क.

द्वितीयं चैव कर्तव्यं रङ्गपीठस्य पृष्ठतः ।
विधेयश्च पुरस्तस्य भित्तिस्तम्भसमाश्रयः ॥ ९२ ॥
स तु सर्वः प्रयोक्तव्यस्त्र्यस्त्रस्यापि प्रयोक्तृभिः ।
एवमेतेन विधिना कार्या नाट्यगृहा बुधैः ।
पुनरेषां प्रवक्ष्यामि पूजामेवं यथाविधि ॥ ९३ ॥
इति श्रीभारतीये नाट्यशास्त्रे मण्डपविधानं द्वितीयोऽध्यायः ।

---

## तृतीयोऽध्यायः ।

सर्वलक्षणसंपन्ने कृते नाट्यगृहे शुभे ।
गावो वसेयुः सप्ताहं सह जप्यपरैर्द्विजैः ॥ १ ॥
ततोऽधिवासयेद्वेश्म रङ्गपीठं तथैव च ।
मन्त्रपूतेन तोयेन प्रोक्षिताङ्गो निशागमे ॥ २ ॥
यथास्थानान्तरगतो दीक्षितः प्रयतः शुचिः ।
त्रिरात्रोपोषितो भूत्वा नायकोऽहतवस्त्रधृक् ॥ ३ ॥
नमस्कृत्य महादेवं सर्वलोकोद्भवोद्भवम् ।
जगत्पितामहं चैव विष्णुमिन्द्रं गुहं तथा ॥
सरस्वतीं च लक्ष्मीं च सिद्धिं मेधां धृतिं मतिम् ॥ ४ ॥
सोमं सूर्यं च मरुतो लोकपालांस्तथाश्विनौ ।
मित्रमग्निं स्वरान्वर्णान्रुद्रान्कालं कलिं तथा ॥ ५ ॥
मृत्युं च नियतिं चैव कालदण्डं तथैव च ।
विष्णुप्रहरणं चैव नागराजं च वासुकिम् ॥ ६ ॥
वज्रं विद्युत्समुद्राश्च गन्धर्वाप्सरसो मुनीन् ।
तथा नाट्यकुमारीश्च महाग्रामण्यमेव च ॥ ७ ॥
यक्षांश्च गुह्यकांश्चैव भूतसंघांस्तथैव च ।
एतांश्चान्यांश्च देवर्षीन्प्रणम्य रचिताञ्जलिः ॥ ८ ॥
यथास्थानान्तरगतान्समावाह्य ततो वदेत् ।
भगवद्भिर्निशायां नः कर्तव्यः स परिग्रहः ॥ ९ ॥

साहाय्यं चैव दातव्यमस्मिन्नाट्ये सहानुगैः ।
संपूज्य सर्वानेकत्र कुतपं संप्रपूज्य च ॥ १० ॥
जर्जराय प्रयुञ्जीत पूजां नाट्यप्रसिद्धये ।
महेन्द्रस्य प्रहरणं त्वं दानवनिषूदन ॥ ११ ॥
नमितस्तु सर्वदैवैः सर्वविघ्ननिबर्हण ।
नृपस्य विजयं शंस रिपूणां च पराजयम् ॥ १२ ॥
गोब्राह्मणशिवं चैव नाट्यस्य च विवर्धनम् ।
एवं कृत्वा यथान्यायं निदध्यान्नाट्यमण्डपे ॥ १३ ॥
निशायां तु प्रभातायां पूजनं प्रक्रमेदिह ।
आर्द्रायां वा मघायां वा याम्ये पूर्वासु च त्रिषु ॥ १४ ॥
अश्लेषामूलयोर्वापि कर्तव्यं रङ्गपूजनम् ।
आचार्येण तु युक्तेन शुचिना दीक्षितेन च ॥ १५ ॥
रङ्गस्योद्यापनं कार्यं देवतानां च पूजनम् ।
दिनान्ते दारुणे घोरे मुहूर्ते भूतदैवते ॥ १६ ॥
आचम्य तु यथान्यायं देवतायै निवेश(द)येत् ।
रक्ताः प्रतिसराः सूत्रं रक्तगन्धाश्च पूजिताः ॥ १७ ॥
रक्ताः सुमनसश्चैव यच्च रक्तफलं भवेत् ।
यवैः सिद्धार्थकैर्लाजैरक्षतैः शालितण्डुलैः ॥ १८ ॥
नागपुष्पस्य मूलेन चै(चा)तुषाभिः प्रियंगुभिः ।
एतैर्द्रव्यैर्युतं कार्यं देवतानां निवेशनम् ॥ १९ ॥
आलिखेन्मण्डपं चैव यथास्थानं यथाविधि ।
समन्ततश्च कर्तव्यं हस्ताः षोडशमण्डलम् ॥ २० ॥
द्वाराणि चात्र कुर्वीत विधानेन चतुर्दिशम् ।
मध्ये चैवात्र कर्तव्ये द्वारेखे तिर्यगूर्ध्वगे ॥ २१ ॥
तयोरुक्तविभागेन दैवतानि निवेशयेत् ।
पद्मोपविष्टं ब्रह्माणं तस्य मध्ये निवेशयेत् ॥ २२ ॥

आदौ निवेश्यो भगवान्सार्धं भूतगणैर्नवैः(भवः) ।
नारायणो महेन्द्रश्च स्कन्दः सूर्याश्विनौ शशी ॥ २३ ॥
सरस्वती च लक्ष्मीश्च श्रद्धा मेधा च पूर्वतः ।
पूर्वदक्षिणतो वह्निर्निवेश्यः स्वाहया सह ॥ २४ ॥
विश्वेदेवाः सगन्धर्वा रुद्राः सर्पगणास्तथा ।
दक्षिणेन निवेश्यास्तु यमो मित्रश्च सानुगः ॥ २५ ॥
पितॄन्पिशाचानुरगान्गुह्यकांश्च निवेशयेत् ।
नैर्ऋत्यां राक्षसांश्चैव भूतानि च निवेशयेत् ॥ २६ ॥
पश्चिमायां समुद्रांश्च वरुणं यादसां पतिम् ।
वायव्यायां दिशि तथा सप्तवायून्निवेशयेत् ॥ २७ ॥
तत्रैव विनिवेश्यस्तु गरुडः पक्षिभिः सह ।
उत्तरस्यां दिशि तथा धनदं संनिवेशयेत् ॥ २८ ॥
नाट्यस्य मातॄश्च तथा यक्षानथ सहानुगान् ।
स्तम्भे सनत्कुमारं तु दक्षिणे दक्षमेव च ॥ २९ ॥
ग्रामण्यमुत्तरे स्तम्भे पूजार्थं संनिवेशयेत् ।
अनेनैव विधानेन यथास्थानं यथाविधि ॥ ३० ॥
सप्रसादानि सर्वाणि दैवतानि निवेशयेत् ।
स्थाने स्थाने यथान्यायं विनिवेश्य तु देवताः ॥ ३१ ॥
तासां प्रकुर्वीत ततः पूजनं तु यथार्हतः ।
देवताभ्यस्तु दातव्यं सितमाल्यानुलेपनम् ॥ ३२ ॥
गन्धर्ववह्निसूर्येभ्यो रक्तमाल्यानुलेपनम् ।
गन्धान्माल्यांश्च धूपं च यथावदनुपूर्वशः ॥ ३३ ॥
दत्त्वा ततः प्रकुर्वीत पूजनं च यथार्हतः ।
ब्रह्माणं मधुपर्केण पायसेन सरस्वतीम् ॥ ३४ ॥
शिवविष्णुमहेन्द्राद्याः संपूज्या मोदकैरथ ।
घृतोदनेन हुतभुक्सोमार्कौ तु गुडोदनैः ॥ ३५ ॥

विश्वेदेवाः सगन्धर्वा मुनयो मधुपायसैः ।
यममित्रौ च संपूज्यावपूपैर्मोदकैस्तथा ॥ ३६ ॥
पितृन्पिशाचानुरगान्सर्पिःक्षीरेण तर्पयेत् ।
पक्वान्नेन तु मांसेन संपूज्यो रक्षसां गणः ॥ ३७ ॥
सुरया गुडधानेन मांसैश्च विधिनार्चयेत् ।
शेषा देवगणाः सर्वे पूपकाद्वारिकोत्करैः ॥ ३८ ॥
मत्स्यैश्च मृष्टभक्ष्यैश्च सागराः सरितस्तथा ।
सदृशं क वरुणायाथ दातव्यं घृतपायसम् ॥ ३९ ॥
नानामूलफलैश्चापि मुनीन्संप्रतिपूजयेत् ।
वायूंश्च पक्षिणश्चैव विचित्रैर्भक्ष्यभोजनैः ॥ ४० ॥
मातृर्नाट्यस्य सर्वास्तास्तथैव च महासुराः ।
आर्चा[1](?) कालोचितामिश्रैर्भक्ष्यभोज्यैश्च पूजयेत् ॥ ४१ ॥
एवमेवंविधं कार्यं नानाभोजनसंश्रयम् ।
पुनर्मन्त्रविधानेन बलिकर्म प्रचक्षते ॥ ४२ ॥
देवदेव महादेव सर्वलोकपितामह ।
मन्त्रपूतमिदं सर्वं प्रतिगृह्णीष्व मे बलिम् ॥ ४३ ॥
महादेव महायोगिन्देवदेव सुरोत्तम ।
संप्रगृह्य बलिं देव रक्ष विघ्नान्सदोत्थितान् ॥ ४४ ॥
देवदेवि महाभागे सरस्वति हरिप्रिये ।
प्रगृह्यतां बलिर्मातर्मया भक्त्या समर्पितः ॥ ४५ ॥
भावज्ञ(:) सर्वभूतानां लोकजीवन मारुत(:) ।
प्रगृह्यतां बलिर्देव मन्त्रपूतो मयार्पितः ॥ ४६ ॥
नानानिमित्तसंभूताः पौलस्त्याः सर्व एव ते ।
राक्षसेन्द्रा महासत्त्वाः प्रतिगृह्णीत मे बलिम् ॥ ४७ ॥
देव्यः सिद्धिवृद्धिलक्ष्म्ये(क्ष्म्यः) सर्वलोकनमस्कृताः ।
मन्त्रपूतमिमं देव्यः प्रतिगृह्णन्तु मे बलिम् ॥ ४८ ॥

---

१. 'आर्वा' ख.

सर्वग्रहाणां संपूज्य तेजोराशे दिवाकर ।
भक्त्या मयोद्यतो देव बलिः संप्रतिगृह्यताम् ॥ ४९ ॥
सर्वग्रहपते सोम द्विजराज जगत्प्रिय ।
प्रगृह्यतां बलिर्देव मन्त्रपूतो मयोद्यतः ॥ ५० ॥
महागणेश्वराः सर्वे नन्दीश्वरपुरोगमाः ।
प्रगृह्यतां बलिर्भक्त्या मया संप्रतिचोदितः ॥ ५१ ॥
नमः पितृभ्यः सर्वेभ्यः प्रतिगृह्णन्तु मे बलिम् ।
कामपाल नमो नित्यं यस्यायं ते विधिः कृतः ॥ ५२ ॥
नारदस्तुम्बरश्चैव विश्वावसुपुरोगमाः ।
प्रतिगृह्णन्तु मे सर्वे गन्धर्वा बलिमुद्यतम् ॥ ५३ ॥
यमो मित्रश्च भगवानीश्वरौ लोकपूजितौ ।
इमं मे प्रतिगृह्णीतां बलिं मन्त्रपुरस्कृतम् ॥ ५४ ॥
रसातलगतेभ्यश्च पन्नगेभ्यो नमोनमः ।
दिशन्तु सिद्धिं नाट्यस्य पूजिताः पापनाशनाः ॥ ५५ ॥
सर्वाम्भसां पतिर्देवो वरुणो हंसवाहनः ।
पूजितः [1]प्रतिमानस्तु(?) ससमुद्रनदीनदः ॥ ५६ ॥
वैनतेय महासत्त्व सर्वपक्षिपते विभो ।
प्रगृह्यतां बलिर्देव मन्त्रपूतो मयोदितः ॥ ५७ ॥
धनाध्यक्षो यक्षपतिर्लोकपालो धनेश्वरः ।
सगुह्यकः सयक्षश्च प्रतिगृह्णातु मे बलिम् ॥ ५८ ॥
नमोऽस्तु नाट्यमातृभ्यो ब्राह्म्याद्याभ्यो नमोनमः ।
सुमुखीभिः प्रसन्नाभिर्बलिरद्य प्रगृह्यताम् ॥ ५९ ॥
रुद्रप्रहरणं सर्वं प्रतिगृह्णातु मे बलिम् ।
विष्णुप्रहरणं चैव विष्णुभक्त्या मयोदितम् ॥ ६० ॥
तथा कृतान्तः कालश्च सर्वप्राणधनेश्वरः ।
मृत्युश्च नियतिश्चैव प्रतिगृह्णातु मे बलिम् ॥ ६१ ॥

---

१. 'प्रतिमानस्क' ख.

याश्चास्यां मत्तवारण्यां संश्रिता वास्तुदेवताः ।
मन्त्रपूतमिमं सम्यक्प्रतिगृह्णन्तु मे बलिम् ॥ ६२ ॥
अन्येऽपि ये देवगणा दिशो दश समाश्रिताः ।
दिव्यान्तरिक्षभौमाश्च तेभ्यश्चायं बलिः कृतः ॥ ६३ ॥
कुम्भं सलिलसंपूर्णं वर्णमालापुरस्कृतम् ।
स्थापयेद्रङ्गमध्ये तु सुवर्णं चात्र दापयेत् ॥ ६४ ॥
पूजयित्वा तु सर्वाणि दैवतानि यथाक्रमम् ।
जर्जरस्त्वभिसंपूज्यः स्यात्ततो विघ्नजर्जरः ॥ ६५ ॥
श्वेतं शिरसि वस्त्रं स्यान्नीलं रौद्रेऽथ पर्वणि ।
विष्णुपर्वणि पीतं स्याद्रक्तं स्कन्दस्य पर्वणि ॥ ६६ ॥
मूषपर्वणि (?) चित्रं तु देयं वस्त्रं हितार्थिना ।
सदृशं च प्रदातव्यं धूपमाल्यानुलेपनम् ॥ ६७ ॥
आतोद्यानि च सर्वाणि वासोभिरवगुण्ठयेत् ।
गन्धैर्माल्यैश्च धूपैश्च भक्ष्यभोज्यैश्च पूजयेत् ॥ ६८ ॥
सर्वमेवं विधिं कृत्वा गन्धमाल्यानुलेपनैः ।
विघ्नजर्जरणार्थं तु जर्जरं त्वभिमन्त्रयेत् ॥ ६९ ॥
अत्र विघ्नविनाशार्थं पितामहमुखैः सुरैः ।
निर्मितस्त्वं महावीर्य वज्रसत्रे महातनुः ॥ ७० ॥
शिरस्ते रक्षतु ब्रह्मा सर्वैर्देवगणैः सह ।
द्वितीयं च हरः पर्व तृतीयं तु जनार्दनः ॥ ७१ ॥
चतुर्थं च कुमारश्च पञ्चमं पन्नगोत्तमाः ।
नित्यं सर्वेऽपि पान्तु त्वां पुनस्त्वं च शिवो भव ॥ ७२ ॥
नक्षत्रेऽभिजितं त्वं तु सूर्यतोऽहितसूदनः (?) ।
जयं चाभ्युदयं चैव पार्थिवस्य समावह ॥ ७३ ॥
जर्जरं पूजयित्वा च बलिं सर्वं निवेद्य च ।
अग्नौ होमं ततः कुर्यान्मन्त्राहुतिपुरस्कृतः ॥ ७४ ॥

हुत्वा स एव दीप्ताभिरुल्काभिः परिमार्जनम् ।
नृपतेर्नर्तकीनां च कुर्याद्दीप्त्यभिवर्धनम् ॥ ७५ ॥
अभिद्योत्य सहातोद्यैर्नृपतिं नर्तकीं तथा ।
मन्त्रपूतेन तोयेन पुनरभ्युक्ष्य तान्वदेत् ॥ ७६ ॥
महाकुले प्रसूतास्ता गुणौघैश्चाप्यलंकृताः ।
यद्वो जन्मगुणोपेतं तद्वो भवतु नित्यशः ॥ ७७ ॥
सरस्वती धृतिर्मेधा ह्रीःश्रीर्लक्ष्मीर्धृतिर्मतिः ।
पान्तु वो मातरः सौम्याः सिद्धिदाश्च भवन्तु वः ॥ ७८ ॥
होमं कृत्वा यथान्यायं हविर्मन्त्रपुरस्कृतम् ।
भिद्यात्कुम्भं ततश्चैव नाट्याचार्यः प्रयत्नतः ॥ ७९ ॥
अभिन्ने तु भवेत्कुम्भे स्वामिनः शत्रुतो भयम् ।
भवेद्भिन्ने तु कुम्भे तु स्वामिनः शत्रुसंक्षयः ॥ ८० ॥
भिन्ने कुम्भे ततश्चैव नाट्याचार्यः प्रयत्नतः ।
प्रगृह्य दीपिकां दीप्तां सर्वरङ्गं प्रदीपयेत् ॥ ८१ ॥
क्ष्वेडितैः स्फोटितैश्चैव वल्गितैर्विप्रधावितैः ।
रङ्गमध्ये तु तां दीप्तां सशब्दां संप्रयोजयेत् ॥ ८२ ॥
शङ्खदुन्दुभिनिर्घोषैर्मृदङ्गैः पणवैस्तथा ।
सर्वातोद्यैः प्रणु(ण)दितै रङ्गयुद्धानि कारयेत् ॥ ८३ ॥
तत्र च्छिन्नं च भिन्नं च दारितं च सशोणितम् ।
कृत्तं प्रदीप्तमायस्तं निमित्तं सिद्धिलक्षणम् ॥ ८४ ॥
सम्यगिष्टस्तु रङ्गो वै स्वामिनः शुभमावहेत् ।
पुरस्य बालवृद्धस्य तथा जनपदस्य च ॥ ८५ ॥
दुरिष्टस्तु तथा रङ्गो दैवतैर्दुरधिष्ठितः ।
नाट्यविध्वंसनं कुर्यान्नृपस्य च तथाशुभम् ॥ ८६ ॥
य एवं विधिमुत्सृज्य यथेष्टं संप्रयोजयेत् ।
प्राप्नोत्यपचयं शीघ्रं तिर्यग्योनिं च गच्छति ॥ ८७ ॥

यज्ञेन संमतं ह्येतद्रङ्गदैवतपूजनम् ।
अपूजयित्वा रङ्गं तु नैव प्रेक्ष्यं प्रयोजयेत् ॥ ८८ ॥
पूजिताः पूजयन्त्येते मानिता मानयन्ति च ।
तस्मात्सर्वप्रयत्नेन कर्तव्यं रङ्गपूजनम् ॥ ८९ ॥
न तथासु(शु) दहत्यग्निः प्रभञ्जनसमीरितः ।
यथा ह्यपप्रयोगस्तु प्रयुक्तो दहति क्षणात् ॥ ९० ॥
[1]शास्त्रज्ञेन विनीतेन शुचिना दीक्षितेन च ।
नाट्याचार्येण शान्तेन कर्तव्यं रङ्गपूजनम् ॥ ९१ ॥
स्थानभ्रष्टं तु यो दद्याद्बलिमुद्विग्नमानसः ।
मन्त्रहीनो यथा होता प्रायश्चित्ती भवेत्तु सः ॥ ९२ ॥
इत्ययं यो विधिर्दृष्टो रङ्गदैवतपूजने ।
नवे नाट्यगृहे कार्यः प्रेक्षायां च प्रयोक्तृभिः ॥ ९३ ॥

इति श्रीभारतीये नाट्यशास्त्रे रङ्गदैवतपूजाविधानं नाम तृतीयोऽध्यायः ।

---

## चतुर्थोऽध्यायः ।

एवं तु पूजनं कृत्वा मया प्रोक्तं पितामह ।
आज्ञापय विभो क्षिप्रं कः प्रयोगः प्रयुज्यताम् ॥ १ ॥
ततोऽस्म्युक्तो भगवता योजयामृतमन्थनम् ।
एतदुत्साहजननं सर्वप्रीतिकरं तथा ॥ २ ॥
योऽयं समस्तकार्यस्य धर्मकामार्थसाधकः ।
मया प्रग्रथितो विद्वन्स प्रयोगः प्रयुज्यताम् ॥ ३ ॥
कस्यचित्त्वथ कालस्य मामाहाम्बुजसंभवः ।
नाट्यं संदर्शयामोऽन्यं त्रिनेत्राय महात्मने ॥ ४ ॥
ततः सार्धं सुरैर्गत्वा वृषभाङ्कनिवेशनम् ।
समभ्यर्च्य शिवं पश्चादुवाचेदं पितामहः ॥ ५ ॥

---

१. 'शास्त्रज्ञे च' क-ख.

मया समवकारस्तु योऽयं सृष्टः सुरोत्तम ।
श्रवणे दर्शने चास्य प्रसादं कर्तुमर्हसि ॥ ६ ॥
पश्याम इति देवेशो द्रुहिणं वाक्यमब्रवीत् ।
ततो मामाह भगवान्सज्जो भव महामते ॥ ७ ॥
ततो हिमवतः पृष्ठे नानानगसमाकुले ।
बहुचूतद्रुमाकीर्णे रम्यकंदरनिर्झरे ॥ ८ ॥
पूर्वरङ्गे कृते पूर्वं तत्रायं द्विजसत्तमाः ।
तथा त्रिपुरदाहस्थो हि(डि)मसंज्ञः प्रयोजितः ॥ ९ ॥
ततो भूतगणा हृष्टाः कर्मभावानुकीर्तनात् ।
महादेवश्च सुप्रीतः पितामहमथाब्रवीत् ॥ १० ॥
ततो नाट्यमिदं सम्यक्त्वया दृष्टं महामते (?) ।
यशस्यं च शुभार्थं च पुण्यं बुद्धिविवर्धनम् ॥ ११ ॥
मयापीदं स्मृतं नित्यं संध्याकालेषु नृत्यता ।
नानाकरणसंयुक्तैरङ्गहारैर्विभूषितम् ॥ १२ ॥
पूर्वरङ्गविधावस्मिंस्त्वया सम्यक्प्रयोज्यताम् ।
महागीतेषु चैवार्ताः (?) सम्यक्त्वमभिनेष्यसि ॥ १३ ॥
यश्चायं पूर्वरङ्गस्तु त्वया शुद्धः प्रयोजितः ।
एतद्विमिश्रितश्चायं चित्रो नाम भविष्यति ॥ १४ ॥
श्रुत्वा महेश्वरवचः प्रत्युक्तं च स्वयंभुवा ।
प्रयोगमङ्गहाराणामाचक्ष्व सुरसत्तम ॥ १५ ॥
ततस्तण्डुं समाहूय प्रोक्तवान्भुवनेश्वरः ।
प्रयोगमङ्गहाराणामाचक्ष्व भरताय वै ॥ १६ ॥
ततो ये तण्डुना प्रोक्तास्त्वङ्गहारा महात्मना ।
तांश्च करणसंयुक्तान्व्याख्यास्यामि सरेचकान् ॥ १७ ॥
स्थिरहस्तोऽङ्गहारस्तु तथा पर्यस्तकः स्मृतः ।
सूचीविद्धस्तथा चैव ह्यपविद्धस्तथैव च ॥ १८ ॥

आक्षिप्तकस्तु विज्ञेयस्तथा चोद्यद्वितः[1](?) स्मृतः ।
विष्कम्भश्चैव संप्रोक्तस्तथा चैवापराजितः ॥ १९ ॥
विष्कम्भाङ्गसृतश्चैव मत्ताक्रीडस्तथैव च ।
स्वस्तिको रचितश्चैव पार्श्वस्वस्तिक एव च ॥ २० ॥
वृश्चिकश्चैव संप्रोक्तो चमरश्च तथापरः ।
मत्तस्खलितकश्चैव मदाद्विलसतस्तथा(?) ॥ २१ ॥
गतिमण्डलो विज्ञेयः परिच्छिन्नस्तथैव च ।
[2]परिवृत्तरेचितः स्यात्तथा वैशाख एव च ॥ २२ ॥
परावृत्तोऽथ विज्ञेयस्तथा चैव [3]ढ्वलाठकः ।
पार्श्वच्छेदोऽथ संप्रोक्तो विद्युद्भ्रान्तस्तथैव च ॥ २३ ॥
उद्वृत्तकस्तथैव [स्यात्] स्यादालीढस्तथैव च ।
रेचितश्चापि विज्ञेयस्तथैवाच्छुरितः [स्मृतः] ॥ २४ ॥
आक्षिप्तरेचितश्चैव संभ्रान्तश्च तथापरः ।
अपसर्पस्तु विज्ञेयस्तथा चार्धनिकुट्टकः ॥ २५ ॥
द्वात्रिंशदेते संप्रोक्ता अङ्गहारास्तु नामतः ।
एतेषां तु प्रवक्ष्यामि प्रयोगं करणाश्रयम् ॥ २६ ॥
हस्तपादप्रचारश्च यथा योज्यः प्रयोक्तृभिः ।
अङ्गहारप्रयोगेषु करणेषु च वै द्विजाः ॥ २७ ॥
सर्वेषामङ्गहाराणां निष्पत्तिः करणैर्यतः ।
तान्यतः संप्रवक्ष्यामि नामतः कर्मतस्तथा ॥ २८ ॥
हस्तपादसमायोगो[4] नृत्यस्य करणं भवेत् ।
द्वे नृत्यकरणे चैव भवतो नृत्त्यमातृका ॥ २९ ॥
द्वाभ्यां त्रिचतुराभिर्वाप्यङ्गहारस्तु मातृभिः ।
त्रिभिः कलापकं चैव चतुर्भिः षण्डकं तथा ॥ ३० ॥
पञ्चैव करणानि स्युः संघातक इति स्मृतः ।
षड्भिर्वा सप्तभिर्वापि अष्टभिर्नवभिस्तथा ॥ ३१ ॥

१. 'वीद्याद्वितः' ख. २. 'वृश्चिपरिवृत्त' क-ख. ३. 'ढ्वलाटकः' ख. ४. 'योगि' ख.

करणैरिह संयुक्तो अङ्गहार इति स्मृतः।
एतेषामेव वक्ष्यामि हस्तपादविकल्पनम्॥ ३२॥
तलपुष्पपुटं पूर्वं वर्तितं चलितोरु च।
अपविद्धं समनखं लीनं स्वस्तिकरेचितम्॥ ३३॥
मण्डलं स्वस्तिकं चैव निकुट्टकमथापि च।
तथैवार्धनिकुट्टं च कटिच्छिन्नं[1] तथैव च॥ ३४॥
अर्धरेचितकं चैव वक्षःस्वस्तिकमेव च।
उन्मत्तं[2] स्वस्तिकं चैव पृष्ठस्वस्तिकमेव च॥ ३५॥
दिक्स्वस्तिकमलातं च तथैव च कटीसमम्।
आक्षिप्तरेचितं चैव विक्षिप्ताक्षिप्तकं[3] तथा॥ ३६॥
अर्धस्वस्तिकमुद्दिष्टमञ्चितं च तथापरम्।
भुजंगत्रासितं प्रोक्तमूर्ध्वजानु तथैव च॥ ३७॥
निकुञ्चितमतल्लि च अर्धमतल्लि चैव हि।
स्याद्रेचकनिकुट्टं च तथा पादापविद्धकम्॥ ३८॥
वलितं घूर्णितं चैव ललितं च तथापरम्।
दण्डपक्षं तथा चैव भुजंगत्रस्तरेचितम्॥ ३९॥
नूपुरं चैव संप्रोक्तं तथा वैशाखरेचितम्।
भ्रमरं चतुरं चैव भुजंगाञ्चितमेव च॥ ४०॥
दण्डरेचितकं चैव तथा वृश्चिककुट्टनम्।
कटिभ्रान्तं तथा चैव लतावृश्चिकमेव च॥ ४१॥
छिन्नं च करणं प्रोक्तं तथा वृश्चिकरेचितम्।
वृश्चिकं व्यंसितं चैव तथा पार्श्वनिकुट्टकम्॥ ४२॥
ललाटतिलकं क्रान्तं कुञ्चितं वक्रमण्डलम्।
उरोमण्डलमाक्षिप्तं तथा तलविलासितम्॥ ४३॥
अर्गलं चाथ विक्षिप्तमावर्तं दोलपादकम्।
विवृत्तं विनिवृत्तं च पार्श्वक्रान्तं निशुम्भितम्॥ ४४॥

---

१. 'छत्रं' ख. २. 'ननांतं' ख. ३. 'विक्षिप्तकं तथा' ख.

विद्युद्भ्रान्तमतिक्रान्तं विवर्तितकमेव च ।
गजक्रीडितकं चैव तलसंस्फोटितं तथा ॥ ४५ ॥
गरुडप्लुतकं चैव गण्डसूचि तथापरम् ।
परिवृत्तं समुद्दिष्टं पार्श्वजानु तथैव च ॥ ४६ ॥
गृध्रावलीनकं चैव सन्नतं सूच्यथापि च ।
अर्धसूचीति करणं सूचीविद्धं तथैव च ॥ ४७ ॥
अपक्रान्तं च संप्रोक्तं मयूरललितं तथा ।
सर्पितं दण्डपादं च हरिणप्लुतमेव च ॥ ४८ ॥
प्रेङ्खोलितं नितम्बं च [1]स्खलितं करिहस्तकम् ।
प्रसर्पितकमुद्दिष्टं सिंहविक्रीडितं तथा ॥ ४९ ॥
सिंहकम्पितमुद्वृत्तं तथापसृतमेव च ।
तलघट्टितकं चैव जनितं च बहिस्त्रिकम् ॥ ५० ॥
निवेशं मौलिकाक्रीडमूरूद्वृत्तं तथैव च ।
मदस्खलितकं चैव विष्णुक्रान्तमथापि च ॥ ५१ ॥
संक्रान्तमथ विष्कम्भमुद्घाटितमथापि च ।
वृषभक्रीडितं चैव लोलितं च तथापरम् ॥ ५२ ॥
सामापसर्पितं चैव शकटास्यं तथैव च ।
रङ्गावतरणं चैवेत्युक्तमष्टाधिकं शतम् ॥ ५३ ॥
अष्टोत्तरशतं चैतत्करणानां मयोदितम् ।
नृत्ये युद्धे नियुद्धे च तथा गतिपरिक्रमे ॥ ५४ ॥
[2]गतिचारे प्रवक्ष्यामि युद्धचारीविकल्पनम् ।
यत्र तत्रापि संयोज्यमाचार्यैर्नाट्यशक्तितः ॥ ५५ ॥
प्रायेण करणे कार्यो वामो वक्षःस्थितः करः ।
चरणस्यानुगश्चापि दक्षिणस्तु भवेत्करः ॥ ५६ ॥
हस्तपादप्रचारं तु कटीपार्श्वोरुसंयुतम् ।
उरः पृष्ठोदरोपेतं वक्ष्यमाणं निबोधत ॥ ५७ ॥

---

१. 'खलितं' क. २. 'मतिचारे' क.

यानि स्थानानि याश्चार्यो नृत्तहस्तास्तथैव च ।
सा मातृकेति विज्ञेया तद्योगात्करणं भवेत् ॥ ५८ ॥
वामे पुष्पपुटः पार्श्वे पादोऽग्रतलसंचरः ।
तथा च संनतं पार्श्वे तलपुष्पपुटं भवेत् ॥ ५९ ॥
कुञ्चितो(ते) मणिबन्धे च व्यावर्तपरिवर्तिते ।
हस्तौ निपतितौ चोर्वोर्वर्तितं करणं तु तत् ॥ ६० ॥
सु(शु)कतुण्डौ यदा हस्तौ व्यावर्तपरिवर्तितौ ।
उ(ऊ)रौ च वलितौ यस्मिंश्चलितोरु तदुच्यते ॥ ६१ ॥
आवर्त्य शुकतुण्डाख्यमूरुपृष्ठे निपातयेत् ।
वामहस्तश्च वक्षःस्थो ह्यपविद्धं तु तद्भवेत् ॥ ६२ ॥
श्लिष्टौ समनखौ पादौ करौ चापि प्रलम्बितौ ।
देहः स्वाभाविको यत्र भवेत्समनखं तु तत् ॥ ६३ ॥
पताकाञ्जलिवक्षस्थं प्रसारितशिरोधरम् ।
निकुञ्चितांसकूटं च तल्लीनं करणं स्मृतम् ॥ ६४ ॥
स्वस्तिकौ रेचितौ विद्धौ विश्लिष्टौ कटिसंस्थितौ ।
यत्र तत्करणं ज्ञेयं बुधैः स्वस्तिकरेचितम् ॥ ६५ ॥
स्वस्तिकौ तु करौ कृत्वा प्राङ्मुखोर्ध्वतलौ समौ ।
तथा च मण्डलं स्थानं मण्डलं स्वस्तिकं हि तत् ॥ ६६ ॥
निकुट्टितौ यदा हस्तौ स्वबाहुशिरसोऽन्तरे ।
पादौ निकुट्टितं चैव विज्ञेयं चैव कुट्टकम् ॥ ६७ ॥
अञ्चितौ बाहुशिखरौ हस्तस्त्वा(स्त्व)भिमुखाङ्गुलिः ।
निकुट्टितार्धभागेन भवेदर्धनिकुट्टितम् ॥ ६८ ॥
पर्यायसः(शः) कटी छिन्ना बाह्वोः शिरसि पल्लवे ।
पुनः पुनश्च करणं कटिच्छिन्नं तु तद्भवेत् ॥ ६९ ॥
अपविद्धकरः सूच्या पादश्चैव निकुट्टितः ।
संनतं यत्र पार्श्वं तु तद्भवेदर्धरेचितम् ॥ ७० ॥

१. 'पुरौ' क.

स्वस्तिकौ चरणौ यत्र करौ वक्षःस्थरेचितौ ।
निकुञ्चितं तथा वक्षो वक्षःस्वस्तिकमेव च ॥ ७१ ॥
अञ्चितेन तु पादेन रेचितौ तु करौ तदा ।
उन्मत्तं करणं तत्तु विज्ञेयं नृत्यकोविदैः ॥ ७२ ॥
हस्ताभ्यामथ पादाभ्यां स्वस्तिकौ चरणौ यदा ।
अपक्रान्तार्धसूचीभ्यां तत्पृष्ठस्वस्तिकं भवेत् ॥ ७३ ॥
पार्श्वयोरग्रतश्चैव यत्र श्लिष्टकृतो भवेत् ।
स्वस्तिको हस्तपादाभ्यां तद्दिक्स्वस्तिकमुच्यते ॥ ७४ ॥
अलातं[1] चरणं कृत्वा व्यंसयेद्दक्षिणं करम् ।
ऊर्ध्वजानुक्रमं कुर्यादलातकमिति स्मृतम् ॥ ७५ ॥
स्वस्तिकापसृतः पादः करौ नाभिकटिस्थितौ ।
पार्श्वमुद्वाहितं चैव करणं तत्कटीसमम् ॥ ७६ ॥
हस्तौ हृदि भवेद्वामः सव्यः स्या[त्] क्षिप्तरेचितः ।
रेचितश्चापविद्धश्च तत्स्यादाक्षिप्तरेचितम् ॥ ७७ ॥
विक्षिप्तं हस्तपादं च तस्यैवाक्षेपणं पुनः ।
यत्र तत्करणं ज्ञेयं विक्षिप्ताक्षिप्तकं द्विजाः ॥ ७८ ॥
स्वस्तिकौ चरणौ कृत्वा कटिहस्तं च दक्षिणम् ।
वक्षःस्थाने तथा वाममर्धस्वस्तिकमादिशेत् ॥ ७९ ॥
व्यावृत्तपरिवृत्तस्तु स एव तु करो यदा ।
अञ्चितो नासिकाग्रे तु तदञ्चितमुदाहृतम् ॥ ८० ॥
कुञ्चितं पादमुत्क्षिप्य त्र्यस्रमूरुं प्रवर्तयेत् ।
कटीजानुविवर्तश्च भुजंगत्रासितं भवेत् ॥ ८१ ॥
कुञ्चितं पादमुत्क्षिप्य जानुमूर्ध्वं प्रसारयेत् ।
प्रयोगवशगौ हस्तावूर्ध्वजानु प्रकीर्तितम् ॥ ८२ ॥
वृश्चिकं चरणं कृत्वा करं पार्श्वे निकुञ्चयेत् ।
नासाग्रे दक्षिणं चैव ज्ञेयं तत्तु[2] निकुञ्चितम् ॥ ८३ ॥

---

१. 'अजातं' ख. २. 'तनु' ख.

वामदक्षिणपादाभ्यां घूर्णमानोपसर्पणैः ।
उद्वेष्टितापविद्धैश्च हस्तैर्मतल्लयुदाहृतम् ॥ ८४ ॥
स्खलितापसृतौ पादौ वामहस्तश्च रेचितः ।
सव्यहस्तः कटिस्थः स्यादर्धमतल्लि तत्स्मृतम् ॥ ८५ ॥
रेचितो दक्षिणो हस्तः पादः सव्यो निकुट्टितः ।
दोला चैव भवेद्वामस्तद्रेचकनिकुट्टके ॥ ८६ ॥
कार्यौ नाभिमुखे हस्तौ प्राङ्मुखौ खटिकामुखौ ।
सूचीविद्धावपक्रान्तौ पादौ पादापविद्धके ॥ ८७ ॥
अपविद्धो भवेद्धस्तः सूचीपादस्तथैव च ।
तथा त्रिकं विवृत्तं च स्ख(व)लितं नाम तद्भवेत् ॥ ८८ ॥
वर्तिताघूर्णितः सव्यो हस्तो वामश्च दोलितः ।
स्वस्तिकापसृतः पादः करणं घूर्णितं हि तत् ॥ ८९ ॥
करिहस्तो भवेद्वामो दक्षिणश्च प्रवर्तितः ।
बहुशः कुट्टितः पादो ज्ञेयं तल्ललितं बुधैः ॥ ९० ॥
दोलितो वामकः पादः करौ चोद्वेष्टितौ तथा ।
त्रिकस्य वलनाच्चैव ज्ञेयं भ्रमरकं तु तत् ॥ ९१ ॥
अञ्चितः स्यात्करो वामः सव्यश्चतुर एव च ।
दक्षिणः कुट्टितः पादश्चतुरं तत्प्रकीर्तितम् ॥ ९२ ॥
भुजंगत्रासितः पादो रेचितो दक्षिणः करः ।
लताख्यश्च करो वामो भुजंगाञ्चितके भवेत् ॥ ९३ ॥
विक्षिप्तं हस्तपादं च समन्ताद्यत्र दण्डवत् ।
रुयातेन तद्धि करणं ज्ञेयं दण्डकरेचितम् ॥ ९४ ॥
वृश्चिकं चरणं कृत्वा द्वावप्यवनिकुट्टितौ ।
विधातव्यौ करौ तत्तु ज्ञेयं वृश्चिककुट्टितम् ॥ ९५ ॥
सूचीं कृत्वापविद्धं च दक्षिणं चरणं न्यसेत् ।
रेचिता च कटिर्यत्र कटिभ्रान्तं तदुच्यते ॥ ९६ ॥

१. 'पूर्ण' क.

अञ्चितः पृष्ठतः पादः कुञ्चितोऽर्धलताङ्गुलिः ।
लताख्यश्च करो वामस्तल्लतावृश्चिकं भवेत् ॥ ९७ ॥
अलपद्मः कटीदेशे छिन्नपर्यायशः कटीम् (?) ।
वैशाखस्थानकेनेह तच्छिन्नं करणं भवेत् ॥ ९८ ॥
वृश्चिकं चरणं कृत्वा स्वस्तिकौ च करावुभौ ।
रेचितौ विप्रकीर्णौ च कार्यौ वृश्चिकरेचिते ॥ ९९ ॥
बाहुशीर्षाञ्चितौ हस्तौ पादः पृष्ठाञ्चितस्तथा ।
दूरसंनतपृष्ठं च वृश्चिकं तत्प्रकीर्तितम् ॥ १०० ॥
आलीढं स्थानकं यत्र करौ वक्षसि रेचितौ ।
ऊर्ध्वाधो विप्रकीर्णौ च व्यंसितं करणं तु तत् ॥ १०१ ॥
हस्तौ तु स्वस्तिकौ पार्श्वे तथा पादौ निकुट्टितः(तौ) ।
यत्र तत्करणं ज्ञेयं बुधैः पार्श्वनिकुट्टकम् ॥ १०२ ॥
वृश्चिकं चरणं कृत्वा पादस्याङ्गुष्ठकेन तु ।
ललाटे तिलकं कुर्याल्ललाटतिलकं तु तत् ॥ १०३ ॥
पृष्ठतः कुञ्चितं कृत्वा व्यतिक्रान्तक्रमं ततः ।
आक्षिप्तौ च करौ कार्यौ क्रान्तके करणे द्विजाः ॥ १०४ ॥
आद्यः पादो नतः कार्यो सव्यहस्तश्च कुञ्चितः ।
उत्तानो वामपार्श्वस्थस्तत्कुञ्चितमुदाहृतम् ॥ १०५ ॥
प्रलम्बिताभ्यां बाहुभ्यां यद्गात्रेणानतेन च ।
अभ्यन्तरापविद्धः स्यात्तज्ज्ञेयं चक्रमण्डलम् ॥ १०६ ॥
स्वस्तिकापसृतौ पादौ पादावर्धक्रमौ यदा ।
उरोमण्डलकौ हस्तावुरोमण्डलकं तु तत् ॥ १०७ ॥
आक्षिप्तहस्तपादौ तु क्रियेते यत्र वेगतः ।
आक्षिप्तं करणं नाम विज्ञेयं तद्द्विजोत्तमाः ॥ १०८ ॥
ऊर्ध्वाङ्गुलितलः पादः पार्श्वेनोर्ध्वं प्रसारितः ।
प्रकुर्यादञ्चिततलौ हस्तौ तलविलासिते ॥ १०९ ॥

पृष्ठतः प्रसृतः पादो द्वौ तलावूर्ध्वमेव च ।
तस्य चैवानुगो हस्तः पुरतस्त्वर्गलं तु तत् ॥ ११० ॥
विक्षिप्तं हस्तपादं च पृष्ठतः पार्श्वतोऽपि वा ।
एकमार्गगतं यत्र तद्विक्षिप्तमुदाहृतम् ॥ १११ ॥
प्रसार्य कुञ्चितं पादं पुर आवर्तयेद्द्रुतम् ।
प्रयोगवशगौ हस्तौ तदावर्तमुदाहृतम् ॥ ११२ ॥
कुञ्चितं पादमुत्क्षिप्तं पार्श्वात्पार्श्वं तु दोलयेत् ।
प्रयोगवशगौ हस्तौ तदुक्तं दोलपादकम् ॥ ११३ ॥
आक्षिप्तं चक्रपादं च त्रिकं च परिवर्तयेत् ।
रेचितौ च तथा हस्तौ विवृते करणे द्विजाः ॥ ११४ ॥
सूचीविद्धं विधायाथ त्रिकं तु विनिवर्तयेत् ।
करौ च रेचितौ कार्यौ विनिवृत्ते द्विजोत्तमाः ॥ ११५ ॥
पार्श्वक्रान्तक्रमं कृत्वा पुरस्तादथ पातयेत् ।
प्रयोगवशगौ हस्तौ पार्श्वक्रान्तं तदुच्यते ॥ ११६ ॥
पृष्ठतः कुञ्चितः पादो वक्षश्चैव समुन्नतम् ।
तिलके च करः स्थाप्यस्तन्निशुम्भितमुच्यते ॥ ११७ ॥
पृष्ठतो वलितं पादं शिरोघृष्टं प्रसारयेत् ।
सर्वतो मण्डलाबद्धं विद्युद्भ्रान्तं तदुच्यते ॥ ११८ ॥
अतिक्रान्तं क्रमं कृत्वा पुरस्तात्संप्रयोजयेत् ।
प्रयोगवशगौ हस्तावतिक्रान्ते प्रकीर्तितौ ॥ ११९ ॥
आक्षिप्तं हस्तपादं च त्रिकं चैव विवर्तितम् ।
द्वितीयो रेचितो हस्तो विवर्तितकमेव तत् ॥ १२० ॥
कर्णाञ्चितकरो वामो लताहस्तश्च दक्षिणः ।
दोलापादस्तथा चैव गजक्रीडितके भवेत् ॥ १२१ ॥
द्रुतमुत्क्षिप्य चरणं पुरस्तादथ पातयेत् ।
तलसंस्फोटितौ हस्तौ तलसंस्फोटिते स्मृतौ ॥ १२२ ॥

पृष्ठप्रसारितं(तौ) पादौ लतारेचितकौ करौ ।
समुन्नतं शिरश्चैव गरुडप्लुतके भवेत् ॥ १२३ ॥
सूचीपादोन्नतं पार्श्वमेको वक्षःस्थितः करः ।
द्वितीयश्चाञ्चितो गण्डो गण्डसूचि तदुच्यते ॥ १२४ ॥
एकः समस्थितः पाद ऊरुपृष्ठे स्थितोऽपरः ।
मुष्टिहस्तश्च वक्षःस्थः पार्श्वजानु तदुच्यते ॥ १२५ ॥
पृष्ठप्रसारितः पादः किंचिदञ्चितजानुकः ।
यत्र प्रसारितौ बाहू तत्स्याद्गृध्रावलीनकम् ॥ १२६ ॥
उत्प्लुत्य चरणौ कार्यावग्रतः स्वस्तिकौ स्थितौ ।
संनतौ च तथा हस्तौ संनतं तदुदाहृतम् ॥ १२७ ॥
कुञ्चितं पादमुत्क्षिप्य कुर्यादग्रस्थितं भुवि ।
प्रयोगवशगौ हस्तौ तत्सूचि परिकीर्तितम् ॥ १२८ ॥
वामः पादः शिरोदेशे सूचीपादश्च दक्षिणः ।
यत्र तत्करणं ज्ञेयमर्धसूचीति नामतः ॥ १२९ ॥
पादसूच्या यदा पादो द्वितीयस्तु प्रविध्यते ।
कटीदेशस्थितौ हस्तौ सूचीविद्धं तदुच्यते ॥ १३० ॥
कृत्वोरुवलितं पादमपक्रान्तक्रमं न्यसेत् ।
प्रयोगवशगौ हस्तावपक्रान्तं तदुच्यते ॥ १३१ ॥
वृश्चिकं करणं कृत्वा रेचितौ च तथा करौ ।
तथा त्रिकं विवृत्तं च मयूरललिते भवेत् ॥ १३२ ॥
अन्तरापसृतौ पादौ शिरश्च परिवाहितम् ।
रेचितौ च तथा हस्तौ तत्सर्पितमुदाहृतम् ॥ १३३ ॥
नूपुरं चरणं कृत्वा दण्डपादं प्रसारयेत् ।
क्षिप्तविद्धकरं चैव दण्डपादं तदुच्यते ॥ १३४ ॥
अतिक्रान्तं क्रमं कृत्वा समुत्प्लुत्य निपातयेत् ।
जङ्घाञ्चितोपरिक्षिप्ता तद्विन्द्याद्धरिणप्लुतम् ॥ १३५ ॥

दोलापादं क्रमं कृत्वा समुत्प्लुत्य निपातयेत् ।
परिवृत्तं त्रिकं चैतत्प्रेङ्खोलितकमुच्यते ॥ १३६ ॥
भुजावूर्ध्वविनिष्क्रान्तौ हस्तौ चाभिमुखाङ्गुली ।
बद्धा चारी तथा चैव नितान्तकरणे भवेत् ॥ १३७ ॥
दोलापादं क्रमं कृत्वा हस्तौ तदनुगावुभौ ।
रेचिताघूर्णितं वापि स्खलितं करणं न्यसेत् ॥ १३८ ॥
वामो वक्षःस्थितो हस्तः प्रोद्वेष्टिततलोऽपरः ।
अञ्चितश्चरणश्चैव प्रयोज्यः करिहस्तके ॥ १३९ ॥
एकस्तु रेचितो हस्तो लताख्यस्तु तथापरः ।
प्रसर्पिततलौ पादौ प्रसर्पितकमेव तत् ॥ १४० ॥
अलातं च पुरः कृत्वा द्वितीयं तद्वृतक्रमम् ।
हस्तौ पादानुगौ वापि सिंहविक्रीडिते स्मृतौ ॥ १४१ ॥
पृष्टप्रसर्पितः पादस्तथा हस्तौ निकुञ्चितौ ।
पुनस्तथैव कर्तव्यं सिंहकम्पितके द्विजाः ॥ १४२ ॥
आक्षिप्तहस्तमाक्षिप्तपादमाक्षिप्तदेहकम् ।
उद्वृत्य गात्रमित्येतदुद्वृत्तकरणं स्मृतम् ॥ १४३ ॥
आक्षिप्तश्चरणः कार्यो हस्तस्यैव····चानुगः ।
आनतं च तथा गात्रं तथोपसृतकं भवेत् ॥ १४४ ॥
दोलापादं क्रमं कृत्वा तलसंघट्टितौ करौ ।
रेचयेच्च करं वामं तलसंघट्टिते सदा ॥ १४५ ॥
एको वक्षःस्थितो हस्तो द्वितीयश्च प्रलम्बितः ।
तलाग्रसंस्थितः पादो जनिते करणे भवेत् ॥ १४६ ॥
जनितं चरणं कृत्वा हस्तौ चाभिमुखाङ्गुली ।
शनैर्निपतितौ चैव ज्ञेयं तत्तु बहिस्त्रिकम् ॥ १४७ ॥
करौ वक्षःस्थितौ कार्यावुरो निर्भुग्नमेव च ।
मण्डलं स्थानकं चैव निवेशकरणं च तत् ॥ १४८ ॥

तलसंचरपादाभ्यामुत्प्लुत्य पतनं तु यत् ।
संनतं वलितं गात्रं मनिकाक्रीडितं तु तत् ॥ १४९ ॥
करमावृत्तकरणमूरुपृष्ठेऽञ्चितं न्यसेत् ।
जङ्घाञ्चिता तथोद्वृत्ता ह्यूरूद्वृत्तं तदुच्यते ॥ १५० ॥
करौ प्रलम्बितौ कार्यौ शिरश्च परिवाहितम् ।
पादौ च वलिताविद्धौ मदस्खलितके द्विजाः ॥ १५१ ॥
पुरः प्रसर्पितः पादः कुञ्चितो गमनोन्मुखः ।
करौ च रेचितौ यत्र विष्णुक्रान्तं तदुच्यते ॥ १५२ ॥
करमावर्तिकं(तं) कृत्वा ह्यूरुपृष्ठे निकुञ्चयेत् ।
ऊरुश्चैव तथा विद्धः संभ्रान्तं करणं तु तत् ॥ १५३ ॥
अपविद्धः करः सूच्या पादश्चैव निकुट्टितः ।
वक्षःस्थश्च करो वामो विष्कम्भे करणे भवेत् ॥ १५४ ॥
वादावुद्धाटितौ कार्यौ तिलसंघटितौ करौ ।
नितम्बपार्श्वे(र्श्वे) कर्तव्यं(व्यौ) बुधैरुद्धाटिते सदा ॥ १५५ ॥
प्रयुज्यातालकं पूर्वं हस्तौ चापि हि रेचयेत् ।
कुञ्चितावञ्चितौ चैव वृषभक्रीडिते सदा ॥ १५६ ॥
.................................................. ।
रेचितावञ्चितौ हस्तौ स्यातां सामापसर्पिते ॥ १५७ ॥
निषण्णाङ्गस्तु चरणं प्रसार्य तलसंचयम् ।
उद्धाटितमुरः कृत्वा शकटास्यं प्रयोजयेत् ॥ १५८ ॥
ऊर्ध्वाङ्गुलितलः पादस्त्रिपताकावधोमुखौ ।
हस्तौ शिरः सकृत्तं च रङ्गावतरणं त्विति ॥ १५९ ॥
अष्टोत्तरशतं ह्येतत्करणानां मयोदितम् ।
अतः परं प्रवक्ष्यामि ह्यङ्गहारविकल्पनम् ॥ १६० ॥
प्रसार्योत्क्षिप्य च करौ समपादं प्रयोजयेत् ।
व्यंसितापसृतं सव्यं हस्तमूर्ध्वं प्रसारयेत् ॥ १६१ ॥

प्रत्यालीढं ततः कृत्वा तथैव च निकुट्टकम् ।
ऊरूद्वृत्तं ततः कुर्यात्स्वस्तिकाक्षिप्तमेव च ॥ १६२ ॥
नितम्बं करिहस्तं च कटिच्छिन्नं च योगतः ।
स्थिरहस्तो भवेदेवमङ्गहारा हरप्रियाः ॥ १६३ ॥
तलपुष्पापविद्धे द्वे वर्तितं संनिकुट्टकम् ।
ऊरूद्वृत्तं तथाक्षिप्तमुरोमण्डलमेव च ॥ १६४ ॥
नितम्बं करिहस्तं च कटिच्छिन्नं तथैव च ।
एष पर्यस्तको नाम ह्यङ्गहारो हरोद्भवः ॥ १६५ ॥
अलपल्लवसूचीं च कृत्वा विक्षिप्तमेव च ।
आरात्रिकं ततः कुर्यात्तथैव च निकुट्टकम् ॥ १६६ ॥
ऊरूद्वृत्तं तथा क्षिप्तमुरोमण्डलमेव च ।
करिहस्तं कटिच्छिन्नं सूचीविद्धो भवेदयम् ॥ १६७ ॥
अपविद्धं तु करणं सूचीविद्धं तथैव च ।
उद्वेष्टितेन हस्तेन त्रिकं तु परिवर्तयेत् ॥ १६८ ॥
उरोमण्डलकौ हस्तौ कटिच्छिन्नं तथैव च ।
अपविद्धोऽङ्गहारश्च विज्ञेयोऽयं प्रयोक्तृभिः ॥ १६९ ॥
करणं नूपुरं कृत्वा विक्षिप्तालातके पुनः ।
पुरा विक्षिप्तकं कुर्यादुरोमण्डलकं तथा ॥ १७० ॥
नितम्बं करिहस्तं च कटिच्छिन्नं तथैव च ।
आक्षिप्तकः स विज्ञेयो ह्यङ्गहारः प्रयोक्तृभिः ॥ १७१ ॥
उद्वेष्टितापविद्धस्तु करः पादो निकुट्टितः ।
पुनस्तेनैव योगेन वामपार्श्वे भवेदथ ॥ १७२ ॥
उरोमण्डलकौ हस्तौ नितम्बं करिहस्तकम् ।
कर्तव्यं सकटिच्छिन्नं नृत्ते तद्धटिते सदा ॥ १७३ ॥
पर्यायाद्वेष्टितौ हस्तौ पादौ चैव निकुट्टितौ ।
कुञ्चितावञ्चितौ चैव ह्यूरूद्वृत्तं तथैव च ॥ १७४ ॥

चतुरस्त्रं करं कृत्वा पादेन च निकुट्टकम् ।
भुजंगत्रासितं चैव करं चोद्वेष्टितं पुनः ॥ १७५ ॥
परिच्छिन्नं च कर्तव्यं त्रिकं भ्रमरकेण तु ।
करिहस्तं कटिच्छिन्नं विष्कम्भः परिकीर्तितः ॥ १७६ ॥
दण्डपादं करं चैव विक्षिप्याक्षिप्य चैव हि ।
व्यंसितं वामहस्तं च सह पादेन सर्पयेत् ॥ १७७ ॥
निकुट्टकद्वयं कार्यमाक्षिप्तं मण्डलोरसि ।
करिहस्तं कटिच्छिन्नं कर्तव्यमपराजिते ॥ १७८ ॥
कुट्टितं करणं कृत्वा भुजंगत्रासितं तथा ।
रेचितेन तु हस्तेन पताकं हस्तमादिशेत् ॥ १७९ ॥
आक्षिप्तकं प्रयुञ्जीत ह्युरोमण्डलकं तथा ।
तालाख्यं सकटिच्छिन्नं विष्कम्भापसृते भवेत् ॥ १८० ॥
त्रिकं स्ववलितं कृत्वा नूपुरं करणं तथा ।
भुजंगत्रासितं सव्यं तथा वैशेष(ख ?)रेचितम् ॥ १८१ ॥
आक्षिप्तकं ततः कृत्वा परिच्छिन्नं तथैव च ।
मत्ताक्रीडो भवेदेष ह्यङ्गहारो हरप्रियः ॥ १८२ ॥
रेचितं हस्तपादं तु कृत्वा वृश्चिकमेव च ।
पुनस्तेनैव योगेन वृश्चिकं संप्रयोजयेत् ॥ १८३ ॥
निकुट्टकं तथा चैव सव्यासव्यकृतं क्रमात् ।
लताख्यं सकलच्छेदो भवेत्स्वस्वररेचिते ॥ १८४ ॥
पार्श्वस्वस्तिकपादौ च कार्यै[1] त्वयोनिकुट्टकम् ।
द्वितीयस्य च पार्श्वस्य विधिः (व्या)स्यादयमेव हि ॥ १८५ ॥
ततश्च करमावर्त्य ह्यूरूपृष्ठे निपातयेत् ।
ऊरूद्वृत्तं ततः कुर्यादाक्षिप्तं पुनरेव हि ॥ १८६ ॥
नितम्बं करिहस्तं च कटिच्छिन्नं तथैव च ।
पार्श्वस्वस्तिक इत्येष ह्यङ्गहारः प्रकीर्तितः ॥ १८७ ॥

१. 'कार्य्ये त्वय्ये' क.

वृश्चिकं चरणं कृत्वा लताख्यं हस्तमेव च ।
तमेव च करं भूयो नासाग्रे संनिकुञ्चयेत् ॥ १८८ ॥
तमेवोद्वेष्टितं कृत्वा नितम्बं परिवर्तयेत् ।
करिहस्तं कटिच्छिन्नं वृश्चिकापसृते[1] भवेत् ॥ १८९ ॥
कृत्वा नूपुरपादं तु तथाक्षिप्तकमेव च ।
परिच्छिन्नं च कर्तव्यं सूचीपादं तथैव च ॥ १९० ॥
नितम्बं करिहस्तं चाप्युरोमण्डलकं तथा ।
कटिच्छिन्नं ततश्चैव भ्रमरः स तु संज्ञितः ॥ १९१ ॥
मतल्लिकरणं कृत्वा करमावर्त्य दक्षिणम् ।
कपोलस्य प्रदेशे तु कार्यं सम्यग्निकुञ्चितम् ॥ १९२ ॥
अपविद्धं हृतं चैव तलसंस्फोटसंयुतम् ।
करिहस्तं कटिच्छिन्नं मत्तस्खलितके भवेत् ॥ १९३ ॥
दोलैः करैः प्रचलितैः स्वस्तिकापसृतैः परैः ।
अविर्वे(अन्तर्वि ?)वलितैर्हस्तैस्तल्ल(ल)संघटितैस्तथा ॥ १९४ ॥
निकुट्टितं प्रकर्तव्यमूरूद्वृत्तं तथैव च ।
करिहस्तं कटिच्छिन्नं मदाद्विलसिते भवेत् ॥ १९५ ॥
मण्डलं स्थानकं कृत्वा तथा हस्तौ च रेचितौ ।
उद्घाटितेन पादेन मतल्लिकरणं भवेत् ॥ १९६ ॥
आक्षिप्तं करणं चैव ह्युरोमण्डलमेव च ।
कटिच्छिन्नं तथा चैव भवेत्तु गतिमण्डले ॥ १९७ ॥
समं पादं प्रयुज्याथ परिच्छिन्नं त्वनन्तरम् ।
आविद्धेन तु पादेन बाह्यभ्रमरकं तथा ॥ १९८ ॥
वामसूचि त्वतिक्रान्तं भुजंगत्रासितं तथा ।
करिहस्तं कटिच्छिन्नं परिच्छिन्ने विधीयते ॥ १९९ ॥
शिरसस्तूपरि स्थाप्यौ स्वस्तिकौ विधुतौ करौ ।
ततः सव्यं करं चापि गात्रमानम्य रेचयेत् ॥ २०० ॥

---

१. 'पसृतं' क.

पुनरुत्थापयेत्तत्र गात्रमुन्नम्य रेचयेत् ।
लताख्यौ[1] च करौ कृत्वा वृश्चिकं संप्रयोजयेत् ॥ २०१ ॥
रेचितं करिहस्तं च भुजंगत्रासितं तथा ।
आक्षिप्तकं प्रयुञ्जीत स्वस्तिकं पादमेव च ॥ २०२ ॥
पराङ्मुखविधिर्भूय एव एवं भवेदिह ।
करिहस्तं कटिच्छिन्नं परिवृत्तकरेचिते ॥ २०३ ॥
रेचितौ सह गात्रेण ह्यपविद्धौ करौ यदा ।
पुनस्तेनैव देशेन गात्रमुन्नम्य मण्डलम् ॥ २०४ ॥
करिहस्तं कटिच्छिन्नं कुर्याद्देशाख[2]रेचिते ।
आद्यं तु जनितं कृत्वा पादमेकं प्रसारयेत् ॥ २०५ ॥
तथैवालातलं(कं) कुर्यात्त्रिकं तु परिवर्तयेत् ।
अञ्चितं वामहस्तं च गण्डदेशे निकुट्टयेत् ॥ २०६ ॥
कटिच्छिन्नं तथा चैवं[3] परावृत्तं प्रयोजयेत् ।
स्वस्तिकं करणं कृत्वा व्यंसितौ च करौ पुनः ॥ २०७ ॥
अलातकं प्रयुञ्जीत दू(ऊ)र्ध्वं जानुनिकुञ्चितम् ।
अर्द्धस्तव्यथ(?)विक्षिप्तमुद्वृत्ताक्षिप्तके तथा ॥ २०८ ॥
करिहस्तं कटिच्छिन्नमङ्गहार(रे) ह्यलातके[4] ।
निकुट्य वक्षसि करावूर्ध्वजानु प्रयोजयेत् ॥ २०९ ॥
आक्षिप्तं स्वस्तिकं कृत्वा त्रिकं तु परिवर्तयेत् ।
उरोमण्डलकौ हस्तौ नितम्बं करिहस्तकम् ॥ २१० ॥
कटिच्छिन्नं तथा चैव पार्श्वच्छेदे विधीयते ।
सूचीं वामपदं दद्याद्विद्युद्भ्रान्तं च दक्षिणम् ॥ २११ ॥
दक्षिणेन पुनः सूचीं विद्युद्भ्रान्तं च वामकम् ।
लताख्यं सकटिच्छिन्नं विद्युद्भ्रान्तश्च स स्मृतः ॥ २१२ ॥
कृत्वा नूपुरपादं तु मथ(?)वामौ प्रलम्बितौ ।
करौ पार्श्वे ततस्ताभ्यां विक्षिप्तं संप्रयोजयेत् ॥ २१३ ॥

१. 'लातख्यौ' क-ख. २. 'देशाष' ख. ३. 'चैष' क. ४. 'ह्यलातले' क.

ताभ्यां सूची तथा चैव त्रिकं तु परिवर्तयेत्।
लताख्यं सकटिच्छिन्नं कुर्यादुद्वृत्तकैः सदा ॥ २१४ ॥
आलीढं व्यंसितौ हस्तौ बाहुशीर्षे निकुट्टयेत्।
नूपुरश्चरणो वामस्तथालातश्च दक्षिणः ॥ २१५ ॥
तेनैवाक्षिप्तकं कुर्यादुरोमण्डलकौ करौ।
करिहस्तं कटिच्छिन्नमालीढे संप्रयोजयेत् ॥ २१६ ॥
हस्तं तु रेचितं कृत्वा पार्श्वमानम्य रेचयेत्।
पुनस्तेनैव योगेन गात्रमानम्य रेचयेत् ॥ २१७ ॥
रेचितं करणं कार्यमुरोमण्डलमेव च।
कटिच्छिन्नं तु कर्तव्यमङ्गहारे च रेचयेत् ॥ २१८ ॥
नूपुरं चरणं कृत्वा त्रिकं तु परिवर्तयेत्।
व्यंसितेन तु हस्तेन त्रिकमेव विवर्तयेत् ॥ २१९ ॥
पादं चालातकं कृत्वा सूचि(चीं) तेनैव योजयेत्।
करिहस्तं कटिच्छिन्नं कुर्यादाच्छुरिते सदा ॥ २२० ॥
रेचितस्वस्तिकौ पादौ रेचितस्वस्तिकौ करौ।
कृत्वा विश्लेषमेवं तु तेनैव विधिना पुनः ॥ २२१ ॥
पुनरुत्क्षेपणं चैव रेचितैरेव[1] कारयेत्।
उद्वृत्ताक्षि[प्त]केनैव ह्युरोमण्डलमेव च ॥ २२२ ॥
नितम्बकरिहस्तं च कटिच्छिन्नं तथैव च।
आक्षिप्तरेचितो ह्येष करणानां विधिः स्मृतः ॥ २२३ ॥
विक्षिप्तकरणं कृत्वा हस्तपादमुखानुगम्।
वामसूचीसहकृतं विक्षिपेद्वामकं करम् ॥ २२४ ॥
वक्षःस्थाने भवेत्सव्यो वलितं त्रिकमेव च।
नूपुराक्षिप्तके चैव ह्यर्धस्वस्तिकमेव च ॥ २२५ ॥
नितम्बं करिहस्तं च ह्युरोमण्डलकं तथा।
कटिच्छिन्नं च कर्तव्यं संभ्रान्ते नृत्तयेत्कृती (?) ॥ २२६ ॥

---

१. 'रेचितैरेव' क-ख.

अपक्रान्तं क्रमं कृत्वा व्यसितं हस्तमेव च ।
कुर्यादुद्वेष्टितं चैव ह्यूर्ध्वसूची तथैव च ॥ २२७ ॥
विछि(क्षि)प्तं सकटिच्छिन्नमुद्वृत्ताक्षिप्तके तथा ।
करिहस्तं कटिच्छिन्नं कर्तव्यमुपसर्पिते ॥ २२८ ॥
कृत्वा नूपुरपादं च द्रुतमाक्षिप्य च क्रमम् ।
पादस्य चानुगौ हस्तौ त्रिकं तु परिवर्तयेत् ॥ २२९ ॥
निकुट्य करपादं चाप्युरोमण्डलकं पुनः ।
करिहस्तं कटिच्छिन्नं कार्यमर्धनिकुट्टके ॥ २३० ॥
द्वात्रिंशदेते संप्रोक्ता ह्यङ्गहारा द्विजोत्तमाः ।
चतुरो रेचकांश्चापि गदतो मे निबोधत ॥ २३१ ॥
पादरेचक एकः स्याद्द्वितीयः कटिरेचकः ।
[1]........................................॥ २३२ ॥

मृदङ्गभेरीपटहैर्झर्[2]झाडिण्डिमगोमुखैः ।
पणवैर्दर्दुरैश्चैव सर्वातोद्यैः प्रवादितैः ॥ २३३ ॥
दक्षयज्ञे विनिहते संध्याकाले महेश्वरः ।
नानाङ्गहारैर्ननर्त लयतालवशानुगम् ॥ २३४ ॥
पिण्डीबन्धांस्ततो दृष्ट्वा नन्दी(न्दि)भद्रमुखा गणाः ।
चक्रुस्ते नाम पिण्डीनां बन्धमासां सलक्षणम् ॥ २३५ ॥
ईश्वरस्येश्वरी पिण्डी नन्दिनश्चापि यावृधी ।
चण्डिकाया भवेत्पिण्डी तथैव सिंहवाहिनी ॥ २३६ ॥
तार्क्ष्यपिण्डी भवेद्विष्णोः पद्मपिण्डी स्वयंभुवः ।
शक्रस्यैरावती पिण्डी झषा स्यान्मन्मथस्य तु ॥ २३७ ॥
शिषि(खि)पिण्डी कुमारस्य ऊरू(?)पिण्डी भवेच्छ्रियः ।
धारापिण्डी च जाह्नव्याः पाशपिण्डी यमस्य च ॥ २३८ ॥
वारुणी च नदीपिण्डी यक्षा स्याद्धनदस्य तु ।
हलपिण्डी बलस्यापि सर्पपिण्डी च भोगिनाम् ॥ २३९ ॥

---

१. पुस्तकद्वयेऽपि त्रुटिचिह्नं नास्ति. २. 'ङ्डा' क.

गणेश्वरी महापिण्डी दक्षयज्ञविमर्दिनी ।
त्रिशूलाकृतिसंस्थाना रौद्री स्यादन्धकद्विषः ॥ २४० ॥
एवमन्यास्वपि तथा देवतासु यथाक्रमम् ।
वज्रभूताः प्रयोक्तव्याः पिण्डीबन्धाः सुचिह्निताः ॥ २४१ ॥
रेचका अङ्गहाराश्च पिण्डीबन्धास्तथैव च ।
सृष्ट्वा भगवता दत्ता ता(त)ण्डवे मुनये तथा ॥ २४२ ॥
तेनापि हि ततः सम्यक् गाकड(?)समन्वितः ।
नृत्तप्रयोगः संसृष्टो यस्ताण्डवमिति स्मृतः ॥ २४३ ॥

श्रीऋषय ऊचुः ।

यदा प्राप्त्यर्थमर्थानां तज्ज्ञैरभिनयः स्मृतः ।
कस्मान्नृत्तं कृतं ह्येतत्कं स्वभावमपेक्षते ॥ २४४ ॥
न गीतकार्थसंबद्धं न चाप्यर्थस्य भावकम् ।
कस्मान्नृत्तं कृतं ह्येतद्गीतेष्वासारितेषु च ॥ २४५ ॥

भरत[1] उवाच ।

अत्रोच्यते न खल्वर्थं [2]कंचिन्नृत्तमपेक्षते ।
किं तु शोभां जनयतामिति नृत्तं प्रवर्तितम् ॥ २४६ ॥
प्रायेण सर्वलोकस्य नृत्तमिष्टं स्वभावतः ।
मङ्गल्यमिति कृत्वा च नृत्तमेतत्प्रकीर्तितम् ॥ २४७ ॥
विवाहप्रसवावाहप्रमोदाभ्युदयादिषु ।
विनोदकारणं चेति नृत्तमेतत्प्रवर्तितम् ॥ २४८ ॥
अतश्चैव प्रतिक्षेपात्पूजासंघैः प्रवर्तिताः ।
ये गीतकादौ युज्यन्ते सम्यङ्नृत्तविभागकाः ॥ २४९ ॥
देवेन चापि संप्रोक्तस्तण्डुस्ताण्डवपूर्वकम् ।
गीतप्रयोगमाश्रित्य नृत्यमेतत्प्रवर्त्यताम् ॥ २५० ॥
सर्वोऽपि ताण्डवविधिर्देवस्तुत्यात्ययो (?) भवेत् ।
सुकुमारप्रयोगश्च शृङ्गाररससंभवः ॥ २५१ ॥

---

१. पुस्तकद्वयेऽपि नास्ति. २. 'स्थानके' क.

तस्य तण्डुप्रयुक्तस्य ताण्डवस्य विधिक्रिया ।
वर्धमानकमासो य(क्रमात्सेयं ?) संप्रवक्ष्यामि लक्षणम् ॥ २९२ ॥
कलानां वृद्धिमासाद्य ह्यक्षराणां च वर्धनात् ।
वर्धनान्नर्तकीनां च वर्धमानकमुच्यते ॥ २९३ ॥
कृत्वा कुतपविन्यासं यथावद्विजसत्तमाः ।
आसारितप्रयोगस्तु ततः कार्यः प्रयोक्तृभिः ॥ २९४ ॥
तत्र रूपोहनं कृत्वा तन्त्रीगानसमन्वितम् ।
कार्यः प्रवेशो नर्तव्यस्तण्डुवाद्यसमन्वितः ॥ २९५ ॥
विशुद्धकरणायां तु यात्यां वाय(गत्यां वाद्यं)प्रयोजयेत् ।
गत्या वाद्यानुसारिण्यास्तस्याश्चारीं प्रयोजयेत् ॥ २९६ ॥
वैशाखस्थानकेनेह सार्वे रेचकचारिणी ।
पुष्पाञ्जलिधरा भूत्वा प्रविशेद्रङ्गमण्डपम् ॥ २९७ ॥
पुष्पाञ्जलिं विसृज्याथ रङ्गपीठं परीत्य च ।
प्रणम्य देवताभ्यश्च ततोऽभिनयमाचरेत् ॥ २९८ ॥
अ(य)त्राभिनेयं गीतं स्यात्तत्र वाद्यं न योजयेत् ।
अङ्गहारप्रयोगे तु ताण्डवाद्यं विधीयते ॥ २९९ ॥
समं रक्तं विभक्तं च स्फुटयुद्धप्रहारजम् ।
नृत्ताङ्गग्राहिकाद्यङ्गैर्वाद्यं योज्यं तु ताण्डवे ॥ २६० ॥
प्रयुज्य गीतवाद्ये तु निष्क्रामेन्नर्तकी ततः ।
अनेनैव विधानेन प्रविशन्त्यपराः पृथक् ॥ २६१ ॥
अन्याश्चानुग्रहेणैव पिण्डीं बध्नन्ति याः स्त्रियः ।
तावत्पर्यस्तकः कार्यो यावत्पिण्डी न बध्यते ॥ २६२ ॥
पिण्डीबद्धास्ततः सर्वा निष्क्रामेयुः स्त्रियस्तु ताः ।
पिण्डीषट्केषु वाद्यं हि कर्तव्यमिह वादकैः ॥ २६३ ॥
पर्यस्तकप्रमाणेन चित्रौघकरणान्वितम् ।
तत्रैवोपोहनं भूयः कार्यं पूर्ववदेव हि ॥ २६४ ॥

ततश्चासारितं भूयो गायनस्तु प्रयोजयेत् ।
पूर्वेणैव विधानेन प्रविशेच्चापि नर्तकी ॥ २६५ ॥
गीतकार्यं त्वभिनयेद्द्वितीयासारितस्य तु ।
तदेव च पुनर्वस्तु नाट्येनाभिप्रदर्शयेत् ॥ २६६ ॥
आसारितैः(ते) समाप्ते सु(तु)निष्क्रामेन्नर्तकी ततः ।
पूर्ववत्प्रविशन्त्यन्याः प्रयोगः स्यात्स एव हि ॥ २६७ ॥
एवं पदे पदे कार्यो विधिरासारितस्य तु ।
ताण्डवाद्ये(द्य)कृते चैव तथा गानकृतेऽपि च ॥ २६८ ॥
एका तु प्रथमं युज्याद्वे द्वितीयं तथैव च ।
तिस्रो वस्तु तृतीयं तु चतस्रस्तु चतुर्थकम् ॥ २६९ ॥
पिण्डीनां विधयश्चैव चत्वारः संप्रकीर्तिताः ।
पिण्डी शृङ्खलिका चैव लताबन्धोऽथ भेद्यकः ॥ २७० ॥
पिण्डीबन्धस्तु पिण्डत्वाद्गुल्मश्शृङ्खलिका भवेत् ।
तालोपनद्धा[1] प्रलता स नृत्तो भेद्यकः स्मृतः ॥ २७१ ॥
पिण्डीबन्धः कनिष्ठे तु शृङ्खला तु लयोन्तरे ।
मध्यमे च लताबन्धो ज्येष्ठे चैवाथ भेद्यकः ॥ २७२ ॥
पिण्डीनां विविधा योनिर्यन्त्र भद्रासनं तथा ।
शिक्षायोगस्तथा चैव प्रयोक्तव्यः प्रयोक्तृभिः ॥ २७३ ॥
एवं प्रयोगः कर्तव्यो वर्धमाने तपोधनाः ।
गीतानां छन्दकानां च भूयो वक्ष्याम्यहं विधे(धिम्) ॥ २७४ ॥
यानि वस्तूनि मुनयः सन्ति चाङ्गकृतानि तु ।
गीतानि तेषां वक्ष्यामि प्रयोगं नृत्तवाद्ययोः ॥ २७५ ॥
तत्रावतरणं कार्यं नर्तक्याः सर्वभाण्डिकम् ।
क्षेपप्रतिक्षेपकृतं तन्त्रीगणसमन्वितम् ॥ २७६ ॥
प्रथमं त्वभिनेयं स्याद्गीताक(तकं?) कर्मवस्तुकम् ।
तदेव च पुनर्वस्तु नृत्तेनापि प्रदर्शयेत् ॥ २७७ ॥

१. 'जालोप' क.

यो विधिः पूर्वमुक्तस्तु नृत्ताभिनयवादिते ।
आसारितविधौ स स्याद्गीतानां वास्तुकेष्वपि ॥ २७८ ॥
एवं वस्तुनिबद्धानां गीतानां च विधिः स्मृतः ।
शृणुताङ्गनिबद्धानां गीतानामपि लक्षणम् ॥ २७९ ॥
य एव वस्तुषु विधिर्नृत्ताभिनयवादिते ।
ताम(तमे)वाङ्गनिबद्धेषु च्छन्दकेष्वपि योजयत् ॥ २८० ॥
वाद्यं गुर्वक्षरकृतं तथाल्पाक्षरमेव च ।
मुरे(?)सापोहने कुर्याद्वर्णानां विप्रकर्षतः ॥ २८१ ॥
यदा गीतवशादङ्गं भूयोभूयो निवर्तते ।
तत्राद्यमभिनेयं स्याच्छेषं नृत्तेन योजयेत् ॥ २८२ ॥
त्रिपाणिलयसंयुक्तं तत्र वाद्यं प्रयोजयेत् ।
यथा लयस्तथा वाद्यं कर्तव्यमिव वादकैः ॥ २८३ ॥
एवमेष विधिः कार्यो गीतेष्वासारितेष्वपि ।
देवस्तुत्याश्रयं ह्येतत्सुकुमारं निबोधत ॥ २८४ ॥
स्त्रीपुंसयोस्तु संलापे यस्तु कामसमुद्भवः ।
तज्ज्ञेयं सुकुमारं हि शृङ्गाररससंभवम् ॥ २८५ ॥
यस्यां यस्यामवस्थायां नृत्तं योज्यं प्रयोक्तृभिः ।
तत्सर्वं संप्रवक्ष्यामि तच्च मे शृणुत द्विजाः ॥ २८६ ॥
अङ्गवस्तुनिवृत्तौ तु यथा वर्णनिवृत्तिषु ।
तथा चाभ्युदयस्थाने नृत्तं तज्ज्ञः प्रयोजयेत् ॥ २८७ ॥
वस्तु संदृश्यते किंचिद्दंपत्योर्मदनाश्रयम् ।
नृत्तं तत्र प्रयोक्तव्यं पुरुषार्थगुणोद्भवम् ॥ २८८ ॥
यत्र संनिहिते कान्ते ऋतुकालाभिदर्शनम् ।
गीतकार्थाभिसंबद्धं नृत्तं तत्रापि चेष्यते ॥ २८९ ॥
खण्डिता विप्रलब्धा वा कलहान्तरितापि वा ।
यस्मिन्नङ्गेषु युवतिर्न नृत्तं तत्र योजयेत् ॥ २९० ॥

सखीप्रवृत्तसंलापे तथा संनिहिते प्रिये ।
नहि नृत्तं प्रयोक्तव्यं यस्या वा प्रोषितः प्रियः ॥ २९१ ॥
यस्मिन्नङ्गे प्रसादं तु गृह्णीयान्नायिका क्रमात् ।
ततः प्रभृति नृत्तं तु शेषेष्य(ष्व)र्थेषु योजयेत् ॥ २९२ ॥
देवस्तुत्याश्रयकृतं यदङ्गं तु भवेदथ ।
माहेश्वरैरङ्गहारैरुद्धतैस्तत्प्रयोजयेत् ॥ २९३ ॥
यत्तु शृङ्गारसंबद्धं गानं स्त्रीपुरुषाश्रयम् ।
देवीकृतैरङ्गहारैर्ललितैस्तत्प्रयोजयेत् ॥ २९४ ॥
चतुष्पदानकुटके खञ्जके परिजातके ।
विधानं संप्रवक्ष्यामि भाण्डत्वाय विधिं प्रति ॥ २९५ ॥
खञ्जनं कुटसंयुक्ता भवेद्या तु चतुष्पदा ।
पादान्ते संनिपाते तु तस्या भाण्डग्रहो भवे[त्] ॥ २९६ ॥
या ध्रुवा छन्दसा युक्ता समपादा समाक्षरा ।
तस्याः पादावसाने तु प्रदेशिन्या ग्रहो भवेत् ॥ २९७ ॥
कृत्वैकं परिवृत्तं(र्तं) तु नागस्याभिनयस्य च ।
पुनः पादनिवृत्तिं तु भाण्डवाद्यैर्नियोजयेत् ॥ २९८ ॥
अङ्गवस्तुनिवृत्तौ तु वर्णान्तरनिवृत्तिषु ।
तथोपस्थापने चैव भाण्डवाद्यं प्रयोजयेत् ॥ २९९ ॥
येऽपि चान्तरमार्गास्तु तन्त्रीवाक्षारणैः कृताः ।
तेषु सूची प्रयोक्तव्या भाण्डेन सह ताण्डवे ॥ ३०० ॥
महेश्वरस्य चरितं य इदं संप्रयोजयेत् ।
सर्वपापविशुद्धात्मा शिवलोकं स गच्छति ॥ ३०१ ॥
एवमेष विधिः सृष्टस्ताण्डवस्य प्रयोक्तृभिः ।
भूयः किं कथ्यतामन्यन्नाट्यवेदविधिं प्रति ॥ ३०२ ॥

इति श्रीभारतीये नाट्यशास्त्रे ताण्डवलक्षणं नाम चतुर्थोऽध्यायः ।

पञ्चमोऽध्यायः ।

भरतस्य वचः श्रुत्वा नाट्यसंता(ज्ञा)नकारणम् ।
पुनरेवाब्रुवन्वाक्यमृषयो हृष्टमानसाः ॥ १ ॥
यथा नाट्यस्य जन्मेदं जर्जरस्य च संभवः ।
विघ्नानां शमनं चैव देवतानां च पूजनम् ॥ २ ॥
तदस्माभिः श्रुतं सर्वं गृहीत्वा चावधारितम् ।
निखिलेन यथातत्त्वमिच्छामो वेदितुं पुनः ॥ ३ ॥
पूर्वरङ्गं महातेजः सर्वलक्षणसंयुतम् ।
यथा बुध्यामहे ब्रह्मंस्तथा व्याख्यातुमर्हसि ॥ ४ ॥
तेषां तु वचनं श्रुत्वा मुनीनां भरतो मुनिः ।
प्रत्युवाच पुनर्वाक्यं पूर्वरङ्गविधिं प्रति ॥ ५ ॥
पूर्वरङ्गं महाभागा वदतो मे निबोधत ।
पादभागाः कलाश्चैव परिवर्तास्तथैव च ॥ ६ ॥
यस्माद्रङ्गप्रयोगोऽयं पूर्वमेव प्रयुज्यते ।
तस्मादयं पूर्वरङ्गो विज्ञेयो द्विजसत्तमाः ॥ ७ ॥
अस्याङ्गानि तु कार्याणि यथावदनुपूर्वशः ।
तन्त्रीभाण्डसमायोगैः पाठ्ययोगकृतैस्तथा ॥ ८ ॥
प्रत्याहारोऽवतरणं तथा ह्यारम्भ एव च ।
आश्रावणा वक्रपाणिस्तथा च परिवन्द(घट्ट)ना ॥ ९ ॥
संस्वो(स्व)दना ततः कार्या मार्गसौ(सा)रित एव च ।
ज्येष्ठमध्यकनिष्ठानि तथैवासारितानि च ॥ १० ॥
एतानि तु बहिर्गीतान्यन्तर्जवनिकागतैः ।
प्रयोक्तृभिः प्रयोज्यानि तन्त्रीभाण्डकृतानि च ॥ ११ ॥
ततः सर्वैस्तु कुतपैः संयुक्तानीह कारयेत् ।
विद्याद्यवै(?)र्जवनिकां वृत्तपाठ्यकृतानि तु ॥ १२ ॥
गीतानां मद्रकादीनां योज्यमेकं तु गीतकम् ।
वर्धमानमथापीह ताण्डवं यत्र युज्यते ॥ १३ ॥

ततश्चोत्थापनं कार्यं परिवर्तनमेव च ।
नान्दीशुक्का(ष्का)वकृष्टे च रङ्गद्वारं तथैव च ॥ १४ ॥
चारी चैव ततः कार्या महाचारी तथैव च ।
त्रिगतं प्ररोचना च पूर्वरङ्गे भवन्ति हि ॥ १५ ॥
एतान्यङ्गानि कार्याणि पूर्वरङ्गविधौ द्विजाः ।
एतेषां लक्षणमहं व्याख्यास्याम्यनुपूर्वशः ॥ १६ ॥
कुतपस्य स विन्यासः प्रत्याहार इति स्मृतः ।
तथावतरणं प्रोक्तं गायकानां निवेशनम् ॥ १७ ॥
परिगीतक्रियारम्भ आरम्भ इति कीर्तितः ।
आतोद्यरञ्जनार्थं तु भवेदाश्रावणाविधिः ॥ १८ ॥
वाद्यवृत्तिविभागार्थं वक्त्रवाणिर्विधीयते ।
तन्त्रौज(?)करणार्थं च भवेच्च परिघट्टना ॥ १९ ॥
तथा पाणिविभागार्थं भवेत्संस्वदनाविधिः ।
तन्त्रीभाण्डसमायोगान्मार्गो(र्ग)सारितमिष्यते ॥ २० ॥
कालपातविभागार्थं भवेदासारितक्रिया ।
कीर्तनाद्देवतानां च ज्ञेयो गीतविधिस्तथा ॥ २१ ॥
अतःपरं प्रवक्ष्यामि ह्युत्थापनविधिक्रियाः ।
.................................................. ॥ २२ ॥
यस्मादुत्थापयन्त्यत्र प्रयोगं नान्दिपाठकाः ।
पूर्वमेव तु रङ्गेऽस्मिंस्तस्मादुत्थापनं स्मृतम् ॥ २३ ॥
यस्माच्च लोकपालानां परिवृत्य चतुर्दिशम् ।
वन्दनानि प्रकुर्वन्ति तस्माच्च परिवर्तनम् ॥ २४ ॥
आशीर्वचनसंयुक्ता नित्यं यस्मात्प्रयुज्यते ।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥ २५ ॥

नान्दीपादानामन्तरेषु चित्रे पूर्वरङ्गे वर्त(र्ध)मानं प्रयोज्यं प्रागुक्तलक्षणम् । अन्ये तु गीतकप्रयोगादनन्तरं शुद्धे चित्रे पूर्वरङ्गे वर्धमानप्रयोगमिच्छन्ति ।

अत्र शुक्ला(ष्का)क्षरैरेव ह्यवकृष्टा ध्रुवा यतः ।
तस्माच्छुष्कावकृष्टेयं जर्जरश्लोकदर्शका ॥ २६ ॥
यस्मादभिनयस्त्वत्र प्रथमं ह्यवतार्यते ।
रङ्गद्वारमतो ज्ञेयं वागङ्गाभिनयात्मकम् ॥ २७ ॥
शृङ्गारस्य प्रचरणाच्चारी संपरिकीर्तिता ।
रौद्रप्रचरणाच्चापि महाचारीति कीर्तिता ॥ २८ ॥
विदूषकः सूत्रधारस्तथा वै पारिपार्श्वकः ।
यत्र कुर्वन्ति संजल्पं तत्रापि त्रिगतं मतम् ॥ २९ ॥
उपक्षेपेण काव्यस्य हेतुयुक्तिव्युपक्रिया ।
सिद्धेनामन्त्रणा या तु विज्ञेया सा प्ररोचना ॥ ३० ॥
अतः परं प्रवक्ष्यामि आश्रावणविधिक्रियाम् ।
बहिर्गीत[1]विधिः सम्यगुत्पत्तिं कारणं तथा ॥ ३१ ॥
चित्रदक्षिणव्यक्ते तु सप्तरूपे प्रकीर्तिता ।
सोपोहने सनीगीतदेवस्तुत्यभिनन्दिते ॥ ३२ ॥
नारदाद्यैस्तु गन्धर्वैः सभायां देवदानवाः ।
निर्गीतं श्राविताः सम्यग्लयतालसमन्वितम् ॥ ३३ ॥
तच्छ्रुत्वा तु सुखं गानं देवस्तुत्यभिनन्दितम् ।
अभवन्क्षुभिताः सर्वे माशर्था(नाशार्था) दैत्यराक्षसाः ॥ ३४ ॥
संप्रधार्य च तेऽन्योन्यमित्यवोचन्नवस्थिताः ।
निर्गीतं तु सवादित्रमिदं गृह्णीमहे वयम् ॥ ३५ ॥
सत्यरूपेण संतुष्टा देवाः [1]कर्मानुकीर्तनात् ।
वयं गृह्णीम निर्गीतं तुष्याम(मोऽ)त्रैव सर्वदा ॥ ३६ ॥
ते तत्र तुष्टा दैत्यास्तु साधयन्ति पुनः पुनः ।
रुष्टाश्चापि ततो देवाः प्रत्यभाषन्त नारदम् ॥ ३७ ॥
एते तुष्यन्ति निर्गीते दानवैः(वाः) सहराक्षसैः ।
प्रणश्यतु प्रयोगोऽयं कथं वा मन्यते भवान् ॥ ३८ ॥

---

१. 'विधो' क.

देवानां वचनं श्रुत्वा नारदो वाक्यमब्रवीत् ।
धातुवाद्याश्रयकृतं निगीतं मा प्रणश्यतु ॥ ३९ ॥
किं तूपहनसंयुक्तं धातुवाद्यविभूषितम् ।
भविष्यतीदं निर्गीतं सप्तरूपो(पं) विधानतः ॥ ४० ॥
निगीतेनावबद्धाश्च दैत्यदानवराक्षसाः ।
न क्षोभं न विघातं च करिष्यन्तीह तोषिताः ॥ ४१ ॥
एवं निर्गीतमेतत्तु दैत्यानां स्पर्धया द्विजाः ।
देवानां बहुमानेन बहुगीतमिति स्मृतम् ॥ ४२ ॥
धातुभिश्चित्रवीणायां गुरुलघ्वक्षरान्वितम् ।
वर्णालंकारसंयुक्तं प्रयोक्तव्यं बुधैरथ ॥ ४३ ॥
निर्गीतं गीयते यस्मादपदं वर्णयोजनात् ।
असूयया च देवानां बहिर्गीतमिति स्मृतम् ॥ ४४ ॥
निर्गीतं यन्मया प्रोक्तं सप्तरूपसमन्वितम् ।
उत्थापनादिकं यच्च तस्य कारणमुच्यते ॥ ४५ ॥
आश्र(श्रा)वणायां युक्तायां दैत्यास्तुष्यन्ति नित्यशः ।
वक्रपाणौ कृते चैव नित्यं तुष्यन्ति दानवाः ॥ ४६ ॥
परिघट्टनायां तुष्टाः स्युर्युक्तायां रक्षसां गणाः ।
संखोटनक्रियायां[1] तु तुष्यन्त्यपि च गुह्यकाः ॥ ४७ ॥
मार्गासारितमासाद्य प्रीता यक्षा भवन्ति हि ।
गीतकेषु प्रयुक्तेषु देवास्तुष्यन्ति नित्यशः ॥ ४८ ॥
वर्धमानप्रयुक्तेषु रुद्रस्तुष्यति सानुगः ।
तथा चोत्थापने युक्ते ब्रह्मा तुष्टो भवेदिह ॥ ४९ ॥
तुष्यन्ति लोकपालाश्च प्रयुक्ते परिवर्तने ।
नान्दीप्रयोगे च कृते प्रीतो भवति चन्द्रमाः ॥ ५० ॥
युक्तायामवकृष्टायां प्रीता नागा भवन्ति हि ।
तथा शुष्कावकृष्टायां प्रीतः पितृगणो भवेत् ॥ ५१ ॥

---

१. 'संस्वोदन' क.

रङ्गद्वारे प्रयुक्ते तु विष्णुः प्रीतो भवेदिह ।
जर्जरस्य प्रयोगे तु तुष्टा विघ्नविनायकाः ॥ ९२ ॥
तथा चार्यां प्रयुक्तायामुमा तुष्टा भवेदिह ।
रङ्गप्रयोगमाचार्य(चर्य) तुष्टो भूतगणैः(णो) भवेत् ॥ ९३ ॥
आश्रावणादिचार्यन्तमेतद्दैवतपूजनम् ।
पूर्वरङ्गे मया ख्यातं तथा चाङ्गविकल्पनम् ॥ ९४ ॥
येन तुष्यति यो देवो यस्य यन्मनसः प्रियम् ।
तत्तथा पूर्वरङ्गे तु मया प्रोक्तं द्विजोत्तमाः ॥ ९५ ॥
सर्वदैवतपूजार्हं सर्वदैवतपूजनम् ।
धन्यं यशस्यमायुष्यं पूर्वरङ्गप्रवर्तनम् ॥ ९६ ॥
ध्रुवाविधानं वक्ष्यामि लक्षणं कर्म चैव हि ।
........................................ ॥ ९७ ॥
प्रयुज्य गीतकविधिं वर्धमानमथापि च ।
गीतकान्ते ततश्चापि कार्या ह्युत्थापनी ध्रुवा ॥ ९८ ॥
आदौ द्वे च चतुर्थं चाप्यष्टमैकादशे तथा ।
गुर्वक्षराणि जानीयात्पादे ह्येकादशाक्षरे ॥ ९९ ॥
चतुष्पदा भवेत्सा तु चतुरस्रे तथैव च ।
चतुर्भिः संनिपातैश्च त्रिलया त्रियतिस्तथा ॥ ६० ॥
परिवर्ताश्च चत्वार अपाण(?)स्त्रयमेव च ।
जात्या चैव हि वि[1]श्लोकस्तांश्च तालेन योजयेत् ॥ ६१ ॥
शम्पा तु द्विकला कार्या तालो द्विकल एव च ।
पुनश्चैककला शम्पा संनिपातः कलात्रयम् ॥ ६२ ॥
एवमष्टकलः कार्यः संनिपातो विचक्षणैः ।
चत्वारः संनिपाताश्च परिवर्तः स उच्यते ॥ ६३ ॥
पूर्वस्थितलये कार्यः परिवर्तो विचक्षणैः ।
तृतीये संनिपाते तु तस्य भाण्डग्रहो भवेत् ॥ ६४ ॥

1. 'विष्णुक' ख.

एकस्मिन्परिवर्ते तु गते प्राप्ते द्वितीयके।
कार्यं मध्यलये तज्ज्ञैः सूत्रधारप्रवेशनम् ॥ ६५ ॥
पुष्पाञ्जलिं समादाय रक्षामङ्गलसत्कृताः।
शुद्धवस्त्राः सुमनसस्तथा चाद्भुतदृष्टयः ॥ ६६ ॥
स्थानं तु वैष्णवं कृत्वा सौष्ठवाङ्गपुरस्कृतम्।
दीक्षिताः शुचयश्चैव प्रविशेयुः समं त्रयः ॥ ६७ ॥
भृङ्गारजर्जरधरौ भवेतां पारिपार्श्वकौ।
मध्ये तु सूत्रभृत्ताभ्यां वृतः पञ्चपदीं व्रजेत् ॥ ६८ ॥
पदानि पञ्च गच्छेयुर्ब्रह्मणो यजनेच्छया।
पदानां चापि विक्षेपं व्याख्यास्याम्यनुपूर्वशः ॥ ६९ ॥
एवं विष्णुपदीं कृत्वा सूत्रधारः सहेतरः।
सूचीवामपदं दद्याद्विक्षेपं दक्षिणेन च ॥ ७० ॥
पुष्पाञ्जल्यपवर्गश्च कार्यो ब्राह्मेऽथ मण्डले।
ततः सललितैर्हस्तैरभिवन्द्यः पितामहः ॥ ७१ ॥
अभिवादनानि कार्याणि त्रीणि हस्तेन भूतले।
कालप्रकर्षहेतोस्तु पातानां प्रविभागतः ॥ ७२ ॥
सूत्रधारप्रवेशाद्यो वन्दनाभिनयानुगः।
द्वितीयः परिवर्तस्तु कार्यो मध्यलयाश्रितः ॥ ७३ ॥
ततः परं तृतीये तु मण्डलस्य प्रदक्षिणम्।
भवेदाचमनं चैव जर्जरग्रहणं तथा ॥ ७४ ॥
उत्थाय मण्डलाचूर्ण(त्तूर्णं) दक्षिणं पादमुद्धरेत्।
वेधं तेनैव कुर्वीत विक्षेपं वामकेन च ॥ ७५ ॥
पुनश्च दक्षिणं पादं पार्श्वसंस्थं समुद्धरेत्।
ततश्च वामवेधस्तु विक्षेपो दक्षिणस्य च ॥ ७६ ॥
इत्यनेन प्रकारेण सम्यक्कृत्वा प्रदक्षिणम्।
भृङ्गारभृतमाहूय शौचं चापि समाचरेत् ॥ ७७ ॥

यथान्यायं तु कर्तव्या तेन ह्याचमनक्रिया ।
आत्मप्रोक्षणमेवाद्भिः कर्तव्यं तु यथाक्रमम् ॥ ७८ ॥
प्रयत्नकृतशौचेन सूत्रधारेण यत्नतः ।
संनिपातसमं ग्राह्यो जर्जरो विघ्नजर्जरः ॥ ७९ ॥
प्रदक्षिणाद्यो विज्ञेयो जर्जरग्रहणान्तकः ।
तृतीयः परिवर्तस्तु विज्ञेयो वै द्रुते लये ॥ ८० ॥
गृहीत्वा जर्जरं त्वष्टौ कला जाप्यं प्रयोजयेत् ।
वामवेधं ततः कुर्याद्विक्षेपं दक्षिणस्य च ॥ ८१ ॥
ततः पञ्चपदीं चैव गच्छेत्तु कुतपोन्मुखः ।
जर्जरग्रहणाद्योऽयं कुतपो निगमान्तकः ॥ ८२ ॥
चतुर्थः परिवर्तस्तु कार्यो द्रुतलये पुनः ।
करपातनिपातास्तु भवन्त्यत्र तु षोडश ॥ ८३ ॥
[1]त्र्यस्ने द्वादशपाता हि भवन्ति करपादयोः ।
एवमुत्थापनं कार्यं ततश्च परिवर्तनम् ॥ ८४ ॥
चतुरस्रं लये मध्ये संनिपातैरथाष्टभिः ।
यस्यां लघूनि सर्वाणि केवलं नैधनं गुरुः ॥ ८५ ॥
भवेदतिजगत्यां तु सा ध्रुवा परिवर्तिनी ।
वार्तिकेन तु मार्गेण वाद्येन····तु सग्रहाः ॥ ८६ ॥
वन्देत प्रथमं पूर्वां दिशं शक्राधिदेवताम् ।
द्वितीयां दक्षिणामाशां वन्देत यमदेवताम् ॥ ८७ ॥
वन्देत पश्चिमामाशां ततो वरुणदेवताम् ।
चतुर्थीमुत्तरामाशां वन्देत धनदाश्रयाम् ॥ ८८ ॥
दिशां तु वन्दनं कृत्वा वामवेधं प्रयोजयेत् ।
दक्षिणेन च कर्तव्यं विक्षेपपरिवर्तनम् ॥ ८९ ॥
प्राङ्मुखस्तु ततः कुर्यात्पुरुषस्त्रीनपुंसकौ ।
त्रिपदीं सूत्रभृद्रुद्रब्रह्मोपेन्द्राभिवादिनीम् ॥ ९० ॥

---

1. 'शस्त्रे' ख.

दक्षिणं तु पदं पुंसो वामं स्त्रीपदमुच्यते ।
पुनर्दक्षिणमेव स्यान्नाभ्युत्क्षिप्तं नपुंसकम् ॥ ९१ ॥
वन्देत पौरुषेणेशं स्त्रीपदेन जनार्दनम् ।
नपुंसकपदेनापि तथैवाम्बुजसंभवम् ॥ ९२ ॥
परिवर्तनमेवं स्यात्तस्यान्ते प्रविशेत्ततः ।
चतुर्थकारः पुष्पाणि प्रगृह्य विधिपूर्वकम् ॥ ९३ ॥
यथावत्तेन कर्तव्यं पूजनं जर्जरस्य तु ।
कुतपस्य च सर्वस्य सूत्रधारस्य चैव हि ॥ ९४ ॥
तस्य भाण्डसमः कार्यस्तज्ज्ञैर्गीतिपरिक्रमः ।
न तत्र गानं कर्तव्यं तत्र स्नानक्रिया भवेत् ॥ ९५ ॥
चतुर्थकारः पूजां तु स कृत्वान्तर्हितो भवेत् ।
ततो गेयावकृष्टा तु चतुरस्रा स्थिरा धवा(ध्रुवा) ॥ ९६ ॥
गुरुप्राया तु सा कार्या तथा चैवार्धपाणिका ।
स्थायिवर्णाश्रयोपेतां कलाष्टकविनिर्मिताम् ॥ ९७ ॥
सूत्रधारः पठेत्तत्र मध्यमं स्वरमाश्रितः ।
नान्दीं पदैर्द्वादशभिरष्टभिर्वाप्यलंकृताम् ॥ ९८ ॥
नमोऽस्तु सर्वदेवेभ्यो द्विजातिभ्यः शुभं तथा ।
जितं सामेन वै राज्ञा शिवं गोब्राह्मणाय च ॥ ९९ ॥
ब्रह्मोत्तरं तथैवास्तु हता ब्रह्मद्विषस्तथा ।
प्रशास्त्वेमां महाराज पृथिवीं च ससागराम् ॥ १०० ॥
राष्ट्रं प्रवर्धतां चैव रङ्गस्याशा समृध्यतु ।
प्रेक्षाकर्तुर्महान्धर्मो भवतु ब्रह्मभावितः ॥ १०१ ॥
काव्यकर्तुर्यशश्चास्तु धर्मश्चापि प्रवर्धताम् ।
इज्यया चानया नित्यं प्रीयन्तां देवता इति ॥ १०२ ॥
नान्दीपदान्तरेष्वेषु ह्येवमार्येति (?) नित्यशः ।
वन्देतां सम्यगुक्ताभिर्वाग्भिनौ पारिपार्श्वकौ ॥ १०३ ॥

एवं नान्दी विधातव्या यथावल्लक्षणान्विता ।
ततः शुष्कावकृष्टास्याजर्जरश्लोकदर्शका: (?) ॥ १०४ ॥
नवगुर्वक्षराण्यादौ षड्लघूनि गुरुत्रयम् ।
शुष्कावकृष्टा तु भवेत्कला ह्यष्टौ प्रमाणतः ॥ १०५ ॥
यथा—दिह्ले दिह्ले दिह्लदिह्ले जम्बूकवलितक ते ते च (?) ।
कृत्वा शुष्कावकृष्टां तु यथावद्विजसत्तमाः ।
ततः श्लोकं पठेदेकं गम्भीरस्वरसंयुतम् ॥ १०६ ॥
देवस्तोत्रं पुरस्कृत्य यस्य पूजा प्रवर्तते ।
राज्ञो वा यत्र भक्तिः स्यादथवा ब्राह्मणस्तवम् ॥ १०७ ॥
गदित्वा जर्जरश्लोकं रङ्गद्वारे च यः स्मृतः ।
पठेदस्य पुनः श्लोकं जर्जरस्य विनाशनम् ॥ १०८ ॥
जर्जरं नमयित्वा तु ततश्चारीं प्रयोजयेत् ।
पारिपार्श्वकयोश्च स्यात्पश्चिमा(मे)नापि सर्पणम् ॥ १०९ ॥
अङ्गिता(?) चात्र कर्तव्या ध्रुवा मध्यलयाश्रिता ।
चतुर्भिः संनिपातैश्च चतुरस्रा प्रमाणतः ॥ ११० ॥
आद्यमन्त्यं चतुर्थं च पञ्चमं च तथा गुरु ।
यस्यां ह्रस्वानि शेषाणि सा ज्ञेया त्वङ्गिता बुधैः ॥ १११ ॥
अस्यां प्रयोगं वक्ष्यामि यथापूर्वं महेश्वरः ।
सहोमया क्रीडितवान्नानाभावविचेष्टितैः ॥ ११२ ॥
कृत्वावहित्थं स्थानं तु वामं चाधोमुखं भुजम् ।
नाभिप्रदेशे विन्यस्य जर्जरं च तुलाधृतम् ॥ ११३ ॥
वामपल्लवहस्तेन पादैस्तालान्तरस्थितैः ।
गच्छेत्पञ्चपदीं चैव विलासाङ्गविचेष्टितैः ॥ ११४ ॥
वामवेधस्तु कर्तव्यो विक्षेपो दक्षिणस्य च ।
शृङ्गाररससंयुक्तां पठेदार्यां विचक्षणः ॥ ११५ ॥

१. 'साल' कं.

चारीश्लोकं गदित्वा तु कृत्वा च परिवर्तनम् ।
तैरेव च पदैः कार्यं पश्चिमेनापसर्पणम् ॥ ११६ ॥
पारिपार्श्वकहस्ते तु न्यस्य जर्जरमुत्तमम् ।
महाचारीं ततश्चैव प्रयुञ्जीत यथाविधि ॥ ११७ ॥
चतुरस्रा वा·····तत्र तथा द्रुतलयान्विता ।
चतुर्भिः संनिपातैश्च कला त्वष्टौ प्रमाणतः ॥ ११८ ॥
आद्यं चतुर्थमन्त्यं च सप्तमं दशमं गुरु ।
लघु शेषं ध्रुवापादे चतुर्विंशतिके भवेत् ॥ ११९ ॥
भाण्डोन्मुखेन कर्तव्यं पादविक्षेपणं ततः ।
सूचीं कृत्वा ततः कुर्याद्विक्षेपपरिवर्तनम् ॥ १२० ॥
अतिक्रान्तैः सललितैः पादैर्द्रुतलयान्वितैः ।
त्रितालान्तरमुत्क्षेपैर्गच्छेत्पञ्चपदीं ततः ॥ १२१ ॥
तत्रापि वामवेधस्तु विक्षेपो दक्षिणस्य च ।
ततो रौद्ररसश्लोकं पदसंहरणं पठेत् ॥ १२२ ॥
तस्यान्ते तु त्रिपद्याथ व्याहरेत्पारिपार्श्वकौ ।
········································ ॥ १२३ ॥
तयोरागमनं कार्यं गानं नकुटकं बुधैः ।
तथा च भारतीभेदे त्रिगतं संप्रयोजयेत् ॥ १२४ ॥
विदूषकस्त्वे(स्त्वे)कपदां सूत्रधारस्मितावहाम् ।
असंबद्धकथाप्रायां कुर्यात्कथनिकां ततः ॥ १२५ ॥
प्ररोचने च कर्तव्या सिद्धेनोपनिमन्त्रणम् ।
रङ्गसिद्धौ पुनः कार्यं काव्यवस्तुनिरूपणम् ॥ १२६ ॥
सर्वमेव विधिं कृत्वा सूचीवेधकृतेरथ ।
पादैरनाविद्धगतैर्निष्क्रामेयुः समं त्रयः ॥ १२७ ॥
एषमेष प्रयोक्तव्यः पूर्वरङ्गो यथाविधि ।
चतुरस्रो द्विजश्रेष्ठा त्र्यस्रं वा विनिबोधत ॥ १२८ ॥

अयमेव प्रयोगः स्यादङ्गान्येतानि चैव हि ।
तालप्रमाणं विक्षिप्तं केवलं तु विशेषकृत् ॥ १२९ ॥
शम्पा तु द्विकला कार्या तालो ह्येककलस्तथा ।
पुनश्चैककला शम्पा संनिपातः कलाद्वयम् ॥ १३० ॥
अनेन हि प्रमाणेन कलाताललयान्वितः ।
कर्तव्यः पूर्वरङ्गस्तु त्र्यस्रोऽभ्युत्थापनादिकः ॥ १३१ ॥
आद्यं चतुर्थं दशममष्टमं नैधनं गुरु ।
यस्यास्तु जायते पादे सा त्र्यस्रोत्थापिनी ध्रुवा ॥ १३२ ॥
वाद्यं गतिप्रचारश्च ध्रुवा तालस्तथैव च ।
संक्षिप्तान्यत्र कार्याणि त्र्यस्रनृत्तप्रवेदिभिः ॥ १३३ ॥
वाद्यगीतप्रमाणेन कुर्यादङ्गविचेष्टितम् ।
विस्तीर्णमथवा क्षिप्तं द्विप्रमाणविनिर्मितम् ॥ १३४ ॥
हस्तपादप्रचारस्तु द्विकलः परिकीर्तितः ।
चतुरस्रे परावर्ते पाताः स्युः षोडशैव तु ॥ १३५ ॥
त्र्यस्रे द्वादशपातास्तु भवन्ति करपादयोः ।
एतत्प्रमाणं विज्ञेयमुभयोः पूर्वरङ्गयोः ॥ १३६ ॥
क(के)वलं परिवर्ते तु गमने त्रिपदी भवेत् ।
दिग्धन्दने पञ्चपदी चतुरस्रे विधीयते ॥ १३७ ॥
आचार्यबुद्ध्या कर्तव्यस्त्र्यस्रस्तत्त्वैः प्रमाणतः ।
तस्मात्तल्लक्षणं प्रोक्तं पुनरुक्तं भवेद्यतः ॥ १३८ ॥
एवमेष प्रयोक्तव्यः पूर्वरङ्गो द्विजोत्तमाः ।
त्र्यस्रश्च चतुरस्रश्च शुद्धो भारत्युपाश्रयः ॥ १३९ ॥
एवं तावदयं शुद्धः पूर्वरङ्गो मयोदितः ।
चित्रत्वमस्य वक्ष्यामि यथाकार्यं प्रयोक्तृभिः ॥ १४० ॥
नृत्ये ह्युत्थापने विप्राः कृते च परिवर्तने ।
चतुर्थकारदत्ताभिः सुमनोभिरलंकृताः ॥ १४१ ॥

---

१. 'साल' क.

उदात्तगानैर्गन्धर्वैः परिणीते प्रमाणतः ।
देवदुन्दुभयश्चैव निनदेयुर्भृशं ततः ॥ १४२ ॥
शुद्धाः कुसुममालाभिर्विकिरेयुः समन्ततः ।
अङ्गहारैश्च देव्यश्च व्यासापन्यासर्संयुतः ॥ १४३ ॥
नान्दीपदानां मध्ये तु एकैकस्मिन्पृथक्पृथक् ।
प्रयोक्तव्यो बुधैः सम्यक्चित्रभावमभीप्सुभिः ॥ १४४ ॥
एवं कृत्वा यथान्यायं शुद्धचित्रं प्रयत्नतः ।
ततः परं प्रयुञ्जीत नाटकं लक्षणान्वितम् ॥ १४५ ॥
एवं शुद्धो भवेच्चित्रः पूर्वरङ्गो विधानतः ।
कार्यो नातिप्रसङ्गोऽत्र नृत्तगीतविधिं प्रति ॥ १४६ ॥
गीतवाद्ये च नृत्ते च विबुधेऽति प्रसङ्गतः ।
खेदो भवेत्प्रयोक्तॄणां प्रेक्षकाणां तथैव च ॥ १४७ ॥
खिन्नानां रसभावेषु स्पष्टता नोपजायते ।
ततः शेषप्रयोगस्तु न रागजनको भवेत् ॥ १४८ ॥
त्र्यस्रं वा चतुरस्रं वा शुद्धं चित्रमथापि वा ।
प्रयुज्य रङ्गान्निष्क्रामेत्सूत्रधारः सहानुगः ॥ १४९ ॥
प्रयुज्य विधिनैवं तु पूर्वरङ्गं प्रयोगतः ।
स्थापकः प्रविशेत्तत्र सूत्रधारगुणाकृतिः ॥ १५० ॥
स्थानं तु वैष्णवं कृत्वा सौष्ठवाङ्गपुरस्कृतम् ।
प्रविश्य रङ्गं तैरेव सूत्रधारपदैर्व्रजेत् ॥ १५१ ॥
स्थापकस्य प्रवेशे तु कर्तव्यार्थानुगा ध्रुवा ।
त्र्यस्रा वा चतुरस्रा वा तज्ज्ञैर्मध्यलयान्विता ॥ १५२ ॥
कुर्यादन्तरचारीं च देवब्राह्मणसंश(शंसि)नीम् ।
सुवाक्यमधुरैः श्लोकैर्नानातालल्यान्वितैः ॥ १५३ ॥
प्रसाद्य रङ्गं विधिवत्कवेर्नाम च कीर्तयेत् ।
प्रस्तावनां ततः कुर्यात्काव्यप्रख्यापनाश्रयाम् ॥ १५४ ॥

दिव्ये दिव्याश्रयो भूत्वा मानुषे मानुषाश्रयः ।
नानाविधैरुपक्षेपैः काव्योपक्षेपणं भवेत् ॥ १५५ ॥
प्रस्ताव्यैवं तु निष्क्रामेत्काव्यप्रस्तावकस्ततः ।
एवमेव प्रयोक्तव्यः पूर्वरङ्गो यथाविधि ॥ १५६ ॥
य इमं पूर्वरङ्गं तु विधिनैव प्रयोजयेत् ।
नाशुभं प्राप्नुयात्किंचित्स्वर्गलोकं च गच्छति ॥ १५७ ॥
यश्चापि विधिमुत्सृज्य यथेष्टं संप्रयोजयेत् ।
प्राप्नोत्यपचयं घोरं तिर्यग्योनिं च गच्छति ॥ १५८ ॥
न तथाग्निः प्रदहति प्रभञ्जनसमीरितः ।
यथा ह्यपप्रयोगस्तु प्रयुक्तो दहति क्षणात् ॥ १५९ ॥
इत्येषोऽवन्तिपाञ्चालदाक्षिणात्यान्ध्रमागधः(धैः) ।
कर्तव्यः पूर्वरङ्गस्तु द्विप्रमाणविनिर्मितः ॥ १६० ॥
एष वः कथितो विप्राः पूर्वरङ्गाश्रितो विधिः ।
भूयः किं कथ्यतां सम्यङ्नाट्यवेदप्रयोक्तृभिः ॥ १६१ ॥

इति श्रीभारतीये नाट्यशास्त्रे पूर्वरङ्गविधानं नाम पञ्चमोऽध्यायः ।

---

## षष्ठोऽध्यायः ।

पूर्वरङ्गविधिं श्रुत्वा पुनराहुर्महत्तमाः ।
भरतं मुनयः सर्वे प्रश्नमह्नं(?)वदस्वनः ॥ १ ॥
ये रसा इति पठ्यन्ते नाट्ये नाट्यविचक्षणैः ।
रसत्वं केन वै तेषामेतदाख्यातुमर्हसि ॥ २ ॥
भावाश्चापि कथं प्रोक्ताः किं च ते भावयन्ति हि ।
संग्रहं कारिकां चैव निरुक्तं चैव तत्त्वतः ॥ ३ ॥
तेषां तु वचनं श्रुत्वा मुनीनां भरतो मुनिः ।
प्रत्युवाच पुनर्वाक्यं रसभावविकल्पनम् ॥ ४ ॥
अहं च कथयिष्यामि निखिलेन तपोधनाः ।
संग्रहं कारिकां चैव निरुक्तं च यथाक्रमम् ॥ ५ ॥

न शक्यमस्य नाट्यस्य गन्तुमन्तं कथंचन ।
कस्माद्बहुत्वाद्भावानां शिल्पानां वाप्यनन्ततः ॥ ६ ॥
एकस्यापि न वै शक्यमन्तका(न्तं ज्ञा ?)नार्णवस्य हि ।
गन्तुं किं पुनरन्येषां ज्ञानानामर्थतत्त्वतः ॥ ७ ॥
किं त्वल्पसूत्रग्रन्थार्थमनुमानप्रसाधकम् ।
नाट्यस्यास्य प्रवक्ष्यामि रसभावादि संग्रहम् ॥ ८ ॥
विस्तरेणोपदिष्टानामर्थानां सूत्रभाष्ययोः ।
निबन्धो यः समासेन संग्रहं तं विदुर्बुधाः ॥ ९ ॥
रसा भावा ह्यभिनया धर्मी वृत्तिप्रवृत्तयः ।
सिद्धिस्वरास्तथातोद्यं गानं रङ्गस्य संग्रहः ॥ १० ॥
अल्पाभिधानेनार्थो यः समासेनोच्यते बुधैः ।
सूत्रतः सानुमन्तव्या कारिकार्थप्रदर्शिनी ॥ ११ ॥
नानानामाश्रयोत्पन्नं निघण्टुं निगमान्वितम् ।
धात्वर्थहेतुसंयुक्तं नानासिद्धान्तसाधितम् ॥ १२ ॥
स्थापितोऽर्थो भवेद्यत्र समासेनार्थसूचकः ।
धात्वर्थवचनेनेह निरुक्तं तत्प्रचक्षते ॥ १३ ॥
संग्रहो यो मया प्रोक्तः समासेन द्विजोत्तम ।
विस्तरं तस्य वक्ष्यामि [1]सनिरुक्तं सकारिकम् ॥ १४ ॥
शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः ।
बीभत्साद्भुतसंज्ञाश्चेत्यष्टौ नाट्ये रसाः स्मृताः ॥ १५ ॥
एते ह्यष्टौ रसाः प्रोक्ता द्रुहिणेन महात्मना ।
पुनश्च भावान्वक्ष्यामि स्थायिसंचारिसत्त्वजान् ॥ १६ ॥
रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः ॥ १७ ॥
निर्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमाः ।
आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥ १८ ॥

---

१. 'सनिरक्तं' क.

व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ॥ १९ ॥
सुप्तं विबोधोऽमर्षश्चाप्यवहित्थमथोग्रता ।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥ २० ॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥ २१ ॥
स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः ।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः ॥ २२ ॥
आङ्गिको वाचिकश्चैव आहार्यः सात्त्विकस्तथा ।
चत्वारोऽभिनया ह्येते येषु नाट्यं प्रतिष्ठितम् ॥ २३ ॥
लोकधर्मी नाट्यधर्मी धर्मीति द्विविधः स्मृतः ।
........................................... ॥ २४ ॥
भारती सात्वती चैव कैशिक्यारभटी तथा ।
चतस्रो वृत्तयो ह्येता यासु नाट्यं प्रतिष्ठितम् ॥ २५ ॥
आवन्ती दाक्षिणात्या च तथा चैवान्ध्र(र्ध ?)मागधी ।
पञ्चालमध्यमा चेति विज्ञेयास्तु प्रवृत्तयः ॥ २६ ॥
दैवीति मानुषी चेति सिद्धिः स्याद्द्विविधैव तु ।
शारीराश्चैव वैणाश्च सप्त षड्जादयः स्वराः ॥ २७ ॥
ततं चैवावनद्धं च घनं सुषिरमेव च ।
चतुर्विधं तु विज्ञेयमातोद्यं लक्षणान्वितम् ॥ २८ ॥
ततं तन्त्रीगतं ज्ञेयमवनद्धं तु पौष्करम् ।
घनस्तु तालो विज्ञेयः सुषिरो वंश एव च ॥ २९ ॥
प्रवेशाक्षेपनिष्क्रामप्रासादिकमथान्तरम् ।
गानं पञ्चविधं ज्ञेयं ध्रुवायोगसमन्वितम् ॥ ३० ॥
चतुरस्रो विकृष्टश्च रङ्गरूयस्रश्च कीर्तितः ।
........................................... ॥ ३१ ॥

एवमेषोऽल्पसूत्रार्थो निर्दिष्टो नाट्यसंग्रहः।
अतः परं प्रवक्ष्यामि सूत्रग्रन्थविकल्पनम् ॥ ३२ ॥

तत्र रसानेव तावदादावभिव्याख्यास्यामः। नहि रसादृते कश्चिदर्थः प्रवर्तत इति।

तत्र विभावानुभाव[स्य] व्यभिचारिसंयोगाद्रसनिष्पत्तिः।

को दृष्टान्तः। अत्राह—यथा नानाव्यञ्जनौषधिद्रव्यसंयोगाद्रसनिष्पत्तिः, यथा हि गुडादिभिर्द्रव्यैर्व्यञ्जनैरोषधिभिश्च षाडवादयो रसा निवर्तन्ते, तथा नानाभावोपगता अपि स्थायिनो भावा रसत्वमाप्नुवन्तीति। अत्राह—रस इति कः पदार्थ उच्यत आस्वाद्यत्वात्। कथमास्वाद्यो रसः। यथा नानाव्यञ्जनसंस्कृतम् अन्न(संस्कृतमन्नं?) भुञ्जाना रसानास्वादयन्ति सुमनसः पुरुषा हर्षादिव्याधिं(?) गच्छन्ति तथा नानाभावाभिन[य]व्यञ्जितातान्यां गंगासात्वापेतान्(न्वागङ्गसत्त्वोपेतान्?)स्थायिभावानास्वादयन्ति सुमनसः प्रेक्षकास्तस्मान्नाट्यरसा इत्यभिव्याख्याताः। अत्रानुवंश्यौ श्लोकौ भवतः—

यथा बहुद्रव्यसु(यु)तैर्व्यञ्जनैर्बहुभिर्युतम्।
आस्वादयन्ति भुञ्जाना भक्तं भक्तविदो जनाः ॥ ३३ ॥
भावाभिनयसंबद्धान्स्थायिभावांस्तथा बुधाः।
आस्वादयन्ति मनसा तस्मान्नाट्यरसाः स्मृताः ॥ ३४ ॥

अत्राह—किं रसेभ्यो भावानां निर्वृत्तिरुताथ परस्परसंबन्धादेषामभिनिर्वृत्तिरिति। दृश्यते हि भावेभ्यो रसानामभिनिर्वृत्तिर्न रसेभ्यो भावानाम्।

नानाभिनयसंबद्धान्भावयन्ति रसानिमान्।
यस्मात्तस्मादमी भावा विज्ञेया नाट्ययोक्तृभिः ३५ ॥
न भावहीनोऽस्ति रसो न भावो रसवर्जितः।
परस्परकृता सिद्धिस्तयोरभिनये भवेत् ॥ ३६ ॥
व्यञ्जनौषधिसंयोगो यथान्नं स्वादुतां नयेत्।
एवं भावा रसाश्चैव भावयन्ति परस्परम् ॥ ३७ ॥

यथा बीजाद्भवेद्वृक्षो वृक्षात्पुष्पं फलं यथा ।
तथा मूलं रसाः सर्वे ततो भावा व्यवस्थिताः ॥ ३८ ॥

तदेषां रसानामुत्पत्तिवर्णदैवतनिदर्शनान्यभिव्याख्यास्यामः—तेषामुत्पत्तिहेतवश्चत्वारो रसाः । शृङ्गारो रौद्रो वीरो बीभत्स इति ।

शृङ्गाराद्धि भवेद्धास्यो रौद्राच्च करुणो रसः ।
वीराच्चैवाद्भुतोत्पत्तिर्बीभत्साच्च भयानकः ॥ ३९ ॥
शृङ्गारानुकृतिर्या तु स हास्यस्तु प्रकीर्तितः ।
रौद्रस्यैव च यत्कर्म स ज्ञेयः करुणो रसः ॥ ४० ॥
वीरस्यापि च यत्कर्म सोऽद्भुतः परिकीर्तितः ।
बीभत्सदर्शनं यच्च ज्ञेयः स तु भयानकः ॥ ४१ ॥

अथ वर्णाः—

श्यामो भवति शृङ्गारः सितो हास्यः प्रकीर्तितः ।
कपोतः करुणश्चैव रक्तो रौद्रः प्रकीर्तितः ॥ ४२ ॥
गौरो वीरस्तु विज्ञेयः कृष्णश्चैव भयानकः ।
नीलवर्णस्तु बीभत्सः पीतश्चैवाद्भुतः स्मृतः ॥ ४३ ॥

अथाधिदैवतानि—

शृङ्गारो विष्णुदेवस्तु हास्यः प्रथम(प्रमथ)दैवतः ।
रौद्रो रुद्राधिदेवस्तु करुणो यमदैवतः ॥ ४४ ॥
बीभत्सश्च महाकालः कामदेवो भयानकः ।
विरो महेन्द्रदेवः स्यादद्भुतो ब्रह्मदैवतः ॥ ४५ ॥

एवमेतेषां रसानामुत्पत्तिवर्णदैवतान्यभिव्याख्यातानि । इदानीमनुभावविभावाद्य(वव्य)भिचारिसंयुक्तानां लक्षणनिदर्शनान्यभिव्याख्यास्यामः । स्थायिभावांश्च रसानामनुक्रमिष्याम इति ।

तत्र शृङ्गारो नाम रतिस्थायिभावप्रभव उज्ज्वलवेषात्मकः । यत्किंचिल्लोके शुचि मेध्यमुज्ज्वलं दर्शनीयं वा तच्छृङ्गारेणोपमीयते । यस्तावदुज्ज्वलवेषवान्स शृङ्गारवानित्युच्यते । यथा गोत्रकुलाचारोत्पन्नान्याप्तोप-

देशसिद्धानि पुंसां नामानि भवन्ति तथैषां रसानां भावानां च नाट्याश्रितानां चार्थानामाचारोत्पन्नान्याप्तोपदेशसिद्धानि नामानि । एवमेष आचारसिद्धो हृद्योज्ज्वलवेषात्मकत्वाच्छृङ्गारो रसः । स च स्त्रीपुरुषहेतुक उत्तमयुवप्रकृतिः । तस्य द्वे अधिष्ठाने—संभोगः, विप्रलम्भश्च । तत्र संभोगस्तावत् ऋतुमाल्यानुलेपनालंकारेष्टजनविषयवरभवनोपभोगोपवनगमनानुभवनश्रवणक्रीडालीलादिभिर्विभावैरुत्पद्यते । तस्य नयनचातुरीभ्रूक्षेपकटाक्षसंचारिललितमधुराङ्गहारवाक्यादिभिरनुभावैरभिनयः प्रयोक्तव्यः । व्यभिचारिणश्चास्यालस्योग्रजुगुप्सावर्गाः(र्जम् ?) । विप्रलम्भकृतस्तु निर्वेदग्लानिशङ्कासूयाश्रमचिन्तौत्सुक्यनिद्रासुप्तस्वप्नविब्बोकव्याध्युन्मादापस्मारजाड्यमरणादिभिरनुभावैरभिनेतव्यः । अत्राह—यद्ययं रतिप्रभवः शृङ्गारः कथमस्य करुणाश्रयिणो भावाः । अत्रोच्यते—पूर्वमेवाभिहितं संभोगविप्रलम्भकृतः शृङ्गार इति । वैशिकशास्त्रकारैश्च दशावस्थोऽभिहितः ताश्च सामान्याभिनये वक्ष्यामः ।

करुणस्तु शापक्लेशविनिपतितेष्टजनविभवनाशवधबन्धसमुत्थो निरपेक्षभावः । कुशक्यचिन्तासमुत्थः सापेक्षभावो विप्रलम्भकृतः । एवमन्यः करुणोऽन्यश्च विप्रलम्भ इति । एवमेष सर्वभावसंयुक्तः शृङ्गारो भवति । अपि च ।

सुखप्रायेष्टसंपन्नऋतुमाल्यादिसेवकः ।
पुरुषः प्रमदायुक्तः शृङ्गार इति संज्ञितः ॥ ४६ ॥

अपि च । सूत्रानुबद्धे आर्ये भवतः—

'ऋतुमाल्यालंकारैः प्रियजनगांधर्वकाव्यसेवाभिः ।
उपवनगमनविहारैः शृङ्गाररसः समुद्भवति ॥ ४७ ॥
नयनवदनप्रसादैः स्मितमधुरवचोधृतिप्रमोदैश्च ।
मधुरैश्चाङ्गविकारैस्तस्याभिनयः प्रयोक्तव्यः ॥ ४८ ॥

अथ हास्यो नाम हासस्थायिभावात्मकः । स च विकृतपरवेषालंकारधार्ष्ट्यलौल्यकुहकासत्प्रलापव्यङ्गदर्शनदोषोदाहरणादिभिर्विभावैरुत्पद्यते । त-

स्यौष्ठनासाकपोलस्पन्दनदृष्टिव्याकोशाकुञ्चनस्वेदास्यरागपार्श्वग्रहणादिभिरनुभावैरभिनयः प्रयोक्तव्यः । व्यभिचारिणश्चास्यावहित्थालस्यतन्द्रानिद्रास्वप्नादयः । द्विविधो हास्यः—आत्मस्थः परस्थश्च । यदा स्वयं हसति तदात्मस्थः । यदा परं हासयति तदा परस्थः । अत्रानुवंश्ये आर्ये भवतः—

विपरीतालंकारैर्विकृताचाराभिधानवेषैश्च ।
विकृतैरङ्गविकारैर्हसतीति रसः स्मृतो हास्यः ॥ ४९ ॥
विकृताचारैर्वाक्यैरङ्गविकारैश्च विकृतवेषैश्च ।
हासयति जनं यस्मात्तस्माज्ज्ञेयो रसो हास्यः ॥ ५० ॥
स्त्रीनीचप्रकृतावेष भूयिष्ठं दृश्यते रसः ।
षड्भेदाश्चास्य विज्ञेयास्तांश्च वक्ष्याम्यहं पुनः ॥ ५१ ॥
स्मितमथ हसितं विहसितमुपहसितं चापहसितमतिहसितम् ।
द्वौ [द्वौ] भेदौ स्यातामुत्तममध्यमाधमप्रकृतौ ॥ ५२ ॥
स्मितहसिते श्रेष्ठानां मध्यानां विहसितोपहसिते च ।
अधमानामपहसितमतिहसितं चापि विज्ञेयम् ॥ ५३ ॥
ईषद्विहसितैर्गण्डैः कटाक्षैः सौष्ठवान्वितैः ।
अलक्षितद्विजं धीरमुत्तमानां स्मितं भवेत् ॥ ५४ ॥
उत्फुल्लानननेत्रं तु गण्डैर्विकसितैरथ ।
किंचिल्लक्षितदन्तं च हसितं तद्विधीयते ॥ ५५ ॥
आकुञ्चिताक्षिगण्डं यत्सस्वनं मधुरं तथा ।
कालागतं सास्यरागं तद्वै विहसितं भवेत् ॥ ५६ ॥
उत्फुल्लनासिकं यत्तु जिह्मदृष्टिनिरीक्षितम् ।
निकुञ्चितांसकशिरस्तच्चोपहसितं भवेत् ॥ ५७ ॥
अस्थानहसितं यत्तु साश्रुनेत्रं तथैव च ।
उत्कम्पितांसकशिरस्तच्चापहसितं भवेत् ॥ ५८ ॥
संरब्धसाश्रुनेत्रं च विक्रुष्टस्वरमुद्धतम् ।
करोपगूढपार्श्वं च तच्चातिहसितं भवेत् ॥ ५९ ॥

हास्यस्थानानि यानि स्युः कार्योत्पन्नानि नाटके ।
उत्तमाधममध्यानामेवं तानि प्रयोजयेत् ॥ ६० ॥
इत्येष स्वसमुत्थस्तथापरसमुत्थितश्च विज्ञेयः ।
द्विविधस्त्रिप्रकृतिगतस्त्र्यवस्थभावो रसो हास्यः ॥ ६१ ॥

अथ करुणो नाम शोकस्थायिभावप्रभवः । स च शापक्लेशविनिपतितेष्टजनविप्रयोगविभवनाशवधबन्धविद्रवोपघातस्पर्शनसंयोगादिभिर्विभावैः समुपजायते । तस्याश्रुपातपरिदेवनमुखशोषणवैवर्ण्यस्त्रस्तगात्रतानिःश्वासस्मृतिलोपादिभिरनुभावैरभिनयः प्रयोक्तव्यः । व्यभिचारिणश्चास्य निर्वेदग्लानिचिन्तौत्सुक्यमोहश्रमभयविषाददैन्यव्याधिजडतोन्मादापस्मारालस्यमरणस्तम्भवेपथुवैवर्ण्याश्रुस्वरभेदादयः । अत्रार्ये भवतः—

इष्टवधदर्शनाद्वा विप्रियवचनस्य संश्रवाद्वापि ।
एभिर्भावविशेषैः करुणरसो नाम संभवति ॥ ६२ ॥
श्वसन[वि]रुदितैर्मोहागमैश्च परिदेवितैर्विलपितैश्च ।
अभिनेयः करुणरसो देहायासाभिघातैश्च ॥ ६३ ॥

अथ रौद्रो नाम क्रोधस्थायिभावात्मको रक्षोदानवोद्धतमनुष्यप्रकृतिः सङ्ग्रामहेतुकः । स च क्रोधाध(म)र्षणाधिक्षेपानृतवचनोपघातवाक्पारुष्याभिद्रोहमात्सर्यादिभिर्विभावैरुत्पद्यते । तस्य च ताडनपाटनपीडनच्छेद्यप्रहरणाहरणशस्त्रसंपातसंप्रहाररुधिराकर्षणाद्यानि कर्माणि । पुनश्च रक्तनयनभ्रुकुटीकरणदन्तौष्ठपीडनगण्डस्फुरणहस्ताग्रनिष्पेषादिभिरनुभावैरभिनयः प्रयोक्तव्यः । भावाश्चास्य—संमोहोत्साहावेगामर्षचपलतौग्र्यस्वेदवेपथुरोमाञ्चादयः । अत्राह—यदभिहितं रक्षोदानवादीनां रौद्रो रसः किमन्येषां नास्ति । उच्यते—अस्त्यन्येषामपि रौद्रो रसः किं त्वधिकारोऽत्र गृह्यते । ते हि स्वभावत एव रौद्राः । कस्मात् । बहुबाहवो बहुमुखाः प्रोद्धूतविकर्ण(ट)पिङ्गलशिरोजा रक्तोद्वृत्तविलोचना भीमासितरूपिणश्चैव । यच्च किंचिदारम्भे स्वभावचेष्टितं वागङ्गादिकं तत्सर्वं रौद्रमेवैषाम् । शृङ्गारश्च तैः प्रायशः प्रसभं सेव्यते । तेषां चानुकारिणो ये पुरुषास्तेषामपि सङ्ग्रामसंप्रहारकृतो रौद्रो रसोऽनुमन्तव्यः । अत्रानुवंश्ये आर्ये भवतः—

युद्धप्रहरपातनविकृतच्छेदनविदारणैश्चैव ।
सङ्ग्रामसंभ्रमाद्यैरेभिः संजायते रौद्रः ॥ ६४ ॥
नानाप्रहरणमोक्षैः शिरः कबन्धभुजकर्तनैश्चैव ।
एभिश्चार्थविशेषैरस्याभिनयः प्रयोक्तव्यः ॥ ६५ ॥
इति रौद्ररसो दृष्टो रौद्रवागङ्गचेष्टितः ।
शस्त्रप्रहारभूयिष्ठ उग्रकर्मक्रियात्मकः ॥ ६६ ॥

अथ वीरो नामोत्तमप्रकृतिरुत्साहात्मकः । स चासंमोहाध्यवसायनयविनयबलपराक्रमशक्तिप्रतापप्रभावादिभिर्विभावैरुत्पद्यते । तस्य स्थैर्यशौर्यत्यागवैशारद्यादिभिरनुभावैरभिनयः प्रयोक्तव्यः । भावाश्चास्य धृतिमानगर्वावेगौग्र्यामर्षस्मृतिरोमाञ्चादयः । अत्रार्ये रसविचारमुखे—

उत्साहाध्यवसायादविषादित्वादविस्मयान्मोहात् ।
विविधा[द]र्थविशेषाद्वीररसो नाम संभवति ॥ ६७ ॥
स्थितिधैर्यवीर(र्य)गर्वैरुत्साहपराक्रमप्रभावैश्च ।
वाक्यैश्चाक्षेपकृतैर्वीररसः सम्यगभिनेयः ॥ ६८ ॥

अथ भयानको नाम भयस्थायिभावात्मकः । स च विकृतरवसत्त्वदर्शनशिवोलूकत्रासोद्वेगशून्यारण्यगमनस्वजनवधबन्धदर्शनश्रुतिकथादिभिर्विभावैरुत्पद्यते । तस्य प्रवेपितकरचरणनयनचपलमुखवैवर्ण्यस्वरभेदादिभिरनुभावैरभिनयः प्रयोक्तव्यः । भावाश्चास्य—स्तम्भस्वेदगद्गदरोमाञ्चवेपथुस्वरभेदवैवर्ण्यशङ्कामोहदैन्यावेगचपलतात्रासापस्मारमरणादयः । अत्रार्याः—

विकृतरवसत्त्वदर्शनसङ्ग्रामारण्यशून्यगृहगमनात् ।
गुरुनृपयोरपराधात्कृतकश्च भयानको ज्ञेयः ॥ ६९ ॥
गात्रमुखदृष्टिभेदैरूरुस्तम्भाभिवीक्षणोद्वेगैः ।
सान्त्व(?)मुखशोषहृदयस्पन्दनरोमोद्गमैश्च भयम् ॥ ७० ॥
एतत्स्वभावजं स्यात्सान्त्व(?)समुत्थं तथैव कर्तव्यम् ।
पुनरेभिरेव भावैः कृतकं मुहु(?)र्वेष्टितैः कार्यम् ॥ ७१ ॥
करचरणवेपथुस्तम्भगात्रसंकोचहृदयकम्पेन ।
शुष्कौष्ठतालुकण्ठैर्भयानको नित्यमभिनेयः ॥ ७२ ॥

अथ बीभत्सो नाम जुगुप्सास्थायिभावात्मकः । स चाहृद्याप्रशस्ताप्रियावेक्षानिष्टश्रवणदर्शनकीर्तनादिभिर्विभावैरुत्पद्यते । तस्य सर्वाङ्गसंहारमुखविकूणनोल्लेखननिष्ठीवनोद्वेजनादिभिरनुभावैरभिनयः प्रयोक्तव्यः । भावाश्चास्य—अपस्मारावेगमोहव्याधिमरणादयः । अत्रार्ये भवतः—

अनभिमतदर्शनेन च गन्धरसस्पर्शदोषैश्च ।
उद्वेजनैश्च बहुभिर्बीभत्सरसः समुद्भवति ॥ ७३ ॥
मुखनेत्रविकूणनया नासाप्रच्छादनावनमितास्यैः ।
अव्यक्तपादपतनैर्बीभत्सः सम्यगभिनेयः ॥ ७४ ॥

अद्भुतो नाम विस्मयस्थायिभावात्मकः । स च दिव्यदर्शनेप्सितमनोरथावाप्त्युत्तमवनदेवकुलादिगमनासंभाव्यमानमायेन्द्रजालसंभावनादिभिर्विभावैरुत्पद्यते । तस्य नयनविस्तारानिमेषप्रेक्षणरोमाञ्चाश्रुस्वेदहर्षसाधुवाददानप्रबन्धझांकार[1](?)चेलाङ्गुलिभ्रमणादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

भावाश्चास्य—स्तम्भाश्रुस्वेदगद्गदरोमाञ्चावेगसंभ्रमजडताप्रलापा भवतः (न्ति) । अत्रानुवंश्ये आर्ये भवतः—

यत्त्वतिशयार्थयुक्तं वाक्यं शिल्पं च कर्म रूपं वा ।
तत्सर्वमद्भुतरसे विभावरूपं हि विज्ञेयम् ॥ ७५ ॥
स्पर्शग्रहाल्लु(?)कुत्सनैर्हाहाहारैश्च········ ।
वेपथुगद्गदवचनैः स्वेदाद्यैरभिनयस्तस्य ॥ ७६ ॥
शृङ्गारं त्रिविधं विद्याद्वाङ्नेपथ्यक्रियात्मकम् ।
अङ्गनेपथ्यवाक्यैश्च हास्यरौद्रौ तथा स्मृतौ ॥ ७७ ॥
धर्मोपघातजश्चैव तथार्थापचयोद्भवः ।
तथा शोककृतश्चैव करुणस्त्रिविधः स्मृतः ॥ ७८ ॥
दानवीरं धर्मवीरं युद्धवीरं तथैव च ।
रसं वीरमपि प्राह ब्रह्मा त्रिविधमेव हि ॥ ७९ ॥
व्याजाच्चैवापराधाच्च वित्रासितकमेव च ।
पुनर्भयानकं चैव विद्यात्त्रिविधमेव हि ॥ ८० ॥

---

१. 'डाकार' ख.

बीबत्सः क्षोभणः शुद्ध उद्वेगी स्याद्वितीयकः ।
विष्ठाक्रैमिति(?)रुद्वेगी क्षोभणो रुधिरादिजः ॥ ८१ ॥
दिव्यश्चानन्दजश्चैव द्विधा ख्यातोऽद्भुतो रसः ।
दिव्यदर्शनजो दिव्यो हर्षादानन्दजः स्मृतः ॥ ८२ ॥
एवमेते रसा ज्ञेयास्त्वष्टौ लक्षणलक्षिताः ।
अत ऊर्ध्वं प्रवक्ष्यामि भावानामपि लक्षणम् ॥ ८३ ॥

इति श्रीभारतीये नाट्यशास्त्रे रसाध्यायः षष्ठः ।

---

सप्तमोऽध्यायः ।

भावानिदानीं वक्ष्यामः—किं भावयन्तीति, उच्यते—वागङ्गसत्त्वोपेतान्काव्यार्थान्भावयन्तीनि भावाः । भू इति करणे धातुः । भावितं कृतमित्यनर्थान्तरम् । लोकेऽपि च सिद्धमहोद्यानानगन्धेन(?) रसेन वा सर्वमेव भावितमिति । उच्च(क्त)व्याप्तर्थं श्लोकाश्चात्र भवन्ति—

विभावेनोद्धृतो योऽर्थस्त्वनुभावैश्च गम्यते ।
वागङ्गसत्त्वाभिनयैः स भाव इति संज्ञितः ॥ १ ॥
वागङ्गमुखरागेण सान्त्वनाभिनयेन च ।
कवेरन्तर्गतं भावं भावयन्भाव उच्यते ॥ २ ॥
नानाभिनयसंबद्धान्भावयन्ति रसानिमान् ।
यस्मात्तस्मादमी भावा विज्ञेया नाट्ययोक्तृभिः ॥ ३ ॥

विभाव इति कस्मादुच्यते । विभावो विज्ञानार्थः । विभाव्यन्तेऽनेन वागङ्गसत्त्वाभिनया इत्यतो विभावः । विभावितं विज्ञातमित्यनर्थान्तरम् ।

अत्र श्लोकः—

बहवोऽर्था विभाव्यन्ते वागङ्गाभिनयाश्रयाः ।
अनेन यस्मात्तेनायं विभाव इति संज्ञितः ॥ ४ ॥

अथानुभाव इति कस्मादुच्यते । यदयमनुभावयति वागङ्गसत्त्वकृतमभिनयम् । अत्र श्लोकः—

---

१. 'विष्ठाकमिति' क.

वागङ्गसत्त्वाभिनयैर्यस्मादर्थो विभाव्यते ।
वागङ्गोपाङ्गसंयुक्तस्त्वनुभाव इति स्मृतः ॥ ५ ॥

एवमेतेषां विभावानुभावसंयुक्तानां लक्षणनिदर्शनान्यभिव्याख्यास्यामः—तत्र विभावानुभावौ लोकप्रसिद्धौ । लोकस्वभावोपगतत्वादनयोर्लक्षणं नोच्यतेऽतिप्रसङ्गनिवृत्त्यर्थः(र्थम्) । अत्र श्लोकः—

लोकस्वभावसंसिद्धा लोकयात्रानुगामिनः ।
अनुभावा विभावाश्च ज्ञेयास्त्वभिनयैर्बुधैः ॥ ६ ॥

तत्राष्टौ भावाः स्थायिनः । त्रयस्त्रिंशद्व्यभिचारिणः । अष्टौ सात्त्विकाः । एवमेते काव्यरसाभिव्यक्तिहेतव एकोनपञ्चाशद्भावाः प्रत्यवगन्तव्याः । एभ्यश्च सामान्यगुणयोगेन रसा निष्पद्यन्ते । भवति चात्र श्लोकः—

योऽर्थो हृदयसंवादी तस्य भावो रसोद्भवः ।
शरीरं व्याप्यते तेन शुष्ककाष्ठमिवाग्निना ॥ ७ ॥

अत्राह—यदान्योन्यार्थसंभूतैर्विभावानुभावव्यञ्जितैरेकोनपञ्चाशता भावैः सामान्यगुणयोगेनाभिनिष्पद्यन्ते रसाः, तत्कथं स्थायिन एव भावा[1] रसत्वमाप्नुवन्ति । उच्यते—यथा हि समानलक्षणास्तुल्यपाणिपादोदरशरीराः समानाङ्गप्रत्यङ्गाः कुलविद्याकर्मशिल्पविचक्षणत्वाद्राजत्वमाप्नुवन्ति तत्रैव चान्येऽल्पबुद्धयस्तेषामेवानुचरा भवन्ति तथा विभावानुभावव्यभिचारिणः स्थायिभावानुपाश्रिता भवन्ति । बह्वाश्रयत्वात्स्वामिभूताः स्थायिनो भावाः । तत्स्थानीयपुरुषगुणभूता अन्ये भावास्तान्गुणतया आश्रयन्ते परिजनभूता व्यभिचारिणो भावाः । यथा नरेन्द्रो बहुजनपरिवारोऽपि स एव नाम लभते नान्यः सुमहानपि पुरुषस्तथा विभावानुभावव्यभिचारिपरिष्कृतः स्थायिभावो रसतां लभते ।

यथा नराणां नृपतिः शिष्याणां च यथा गुरुः ।
एवं हि सर्वभावानां भावः स्थायी महानिह ॥ ८ ॥

तत्र हासो नाम परचेष्टानुकरणासंबद्धप्रलापपौरोभाग्यसौख्यादिभिर्विभावैरुत्पद्यते । तानभिनयेत्पूर्वोक्तैर्हसितादिभिः । भवति चात्र श्लोकः—

---

१. 'भावभावाः' ख.

परचेष्टानुकरणाद्धासः समुपजायते ।
स्मितहासातिहसितैरभिनेयः स पण्डितैः ॥ ९ ॥

रतिर्नाम ऋतुमाल्यालेपनाभरणभोजनवरभावानुभवनाप्रातिकूल्यादिभिर्विभावैरुत्पद्यते । तामभिनयेत्स्मितमधुरवचनभ्रूक्षेपकटाक्षादिभिरनुभावैः। भवति चात्र श्लोकः—

इष्टार्थविषयप्राप्त्या रतिरित्युपजायते ।
सौम्यत्वादभिनेया सा वाङ्माधुर्याङ्गचेष्टितैः ॥ १० ॥

शोको नाम इष्टजनवियोगविभवनाशवधबन्धदुःखानुभावादिभिर्विभावैरुत्पद्यते । तस्याश्रुपातविलपितपरिदेवितवैवर्ण्यस्वरभेदस्रस्तगात्रताभूमिपाताक्रन्दितदीर्घनिःश्वसितादिभिरनुभावैरभिनयः प्रयोक्तव्यः । रुदितमत्र त्रिविधम्—आनन्दजमार्तिजमीर्ष्याकृतं चेति । तत्र

हर्षोत्फुल्लकपोलं सानुस्मरणादपाङ्गनिसृतास्रम् ।
रोमाञ्चपुलकसंकुलमानन्दसमुद्भवं भवति ॥ ११ ॥
पर्याप्तविमुक्तास्रं सस्वनमस्वस्थगात्रगतिचेष्टम् ।
भूमिनिपातविवर्तितविलपितमित्यार्तिजं भवति ॥ १२ ॥
प्रस्फुरितौष्ठकपोलं सशिरःकम्पं तथा सनिःस्वानम् ।
भ्रुकुटीकटाक्षकुटिलं स्त्रीणामीर्ष्याकृतं भवति ॥ १३ ॥
स्त्रीनीचप्रकृतिष्वेव शोको व्यसनसंभवः ।
धैर्येणोत्तममध्यानां नीचानां रुदितेन च ॥ १४ ॥

क्रोधो नाम आधर्षणाक्षुण्णविवादकलहप्रतिकूलादिभिर्विभावैरुत्पद्यते । तमभिनयेदुत्फुल्लनासापुटोद्वृतनयनसंदष्टौष्ठपुटगल्लस्फुरणादिभिः ।

····कुटिलोत्कटमुखः संदष्टौष्ठः स्पृशन्करेण करम् ।
धृष्टः स्वभुजप्रेक्षी शत्रोर्नियन्त्रणं रुष्येत् ॥ १५ ॥
किंचिदवाङ्मुखदृष्टिं(ष्टिः) किंचित्स्वेदापमार्जनपरस्य(श्च) ।
अव्यक्तोल्बणचेष्टो गुरोर्विनाययन्त्रितं (?) रुष्येत् ॥ १६ ॥
अल्पतरप्रविचारो विरहन्नश्रूण्यपाङ्गविक्षेपैः ।
सभ्रुकुटिस्फुरितोष्ठा(ष्ठं) प्रणयोपगताश्रयं रुष्येत् ॥ १७ ॥

अथ परिजने नु रोषस्तर्जननिर्भर्त्सनाक्षिविस्तारैः ।
विप्रेक्षणैश्च विविधैरभिनेयः क्रूरतारहितः ॥ १८ ॥
कारणमपेक्षमाणः प्रायेणायामलिङ्गसंयुक्तः ।
द्विरसान्तरसंचारी कार्ये कृतको भवेद्रोषः ॥ १९ ॥

उत्साहो नाम उत्तमप्रकृतिः । स चाविषादशक्तिधैर्यशौर्यादिभिर्विभावैरुत्पद्यते । तस्य धैर्यात्यागवैशारथ्या(?) दिभिरभिनयः प्रयोक्तव्यः । अत्र श्लोकः—

असंमोहादिभिर्व्यक्तो व्यवसायमयात्मकः ।
उत्साहस्त्वभिनेयोऽसावप्रमादक्रियादिभिः ॥ २० ॥

भयं नाम स्त्रीनीचप्रकृतिकम् । गुरुराजापराधशून्यागाराटवीपर्वतदर्शननिर्भर्त्सनकान्तारदुर्दिननिशान्धकारकाकोलूकनक्तंचरारावश्रवणादिभिर्विभावैरुत्पद्यते । तस्य प्रवेपितकरचरणहृदयकम्पनस्तम्भमुखशोषजिह्वापरिलेहनस्वेदवेपथुपरित्राणान्वेषणधावनोत्क्रुष्टादिभिरनुभावैरभिनयः प्रयोक्तव्यः । अत्रार्या—

करचरणहृदयकम्पैः स्तम्भनजिह्वोपलेहमुखशोषैः ।
स्रस्तसुविषण्णगात्रैरस्याभिनयः प्रयोक्तव्यः ॥ २१ ॥

जुगुप्सा नाम स्त्रीनीचप्रकृतिः । सा चाहृद्यश्रवणदर्शनादिभिर्विभावैरुत्पद्यते । तस्याः सर्वाङ्गसंकोचननिष्ठोनिज(निष्ठीवन)मुखविकूणनहृल्लेखादिभिरनुभावैरभिनयः प्रयोक्तव्यः । पठत्यपि च—

नासाप्रच्छादनेनेह गात्रसंकोचनेन च ।
उत्तमेनावरैः साध्यः प्रहर्षपुलकादिभिः ॥ २२ ॥

एवमेते स्थायिभावाः प्रत्यवगन्तव्याः ।

व्यभिचारिण इति कस्मात् । उच्यते—वि–अभि इत्येतावुपसर्गौ चरतौ धातु(चरतिर्धातुः) । वि[वि]धमाभिमुख्येन रसेषु चरन्तीति व्यभिचारिणः । चरन्ति नयन्तीत्यर्थः । कथं नयन्ति—उच्यते—यथा सूर्य इदं नक्षत्रममुं वासरं नयतीति । न च तेन बाहुभ्यां स्कन्धेन वा नीयते । किं

१. 'धावनोत्क्रुष्टोत्कटादिभिः' ख.

तु लोकप्रसिद्धमेतत् । यथेदं सूर्यो नक्षत्रमिदं वा नयतीति एवमेते व्यभिचारिण इत्यवगन्तव्याः ।

तत्र निर्वेदो नाम दारिद्र्यशाप(पाप)मानाधिक्षेपाक्रुष्टक्रोधताडनेष्टजनवियोगतत्त्वज्ञानादिभिर्विभावैः समुत्पद्यते । तमभिनयेद्रुदितनिःश्वसितोच्छ्वसितसंप्रधारणादिभिरनुभावैः । भवति चात्र श्लोकः—

दारिद्र्येष्टवियोगेषु निर्वेदो नाम जायते ।
संप्रधारणनिःश्वासैस्तस्य त्वभिनयो भवेत् ॥ २३ ॥

अत्रानुवंश्ये आर्ये भवतः—

इष्टजनविप्रयोगाद्दारिद्र्याद्व्याधितस्तथा दुःखात् ।
परवृद्धिं वा दृष्ट्वा निर्वेदो नाम संभवति ॥ २४ ॥
बाष्पपरिप्लुतनयनः पुनः पुनः श्वासदीनमुखनेत्रः ।
योगीव ध्यानरतो भवति हि निर्वेदवान्पुरुषः ॥ २५ ॥

ग्लानिर्नाम—वान्तविरिक्तव्याधिततपोनियमोपवासमनस्तापातिपानमदनसेवनातिव्यायामाध्वगमन………………………।……………क्षुत्पिपासानिद्राच्छेदादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

वान्तविरिक्तव्याधिषु तपसा च विजायते ग्लानिः ।
कार्श्येन साभिनेया मन्दक्रमणेन कम्पेन ॥ २६ ॥
गदितैः क्षामक्षामैर्नेत्रविकारैश्च दीनसंचारैः ।
श्लथभावेनाङ्गानां मुहुर्मुहुर्निर्दिशेद्ग्लानिम् ॥ २७ ॥

शङ्का नाम—चौर्याभिग्रहनृपापराधपापकर्मकरणादिभिर्विभावैः समुत्पद्यते संदेहात्मिका स्त्रीनीचानाम् । सा च मुहुर्मुहुरवलोकनावगुण्ठनमुखशोषणजिह्वापरिलेहनमुखवर्णभेदवेपथुशुष्कौष्ठकण्ठवायससाधर्म्यादिभिरनुभावैरभिनीयते ।

चौर्यादिजनिता शङ्का प्रायः कार्या भयानके ।
····त्रिव्यालीकजनिता तथा शृङ्गारिणी मता ॥ २८ ॥

अत्राकारसंवरणमपि केचिदिच्छन्ति च । तच्च कुशलैरुपाधिभिरिङ्गितैश्चोपलक्ष्यम् । अत्रार्ये—

द्विविधा शङ्का कार्या ह्यात्मसमुत्था च परसमुत्था च ।
या तत्र परसमुत्था सा ज्ञेया दृष्टिचेष्टाभिः ॥ २९ ॥
किंचित्प्रवेपिताङ्गस्तथोन्मुखो वीक्षते च पार्श्वानि ।
सगुरु(?)सज्जमानजिह्वः श्यामास्यः शङ्कितः पुरुषः ॥ ३० ॥

असूया नाम—नानापराधद्वेषपरैश्वर्यसौभाग्यमेधाविद्यालीलादिभिर्विभावैरुत्पद्यते । तस्याश्च परिषदि दोषप्रख्यापनगुणोपघातचक्षुःप्रदानाधोमुखभ्रुकुटीक्रियावज्ञात(न)कुत्सनादिभिरनुभावैरभिनयः प्रयोक्तव्यः । अत्रार्ये भवतः—

परसौभाग्येश्वरतामेधालीलासमुच्छ्रयान्दृष्ट्वा ।
अभिनेतव्यासूया कृतापराधो भवेद्यस्तु ॥ ३१ ॥
भ्रुकुटिकुटिलोत्कटमुखैः सेर्ष्याक्रोधपरिवर्तिभिश्चित्रैः(नेत्रैः)।
गुणनाशनविद्वेषैस्तस्याः कार्यः सदाभिनयः ॥ ३२ ॥

मदो नाम—मद्योपयोगादुच्यते[1](दुत्पद्यते)। स च त्रिविधः पञ्चविधभावश्च । अत्रार्या भवन्ति—

त्रिविधस्तु मदः कार्यस्तरुणो मध्यस्तथावकृष्टश्च ।
करणं पञ्चविधं स्यात्तस्याभिनयः प्रयोक्तव्यः ॥ ३३ ॥
कश्चिन्मत्तो गायति रोदिति कश्चित्तथा हसति कश्चित् ।
परुषवचनाभिधायी कश्चित्कश्चित्तथा स्वपिति ॥ ३४ ॥
उत्तमसत्त्वः शेते हसति च गायति च मध्यमप्रकृतिः ।
परुषवचनाभिधायी रोदित्यपि चाधमप्रकृतिः ॥ ३५ ॥
स्मितवदनमधुररागोद्धृष्टतनुः किंचिदाकुलितवाक्यः ।
सुकुमारो विद्धगतिस्तरुणमदस्तूत्तमप्रकृतिः ॥ ३६ ॥
स्खलिताघूर्णितनयनः स्रस्तव्याकुलितबाहुविक्षेपः ।
कुटिलव्याविद्धगतिर्मध्यमदो मध्यमप्रकृतिः ॥ ३७ ॥
नष्टस्मृतिर्हतश्च(?)च्छर्दितहिक्काकफैः सुबीभत्सः ।
गुरुसज्जमानजिह्वो निष्ठंचति(निष्ठीवति) मध्य(चाध?)मप्रकृतिः॥३८

1. 'उष्यते' ख.

रङ्गे पिबतः कार्या मदवृद्धिर्नाट्ययोगमासाद्य ।
कार्यो मदक्षयो वै यः खलु पीत्वा प्रवीष्टस्य ते (?)॥ ३९ ॥
स त्रासाच्छोकाद्वा भयाच्च हर्षाच्च कारणोपगतः ।
वक्रोक्त्यापि हि कार्यो मदप्रणाशस्तथोनज्ञैः(तथा तज्ज्ञैः?) ॥४०॥
एभिर्भावविशेषैर्मदो द्रुतं संप्रणाशमुपयाति ।
अभ्युदयैमुखैः(अभ्युदयैः सुख)वाक्यैस्तथैव शोकः क्षयं याति॥४१

श्रमो नाम—अर्थ(?)व्यायामसेवनादिभिर्विभावैः समुत्पद्यते। तस्य गात्रसंवाहननिश्वसितमुखविकूणनविजृम्भणाङ्गमर्दमन्दपादोत्क्षेपणादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

आलस्यं नाम—स्वभावखेदश्रमव्याधिसौहित्यगर्भादिभिर्विभावैः समुत्पद्यते। स्त्रीनीचानां तदभिनयेत्सर्वकर्मविद्वेषशयनासनतन्द्रीनिद्रासेवनादिभिः। अत्रार्या—

आलस्यं त्वभिनेयं खेदोपगतं स्वभावजं वापि ।
आहारवर्जितानामारम्भाणामनारम्भात् ॥ ४२ ॥

दैन्यं नाम—दौर्गत्यमनस्तापादिभिर्विभावैः समुत्पद्यते। तच्चावृत्तिशिरोगात्रगौरवमृजापरिवर्जनादिभिरनुभावैरभिनेतव्यम् । अत्रार्या—

वित्तौत्सुक्यसमुत्था दुःखाद्या भवति दीनता पुंसाम् ।
सर्वमृजानां परिमार्जनैश्च विविधैरभिनयोऽस्याः ॥ ४३ ॥

चिन्ता नाम—ऐश्वर्यभ्रंशेष्टद्रव्यापहारदारिद्र्यादिभिर्विभावैः समुत्पद्यते। तामभिनयेन्निःश्वसितसंतापध्यानाधोमुखचिन्तनकार्श्यादिभिरनुभावैः । अत्रार्ये—

ऐश्वर्ये द्रव्यापहारे जनिता बहुप्रकारा तु ।
हृदयवितर्कोपगता [चिन्ता] नृणां समुद्भवति ॥ ४४ ॥
सोच्छ्वसितैर्निःश्वसितैः संतापैश्चैव हृदयशून्यतया ।
अभिनेतव्या चिन्ता मृजाविहीनेन धृत्या च ॥ ४५ ॥

१. पुस्तकद्वयेऽप्यशुद्धेवेयमार्या.

मोहो नाम—दैवोपघातव्यसनाभिघातभयावेगपूर्ववैरानुस्मरणादिभिर्वि- भावैः समुत्पद्यते । तस्य निश्चैतन्यभ्रमणपतनाघूर्णनदर्शनादिभिरभिनयः प्रयोक्तव्यः । भवत्यपि च[1]—

अस्थाने तस्करान्दृष्ट्वा त्रासनैर्वा पृथग्विधैः ।
तत्प्रतीकारशून्यस्य मोहः समुपजायते ॥ ४६ ॥

अत्रार्या—

व्यसनाभिघातभयपूर्वरस( वैर )स्मरणजो भवति मोहः ।
सर्वेन्द्रियसंमोहात्त्वस्याभिनयः प्रयोक्तव्यः ॥ ४७ ॥

स्मृतिर्नाम—सुखदुःखकृतानां भावानामनुस्मरणं स्वास्थ्याजघन्यरात्र- (?)निद्राच्छेदसमानदर्शनतोदाहरणचिन्ताभ्यासादिभिर्विभावैरुपत्पद्यते । ता- मभिनयेच्छिरःकम्पनावलोकनभ्रूसमुन्नमनादिभिरनुभावैः । अत्रार्ये—

सुखदुःखमतिक्रान्तं तथा मतिविभावितं यथावृत्तम् ।
चिरविस्मृतं स्मरति यः स्मृतिमानिति वेदितव्योऽसौ ॥ ४८ ॥
स्वास्थ्याभ्याससमुत्था श्रुतिदर्शनसंभवा स्मृतिर्निपुणैः ।
शिरउद्वाहनकम्पैर्भ्रूक्षेपैः साभिनेतव्या ॥ ४९ ॥

धृतिर्नाम—विज्ञानश्रुतिविभवशौचाचारगुरुभक्त्यधिकमनोरथार्थलाभ- क्रीडादिभिर्विभावैः समुत्पद्यते । तामभिनयेत्प्राप्यमां(प्राप्तानां)[2] विषयाणा- मुपभोगादप्राप्तातीतो(ता)पहृतविनष्टानामननुशोचनादिभिरनुभावैः । अ- त्रार्ये—

विज्ञानशौचविभवश्रुतिशक्तिसमुद्भवा धृतिः सद्भिः ।
भयशोकविषादाद्यै रहिता तु सदा प्रयोक्तव्या ॥ ५० ॥
प्राप्तानामुपभोगः शब्दस्पर्शरसरूपगन्धानाम् ।
अप्राप्तैश्च न शोको यस्यां हि भवेद्धृतिः सा तु ॥ ५१ ॥

व्रीडा नाम—अकार्यकरणात्मिका गुरुव्यतिक्रमणा च ज्ञानप्रतिज्ञानि- र्वहणपश्चात्तापादिभिर्भावैरुत्पद्यते । तां गूढवदनाधोमुखविचिन्तनविलेखन- वस्त्राङ्गुलीयकस्पर्शनखनिस्तोदनादिभिरनुभावैरभिनयेत् । अत्रार्ये—

---

१ श्लोक इति शेषः. २. 'प्रात्थं मां' ख.

किंचिदकार्यं कुर्वाण एव यो दृश्यते शुचिभिरन्यैः ।
पश्चात्तापेन युतो व्रीडित इति वेदितव्योऽसौ ॥ ९२ ॥
लज्जानिगूढवदनो भूमिं विलिखन्नखांश्च विनिकुञ्चन् ।
वस्त्राङ्गुलीयकानां संस्पर्शं व्रीडितः कुर्यात् ॥ ९३ ॥

चपलता नाम—रागद्वेषमात्सर्यामर्षेर्ष्याप्रतिकूलादिभिर्विभावैरुत्पद्यते । तस्याश्च वाक्पारुष्यनिर्भर्त्सनसंप्रहारवधबन्धनताडनादिभिरनुभावैरभिनयः प्रयोक्तव्यः । अत्रार्या—

अविमृश्य तु (यः) कार्यं पुरुषो वधताडनं समारभते ।
अविनिश्चितकार्यत्वात्स हि खलु चपलो बुधैर्ज्ञेयः ॥ ९४ ॥

हर्षो नाम—मनोरथलाभेप्सितावाभीष्ट(?)जनसमागत(म)मनु(?)पुलकितपरितोषदेवगुरुराजभर्तृप्रसादभोजनाच्छादनधनलाभोपभोगादिभिर्विभावैरुत्पद्यते । तमभिनयेन्नयनवदनप्रसादप्रियभाषणकटिकत(?)मुकुलिताश्रुस्वेदादिभिरनुभावैः । अत्रार्या—

प्राप्ते वाप्राप्ते वा लब्धेऽर्थे प्रियसमागमे वापि ।
हृदयमनोरथलाभे हर्षः संजायते पुंसाम् ॥ ९५ ॥

आवेगो नाम—उत्पातवातवर्षाग्निकुञ्जरोद्भ्रमणप्रियाप्रियश्रवणनयनाभिघातादिभिर्विभावैः समुत्पद्यते । धवोपोत(सचोत्पात?)कृतो नाम विद्युदुल्कानिर्घातप्रतपनचन्द्रसूर्योपरागकेतुदर्शनकृतः । तमभिनयेत्सर्वाङ्गस्त्रस्ततावैमनस्यमुखवैवर्ण्यविषादविस्मयादिभिः । वातकृतं पुनरवगुण्ठनाक्षिमर्दनवस्त्रसंगूहनत्वरितगमनादिभिः । वर्षाकृतं पुनः सर्वाङ्गसंपिण्डनप्रधावनच्छत्राश्रयणादिभिः । अग्निकृतं तु धूमाकुला तत्रताङ्ग(?)संवेगविधूननातिक्रान्तापकान्तादिभिः(?) । कुञ्जरोद्भ्रमणकृतमपि त्वरितापसर्पणचपलगमनभयस्तम्भवेपथुपश्चादवलोकनविस्मयादिभिः । प्रियश्रवणकृतमभ्युत्थानालिङ्गनवस्त्राभरणप्रोद्यताश्रुपुलकितादिभिः । अप्रियश्रवणकृतमप्युच्चपतनचलनपरिवर्तितपरिधावितविलापाक्रन्दादिभिः । व्यसनकृतं तु सहसोपक्रमणशस्त्रधर्मधरणवेपनगजतुरगारोहणसंप्रधारणादिभिः ।

इत्येषोऽष्टविधो ज्ञेय आवेगः संभ्रमात्मकः।
स्थैर्येणोत्तममध्यानां नीचानां चापसर्पणैः॥ ९६॥

अत्रार्ये—

अप्रियनिवेदनाद्वा सहसा ह्यवधीरि[तस्य?] वचनस्य।
शत्रुक्षेपत्रासादावेगो नाम संभवति॥ ९७॥
अप्रियनिवेदनावो(द्यो?) विषादभावाश्रयोऽनुभावोऽस्य।
सहसारिदर्शनाच्चेत्प्रहरणपरिदेवनं कार्यम्॥ ९८॥

जडता नाम—सर्वकार्याप्रतिपत्तिरिष्टानिष्टश्रवणदर्शनव्याध्यादिभिर्विभावैः समुत्पद्यते। तामभिनयेत् [1]कथनाभाषणतूष्णींभावानिमेषनिरीक्षणपरवशत्वादिभिरनुभावैः। अत्रार्या—

इष्टं वानिष्टं वा सुखदुःखे वा [2]न वेत्ति यो मोहात्।
तूष्णीकः परवशगः स भवति जडसंज्ञकः पुरुषः॥ ९९॥

गर्वो नाम—ऐश्वर्यकुलरूपयौवनविद्याबलादिभिर्विभावैः समुत्पद्यते। तमसूयावज्ञाधर्षणानुत्तरदानाभाषणाङ्गावलोकनविभ्रमापहसनपारुष्यगुरुव्यतिक्रमणाधिक्षेपादिभिरनुभावैरभिनयेत्। भवति चात्रार्या—

विद्यावाप्ते रूपादैश्वर्यादथ धनागमाद्वापि।
गर्वः स च नीचानां दृष्टयङ्गविचारणैः कार्यः॥ ६०॥

विषादो नाम—कार्याणि (कार्यहानि?) रणदैवव्यापत्तिसमुत्थः। तमभिनयेत्सहायान्वेषणोपायविचिन्तनोत्साहनि[3]र्घातवैमनस्यादिभिरुत्तममध्यमानाम्। अधमानां तु विपरिधावनावलोकनमुखशोषसृक्कपरिलेहननिद्राश्वसितध्यानादिभिः। अत्रार्ये—

कार्यालिस्तरणकृतचौर्याभिकृतग्रहणराजदोषाद्यैः (?)।
दैवादिष्टो योऽर्थस्तदसंप्राप्तौ विषादः स्यात्॥ ६१॥
विचित्रोपायचिन्ताभ्यां कार्य उत्तममध्ययोः।
निद्राभिश्वमत(निःश्वसित)ध्यानैरधमानां तु दर्शयेत्॥ ६२॥

---

१. 'अकथना भाषणं' क. २. 'वेत्ति न ये' ख. ३. 'निर्वालवैनामनस्या' ख.

औत्सुक्यं नाम—इष्टजनवियोगानुस्मरणादिभिर्विभावैरुत्पद्यते । तद्दीर्घनिःश्वसिताधोमुखविचिन्तननिद्रातन्द्राशयनादिभिरभिनयेत् । भवत्यपि च—

इष्टजनस्य वियोगादौत्सुक्यं जायते ह्यनुस्मृत्या ।
चिन्तानिद्रातन्द्रागात्रगुरुत्वैरभिनयोऽस्य ॥ ६३ ॥

निद्रा नाम—दौर्बल्यश्रमक्लममदालस्यचिन्तात्याहारस्वभावादिभिर्विभावैरुत्पद्यते । तामभिनयेद्वदनगौरवशरीरालालननेत्रघूर्णनविजृम्भणगात्रमर्दोच्छ्वसितनिःश्वसितसन्नगात्रताक्षिनिमीलनसर्वेक्रियासंमोहादिभिरनुभावैः । अत्रान्तरे आर्ये—

आलस्याद्दौर्बल्यात्क्लमाच्छ्रमाच्चिन्तनात्स्वभावाच्च ।
रात्रौ जागरणादपि निद्रा पुरुषस्य संभवति ॥ ६४ ॥
तां मुखगौरवगात्रपरिलोलनयनमीलनजन्वैः (?) ।
जृम्भणगात्रविमर्दैरनुभावैरभिनयेत्प्राज्ञः ॥ ६५ ॥

अपस्मारो नाम—देवनागयक्षब्रह्मराक्षसभूतपिशाचादीनां ग्रहणोच्छिष्टशून्यागारसेवनाशुचिकालान्तरापातधातुवैषम्यादिभिर्विभावैरुत्पद्यते । तस्य स्फुरितकम्पितनिःश्वसितधावनपतनस्वेदस्तम्भवदनफेनजिह्वापरिलेहनादिभिरनुभावैरभिनयः प्रयोक्तव्यः । भवति चात्र—

भूतप्रेतपिशाचग्रहणानुस्मरणोच्छिष्टशून्यगृहगमनात् ।
कालान्तरातिपातादशुचिषु च भवत्यपस्मारः ॥ ६६ ॥
सहसा भूमौ पतनं प्रकम्पनं वदने फेनमोक्षश्च ।
निःसंज्ञस्योत्थानं रूपाण्येतान्यपस्मारस्य ॥ ६७ ॥

सुप्तं नाम—निद्रासमुत्थम् । तदुच्छ्वसितनिःश्वसितसन्नगात्राक्षिनिमीलनसर्वेन्द्रियसंमोहस्वप्नायितादिभिरनुभावैरभिनयेत् ।

निःश्वासैः सोरा(च्छ्वा)सैर्मन्दाक्षि(भिर्)निमीलने निश्चेष्टः ।
सर्वेन्द्रियसंमोहात्सुप्तं स्वप्नैश्च युञ्जीत ॥ ६८ ॥

विबोधो नाम—निद्राछेदाहारापरिणामस्वप्नान्तशब्दस्पर्शादिभिर्विभावैरुत्पद्यते । तं जृम्भणाक्षिविमर्दनशयापाक्षणाङ्ग(?)चलनभुजाक्षेपाङ्गुलित्रोटनादिभिरभिनयेत् । अत्रार्या—

आहारविपरिणामाच्छब्दस्पर्शादिभिश्च संभूतः ।
प्रतिबोधस्त्वभिनेयोजृम्भणवदनाक्षिपरिमर्दैः ॥ ६९ ॥

अमर्षो नाम—विद्यैश्वर्यधनबलाधिकैरधिक्षिप्तस्यापमानितस्य वा समुत्पद्यते । तं शिरःकम्पनप्रस्वेदाधोमुखविचिन्तनाध्यवसायध्यानोपायान्वेषणादिभिरभिनयेत् । भवति चात्र—

आक्षिप्तानां सभामध्ये विद्यैश्वर्यबलाधिकैः ।
नृणामुत्साहसंपन्नो ह्यमर्षो नाम जायते ॥ ७० ॥
उत्साहाध्यवसायाभ्यामधोमुखविचिन्तितैः ।
शिरःप्रकम्पप्रस्वेदास्तं प्रयुञ्जीत पण्डितः ॥ ७१ ॥

अवहित्थं नाम—आकारप्रच्छादनात्मकम् । तच्च लज्जाभयगौरवजैह्म्यादिभिर्विभावैरुत्पद्यते । तस्यान्यथाकथनाविलोकितकथाभङ्गकृतकधैर्यादिभिरभिनयः प्रयोक्तव्यः । भवति चात्र—

धार्ष्ट्यजैह्म्यादिसंभूतमवहित्थं भयानकम् ।
तच्चागणनया कार्यं तानि चोत्तरभाषणात् ॥ ७२ ॥

अथोग्रता नाम—चौर्याभिग्रहणनृपापराधासत्प्रलापादिभिर्विभावैः समुत्पद्यते । तां च वधबन्धनताडननिर्भर्त्सनादिभिरनुभावैरभिनयेत् । भवति चात्र—

चौर्याभिग्रहयोगान्नृपापराधात्तथोग्रता भवति ।
वधबन्ध(न)ताडनादिभिरनुभावैरभिनयस्तस्याः ॥ ७३ ॥

मतिर्नाम—नानाशास्त्रचिन्तनोहापोहादिभिर्विभावैरुत्पद्यते । तामभिनयेत् शिष्ये वेदेशार्थ(वेदशास्त्र ?)विकल्पनसंशयच्छेदादिभिरनुभावैः । भवति चात्र—

नानाशास्त्रसुनिष्पन्ना मतिः संजायते नृणाम् ।
शिष्योपदेशार्थकृतस्तस्यास्त्वभिनयो भवेत् ॥ ७४ ॥

व्याधिर्नाम—वातपित्तकफसंनिपातप्रभवः । तस्य ज्वरादयो विशेषाः । ज्वरस्तु द्विविधः । सशीतः सदाहश्च । तत्र सशीतः प्रवेपितसर्वाङ्गोत्कम्प-

नहेतुचलनास्यविकूणनमुखशोषणरोमाञ्चास्रपरिदेवितादिभिरनुभावैरभिनेयः। स दाहस्तु विक्षिप्ताङ्गकरचरणभूम्यभिलाषानुलेपनशीताभिलाषपरिदेविताक्रुष्टादिभिः। ये चान्ये व्याधयस्तेऽपि मुखविकूणनगात्रस्तम्भस्तनिताक्रुष्टवेपनादिभिरभिनेयाः। अत्र श्लोकः—

समासतस्तु व्याधीनां कर्तव्योऽभिनयो बुधैः।
स्रस्ताङ्गगात्रविक्षेपैस्तथा मुखविकूणनैः॥ ७५॥

उन्मादो नामेष्टजनवियोगविभवनाशाभिघातवातपित्तश्लेष्मप्रकोपादिभिर्विभावैः समुत्पद्यते। तमनिमित्तहसितरुदितोत्क्रुष्टाबद्धप्रलापशयनोपविष्टोत्थितप्रचितनृत्तगीतपठितभस्मपांस्ववधूलननिर्माल्यवीरघटवक्रशरावाभरणस्पर्शनोपभोगैरन्यैश्चाव्यवस्थितावष्टा(स्था?)करणादिभिरनुभावैरभिनयेत्। भवति चात्र—

इष्टजनविभवनाशादभिघाताद्वातपित्तकफकोपात्।
विविधात्पित्तविकारादुन्मादो नाम संभवति॥ ७६॥
अनिमित्तहसितरुदितोपविष्टगीतप्रधावितोत्क्रुष्टैः।
अन्यैश्च विकारकृतैरुन्मादं संप्रयुञ्जीत॥ ७७॥

मरणं नाम व्याधिजमभिघातजं च। तत्र दोषवैषम्यगण्डपिटकज्वरविचर्चिकादिभिरुत्पद्यते तद्व्याधिप्रभवम्। अभिघातजं तु शस्त्राहिदंशविषपानश्वापदगजतुरगरथयानपातविनाशप्रभवम्।

एतेष्विदानीमभिनयविशेषान्वक्ष्यामः—तत्र व्याधिजं विषण्णगात्रं व्यपेताङ्गविचेष्टितं निमीलितनयनं हिक्काश्वासोत्पतनमनपेक्षितपरिजनमव्यक्ताक्षरकथनादिभिरनुभावैरभिनयेत्। अत्र श्लोकः—

व्याधीनामेकभावो हि मरणाभिनयः स्मृतः।
विषण्णगात्रैर्निश्चेष्टैरिन्द्रियैश्च विवर्जितः॥ ७८॥

अभिघातजे तु नानाभिनयविशेषाः। यथा—शस्त्रक्षते तावत्सहसाभूमिपतनविकम्पनस्फुरणादिभिरभिनयः प्रयोक्तव्यः। अहिदष्टे विषपीते नानाविषवेगैर्यथा कार्श्यवेपथुदाहहिक्काफेनस्कन्धभङ्गजडतामरणानीत्यष्टौ विषवेगाः। अत्रानुवंश्यौ श्लोकौ भवतः—

काश्यं तु प्रथमे वेगे द्वितीये वेपथुस्तथा ।
दाहस्तृतीये हिक्कां च चतुर्थे संप्रयोजयेत् ॥ ७९ ॥
फेनं च पञ्चमे कुर्यात्स्यात्षष्ठे स्कन्धभञ्जनम् ।
जडतां सप्तमे कुर्यादष्टमे मरणं तथा ॥ ८० ॥

श्वापदगजतुरगरथोद्भवं तु पशुयानपतनजं वापि शस्त्रक्षतवत्कुर्याद-नक्षतगात्रसंचारम् ।

इत्येतन्मरणं प्रोक्तं नानावस्थान्तरात्मकम् ।
प्रयोक्तव्यं बुधैः सम्यग्यथाभावाङ्गचेष्टितैः ॥ ८१ ॥

त्रासो नाम विद्युदुल्काशनिपातनिर्घाताम्बुधरमहासत्त्वपशुरवादिभि-र्विभावैरुत्पद्यते । तं संक्षिप्ताङ्गोत्कम्पनवेपथुस्तम्भरोमाञ्चगद्गदप्रलापादिभि-रनुभावैरभिनयेत् । भवति चात्र—

महाभैरवनादाद्ये(द्ये)स्त्रासात्(सः)समुपजायते ।
त्रस्ताङ्गाक्षिनिमेषैश्च तस्य त्वभिनयो भवेत् ॥ ८२ ॥

वितर्को नाम संदेहविमर्षविप्रत्ययादिभिरनुभावैः.................. । भवति चात्र—

विचारणादिसंभूतैः ससंदेहोत्रयात्मकः (?) ।
वितर्कस्त्वभिनेयो वै शिरोभ्रूक्षेपकम्पनैः ॥ ८३ ॥
त्रयस्त्रिंशदमी भावाः सुविज्ञेयाः प्रयोक्तृभिः ।
सात्त्विकांस्तु पुनर्भावान्प्रवक्ष्याम्यनुपूर्वशः ॥ ८४ ॥

अत्राह—किमन्ये भावाः सात्वत(सत्त्वेन?)नाभिनीयन्ते येनैते सा-त्त्विका उच्यन्ते । अत्रोच्यते—इह हि सत्त्वं नाम मनःप्रभवम् । तच्च समाहितमनस्त्वादुत्पद्यते । मनःसमाधानाच्च सद्यो निर्वृतिरिति । तस्य योऽसौ स्वभावो रोमाञ्चाश्र्वादिकृतः स न शक्यतेऽन्यमनसा कर्तुमिति । लोकस्वभावानुकरणाच्च नाट्यस्य सत्त्वमीप्सितम् । को दृष्टान्तः । इह हि नाट्यधर्मप्रवृत्ताः सुखदुःखकृतो भावास्तथा सत्त्वविशुद्धाः कार्या यथा सरूपा भवन्ति । दुःखं नाम रोदनात्मकं तत्कथमदुःखितेन, सुखं च प्रह-

र्षात्मकं तत्कथं सु(दुः)खितेनाभिनेयम् । एतदेवास्य सत्त्वं यद्दुःखितेन सुखितेन वाश्रुरोमाञ्चौ दर्शयितव्याविति कृत्वा सात्त्विका भावा इत्यभिव्याख्या । तत्र—

क्रोधभयहर्षलज्जादुःखश्रमरोगतापघातेभ्यः ।
व्यायामक्लमघर्मात्स्वेदः संपीडनाच्चैव ॥ ८५ ॥
हर्षभयशोकविस्मयविषादरोगवशसंभवः स्तम्भः ।
शीतभयहर्षरोषस्पर्शजरारोगजः कम्पः ॥ ८६ ॥
आनन्दामर्षाभ्यां धूमाञ्जनजृम्भणाद्भयाच्छोकात् ।
अनिमेषप्रेक्षणतः शीताद्रोगाद्भवेदश्रु ॥ ८७ ॥
शीतक्रोधभयश्रमरोगक्लमतापजं च वैवर्ण्यम् ।
स्पर्शभयशीतहर्षात्क्रोधाद्रोगाच्च रोमाञ्चः ॥ ८८ ॥
स्वरभेदो भयहर्षक्रोधजरारोगमदजनितः ।
श्रममूर्छामदनिद्राभिघातमोहादिभिः प्रलयः ॥ ८९ ॥
एवमेते बुधैर्ज्ञेया भावा ह्यष्टौ तु सात्त्विकाः ।
कर्म चैषां प्रवक्ष्यामि ह्यनुभावानुभावकम् ॥ ९० ॥
व्यञ्जकग्रहणाच्चापि स्वेदापनयनेन च ।
स्वेदस्याभिनयो योज्यस्तथा वाताभिलाषतः ॥ ९१ ॥
निश्चेष्टो निष्प्रकम्पश्च स्थितः शून्यजडाकृतिः ।
निःसंज्ञः शुद्धगात्रश्चस्तैः सत्वभिनयेद्बुधः(?) ॥ ९२ ॥
वेपनात्स्फुरणात्कम्पाद्वेपथुं संप्रयोजयेत् ।
स्वरभेदं तथा चैव भिन्नगद्गदविस्वरैः ॥ ९३ ॥
भिन्नकण्टकितत्वेन तथोल्लुकुसनेन(?) च ।
रोमाञ्चस्त्वभिनेयो वै गात्रसंस्पर्शनेन च ॥ ९४ ॥
नेत्रसंमार्जनैर्बाष्पैरश्रु चाभिनयेद्बुधः ।
.................................................॥ ९५ ॥
मुखवर्णपरावृत्त्या नाडीपीडनयोगतः ।
वैवर्ण्यमभिनेतव्यं प्रयत्नादङ्गसंश्रयम् ॥ ९६ ॥

निश्चेष्टो निष्प्रकम्पश्च स्थितः शून्यजडाकृतिः।
महीनिपतनाच्चापि प्रलयाभिनयो भवेत्॥ ९७॥

एकोनपञ्चाशदमी यथावद्भावास्त्य(स्त्र्य?)वस्था गदिता मया वः।
एषां च ये यत्र रसे नियोज्यास्ताञ्श्रोतुमर्हन्ति च विप्रमुख्याः॥९८॥

ग्लानिः शङ्का ह्यसूया च श्रमश्चपलता तथा।
सुप्तं निद्रावहित्थं च शृङ्गारे वै पुनस्तथा॥ ९९॥
आलस्योग्रजुगुप्साभिर्भावैस्तु परिवर्जिताः।
उद्भावयन्ति शृङ्गारं सर्वे भावाः स्वसंज्ञया॥ १००॥
ग्लानिः शङ्का ह्यसूया च श्रमश्चपलता तथा।
सुप्तं निद्रावहित्थं च हास्यभावाः प्रकीर्तिताः॥ १०१॥
निर्वेदाद्यैव(?)चिन्ता च दैन्यं ग्लान्यस्रमेव च।
जडता मरणं चैव व्याधिश्चाकरुणा(श्च करुणे) स्मृताः॥ १०२॥
असंमोहस्तथोत्साह आवेगो हर्ष एव च।
मतिश्चैव तथोग्रत्वममर्षादय एव च॥ १०३॥
रोमाञ्चः प्रतिबोधश्च क्रोधोऽसूया धृतिस्तथा।
गर्वश्चैव वितर्कश्च वीरे भावा भवन्ति वै॥ १०४॥
गर्वोऽसूया तथोत्साह आवेगो मद एव च।
क्रोधश्चपलता हर्षो रौद्रे चोग्रत्वमेव च॥ १०५॥
स्वेदश्च वेपथुश्चैव रोमाञ्चो गद्गदस्तथा।
त्रासश्च मरणं चैव वैवर्ण्यं च भयानके॥ १०६॥
अपस्मारस्तथोन्मादो व्यञ्जनो(?)नाम एव च।
मृत्युर्व्याधिर्भयं चैव भावा बीभत्ससंश्रिताः॥ १०७॥
स्तम्भः स्वेदश्च मोहश्च रोमाञ्चो विस्मयस्तथा।
आवेगो जडता हर्षो मूर्छा चैवाद्भुताश्रयाः॥ १०८॥
ये त्वेते सात्त्विका भावा नानाभिनयसमाश्रयाः।
रसेष्वेतेषु सर्वेति(?)ते ज्ञेया नाट्ययोक्तृभिः॥ १०९॥

न ह्येकरसजं काव्यं किंचिदस्ति प्रयोगजम् ।
भावो वापि रसो वापि प्रवृत्तिर्वृत्तिरेव च ॥ ११० ॥
नानार्थभावसंपन्नाः स्थायिभावा विचालिनः ।
पुष्पावकीर्णाः कर्तव्याः काव्येषु हि रसा बुधैः ॥ १११ ॥
सर्वेषां समवेतानां रूपं यस्य भवेद्बहु ।
समन्ततो(स संगतो?) रसः स्थायी शेषाः संचारिणो मताः ॥११२॥
एवं रसाश्च भावाश्च व्यवस्था नाटके स्मृताः ।
य एवमेताञ्जानाति स गच्छेत्सिद्धिमुत्तमाम् ॥ ११३ ॥

इति श्रीभारतीये नाट्यशास्त्रे भावव्यञ्जनो नाम सप्तमोऽध्यायः ।

---

अष्टमोऽध्यायः ।

ऋषय ऊचुः—

भावानां च रसानां च समुत्थानं यथाक्रमम् ।
त्वत्प्रसादाच्छ्रुतं सर्वमिच्छामो वेदितुं पुनः ॥ १ ॥
नाट्ये कतिविधः कार्यस्तज्ज्ञैरभिनयक्रमः ।
कथं चाभिनयो ह्येष कतिभेदश्च कीर्तितः ॥ २ ॥
सर्वमेतद्यथातत्त्वं कथयस्व महामुने ।
यो यथाभिनयो यस्मिन्योक्तव्यः सिद्धिमिच्छता ॥ ३ ॥
तेषां तु वचनं श्रुत्वा मुनीनां भरतो मुनिः ।
प्रत्युवाच पुनर्वाक्यं चतुरोऽभिनयान्प्रति ॥ ४ ॥
अहं वः कथयिष्यामि निखिलेन तपोधनाः ।
यस्मादभिनयो ह्येष विधिवत्समुदाहृतः ॥ ५ ॥

यदुक्तं चत्वारोऽभिनया इति तान्वर्तयिष्यामः । अभिनय इति कस्मादुच्यते! अभीत्युपसर्गः। 'णीञ्' प्रापणार्थो धातुः । अस्याच्प्रत्ययान्तस्याभिनय इति रूपं सिद्धम् । एतच्च त्वर्थ(?)वचनेनोपधार्यम् । अत्र श्लोकौ—

अभिपूर्वस्तु णीञ्धातुः पुरा मुख्यार्थनिर्णये ।
यस्मात्प्रयोगं नयति तस्मादभिनयः स्मृतः ॥ ६ ॥

विभावयति यस्माच्च नानार्थान्हि प्रयोगतः ।
शाखाङ्गोपाङ्गसंयुक्तस्तस्मादभिनयः स्मृतः ॥ ७ ॥
चतुर्विधश्चैष भावान्नाट्यस्याभिनयो द्विजाः ।
अनेकभेदबहुलं नाट्यमस्मिन्प्रतिष्ठितम् ॥ ८ ॥
आङ्गिको वाचिकश्चैव ह्याहार्यः सात्त्विकस्तथा ।
ज्ञेयस्त्वभिनयो विप्राश्चतुर्धा परिकल्पितः ॥ ९ ॥
सात्त्विकः पूर्वमुक्तस्तु भावैश्च सहितो मया ।
अङ्गाभिनयमेवादौ गदतो मे निबोधत ॥ १० ॥
त्रिविधस्त्वाङ्गिको ज्ञेयः शारीरो मुखजस्तथा ।
तथा चेष्टाकृतश्चैव शाखाङ्गोपाङ्गसंयुतः ॥ ११ ॥
शिरोहस्तकटीवक्षःपार्श्वपादसमन्वितः ।
अङ्गप्रत्यङ्गसंयुक्तः षडङ्गो नाट्यसंग्रहः ॥ १२ ॥
तस्य शिरोहस्तोरःपार्श्वकटीपादतः षडङ्गानि ।
नेत्रभ्रूनासाधरकपोलचिबुकान्युपाङ्गानि ॥ १३ ॥
अस्य शाखा च नृत्तं च तथैवाङ्कुर एव च ।
वस्तून्यभिनयस्येह विज्ञेयानि प्रयोक्तृभिः ॥ १४ ॥
आङ्गिकस्तु भवेच्छाखा ह्यङ्कुरः सूचना भवेत् ।
अङ्गहारविनिष्पन्नं नृत्तं तु करणाश्रयम् ॥ १५ ॥
मुखानभिनये(?)विप्रा नानाभावरसाश्रये ।
शिरसा प्रथमं कर्म गदतो मे निबोधत ॥ १६ ॥
आकम्पितं कम्पितं च धुतं विधुतमेव च ।
परिवाहितमाधूतमवधूतं तथाञ्चितम् ॥ १७ ॥
निहञ्चितं परावृत्तमुत्क्षिप्तं चाप्यधोगतम् ।
लोलितं चेति विज्ञेयं त्रयोदशविधं शिरः ॥ १८ ॥
शनैराकम्पनादूर्ध्वमधश्चाकम्पितं भवेत् ।
द्रु(द्रु)तं तदेव बहुशः कम्पितं काम्पितं शिरः ॥ १९ ॥

संज्ञोपदेशपृच्छासु स्वभावाभाषणे तथा ।
निर्देशावाहने चैव भवेदाकम्पितं शिरः ॥ २० ॥
रोषे वितर्के विज्ञाने प्रतिज्ञाने च तर्जने ।
पृच्छातिशयवाक्येषु शिरः कम्पितमिष्यते ॥ २१ ॥
शिरसो रेचनं यत्तु शनैस्तद्धुतमुच्यते ।
द्रुतमारेचनादेतद्विधुतं च भवेच्छिरः ॥ २२ ॥
अनीप्सिते विषादे च विस्मये प्रत्यये तथा ।
पार्श्वावलोकने शून्ये प्रतिषेधे धुतं शिरः ॥ २३ ॥
शीतग्रस्ते भयार्ते च त्रासिते ज्वरिते तथा ।
पीतमात्रे तथा मद्ये विधुतं च भवेच्छिरः ॥ २४ ॥
पर्यायशः पार्श्वगतं शिरः स्यात्परिवाहितम् ।
आधूतमुच्यते तिर्यक्सकृदुद्वादितं (?) च यत् ॥ २५ ॥
साधने विस्मये हर्षे स्मृते वामर्षिते तथा ।
विचारे निह्नुते चैव लीलायां परिवाहितम् ॥ २६ ॥
गर्वात्मदर्शने चैव पार्श्वस्थोर्ध्वनिरीक्षणे ।
आधूतं तु शिरो ज्ञेयमात्मसंभावनादिषु ॥ २७ ॥
यदधः सकृदाक्षिप्तमवधूतं तु तच्छिरः ।
संदेशावाहनालापसंज्ञादिषु तदिष्यते ॥ २८ ॥
किंचित्पार्श्वानतग्रीवं शिरो विज्ञेयमञ्चितम् ।
व्याधिते मूर्छिते मार्त(?)चिन्तायां हनुधारणे ॥ २९ ॥
उत्क्षिप्तबाहुशिखरं निकुञ्चितशिरोधरम् ।
निहञ्चितं शिरो ज्ञेयं स्त्रीणामेतत्प्रयोजयेत् ॥ ३० ॥
गर्वे विलासे ललिते विब्बोके किलकिञ्चिते ।
मोट्टायिते कुट्टमिते स्तम्भे माने निहिञ्चितम् ॥ ३१ ॥
परावृत्तानुकरणात्परावृत्तं शिरः स्मृतम् ।
तत्स्यान्मुखापहरणे पृच्छतः प्रेक्षणादिषु ॥ ३२ ॥

उत्क्षिप्तं चापि विज्ञेयमुन्मुखावस्थितं शिरः ।
प्रांशुदिव्यार्थयोगेषु स्यादुत्क्षिप्तं प्रयोगतः ॥ ३३ ॥
अधोमुखस्थितं चापि शिरः प्राहुरधोमुखम् ।
लज्जायां च प्रणामे दुःखे चाधोगतं भवेत् ॥ ३४ ॥
सर्वतो लोलनाच्चापि शिरः स्यात्परिलोलितम् ।
मूर्छाव्याधिमदावेशग्रहनिद्रादिषु स्मृतम् ॥ ३५ ॥
एभ्योऽन्ये बहवो भेदा लोकाभिनयसंश्रयाः ।
ते च लोकस्वभावेन प्रयोक्तव्याः प्रयोक्तृभिः ॥ ३६ ॥
त्रयोदशविधं ह्येतच्छिरः कर्म मयोदितम् ।
अतः परं प्रवक्ष्यामि दृष्टीनामिह लक्षणम् ॥ ३७ ॥
कान्ता भयानका हास्या करुणा चाद्भुता तथा ।
रौद्री वीरा च बीभत्सा विज्ञेया रसदृष्टयः ॥ ३८ ॥
स्निग्धा हृष्टा च दीना च क्रुद्धा दृप्ता भयान्विता ।
जुगुप्सिता विस्मिता च स्थायिभावेषु दृष्टयः ॥ ३९ ॥
शून्या च मलिना चैव जिह्मा सललिता तथा ।
म्लाना च शङ्किता चैव विषण्णा मुकुला तथा ॥ ४० ॥
कुञ्चिता साभिमाना च जिह्मा सललिता तथा ।
वितर्कितार्धमुकुला विभ्रान्ता विप्लुता तथा ॥ ४१ ॥
आकेकरा विकोशा च त्रस्ता च मदिरा तथा ।
षट्त्रिंशद्दृष्टयो ह्येता नामतो निहिता मया ॥ ४२ ॥
अस्य दृष्टिविधानस्य नानाभावरसाश्रितम् ।
लक्षणं संप्रवक्ष्यामि यथाकर्म प्रयोगतः ॥ ४३ ॥
हर्षप्रसादजनितकोपामर्षसमन्मथा ।
सभ्रूक्षेपकटाक्षा च शृङ्गारे दृष्टिरिष्यते ॥ ९४ ॥
प्रोद्वृत्तनिष्टब्धपुटा स्फुरदुद्वृत्ततारका ।
दृष्टिर्भयानकात्यर्थभीता ज्ञेया भयानके ॥ ४५ ॥

क्रमादाकुञ्चितपुटा सविभ्रान्ताल्पतारका ।
स्याद्दृष्टि(सा दृष्टि)स्तु प्रकर्तव्या कुहकाभिनयं प्रति ॥ ४६ ॥
पतितोर्ध्वपुटा सास्रा मन्युमन्थरतारका ।
नासाग्रानुगता दृष्टिः करुणा करुणे रसे ॥ ४७ ॥
या चाकुञ्चितपक्ष्माग्रा साश्चर्योद्वृत्ततारका ।
सौम्या विकसितान्ता च साद्भुता दृष्टिरद्भुते ॥ ४८ ॥
क्रूरा रूक्षारुणोद्वृत्तनिष्टब्धपुटतारका ।
उत्फुल्लमध्या दृष्टिस्तु वीरा वीररसाश्रया ॥ ४९ ॥
निकुञ्चितपुटापाङ्गावृ(श्रु ?)णोपप्लुततारका ।
संश्लिष्टस्थिरपक्ष्मा च बीभत्सा दृष्टिरिष्यते ॥ ५० ॥
नासाग्रसक्तानिमिषा तथाधोभागचारिणी ।
आकेकरपुटा चैव शान्ता दृष्टिर्भवेदसौ ॥ ५१ ॥
रजसा(रसानां) दृष्टयो ह्येता विज्ञेया लक्षणान्विताः ।
अतः परं लक्षयिष्ये स्थायिभावसमाश्रयाः ॥ ५२ ॥
व्याकोशमध्या मधुरा सिततारामिलाषिणः(णी) ।
सानन्दभ्रूकृता दृष्टिः स्निग्धैवं रतिभावजा ॥ ५३ ॥
वलाहसितसर्गे वै विशत्ताराभिलाषिणी (?) ।
किंचिदाकुञ्चिताद्दृष्टा(?) दृष्टिर्हासे प्रकीर्तिता ॥ ५४ ॥
अर्धस्रस्तोत्तरपुटा रुद्धतारा जलाविला ।
मन्दसंचारिणी दीना सशोका दृष्टिरिष्यते ॥ ५५ ॥
रूक्षा स्थिरोद्वृत्तपुटा निष्टब्धोद्वृत्ततारका ।
कुटिलभ्रुकुटिर्दृष्टिः क्रुद्धा क्रोधेऽभिधीयते ॥ ५६ ॥
संस्थिते तारके यस्याः स्थिरा विकसिता तथा ।
सत्त्वमुद्गिरती दृप्ता दृष्टिरुत्साहसंभवा ॥ ५७ ॥
विस्फारितोभयपुटा भयकम्पिततारका ।
निष्क्रान्तमध्या दृष्टिस्तु भयभावे भयान्विता ॥ ५८ ॥

संकोचितपुटव्योमा(?) दृष्टिर्मीलिततारका।
लक्ष्योद्देशात्समुद्विग्ना जुगुप्सायां जुगुप्सिता॥ ५९॥
भृशमुद्वृत्ततारा या नष्टोभयपुटाञ्चिता।
समा विकसिता दृष्टिर्विस्मिता विस्मये स्मृता॥ ६०॥
स्थायिभावस्मृता ह्येता दृष्टयो लक्षिता मया।
संचारिणीनां दृष्टीनां संप्रवक्ष्यामि लक्षणम्॥ ६१॥
समतारा समपुटा निष्कम्पा शून्यदर्शना।
बाह्यार्थग्राहिणी ध्यामा शून्या दृष्टिः प्रकीर्तिता॥ ६२॥
किंचिदञ्चितपक्ष्माग्रा पतितोर्ध्वपुटा ह्रिया।
त्रपाधोगततारा च दृष्टिर्लज्जान्विता तु सा॥ ६३॥
म्लानभ्रूपुटपक्ष्मा च शिथिला मन्दचारिणी।
क्रमप्रविष्टतारा च ग्वा(ग्ला)ना दृष्टिः सदोद्धृता॥ ६४॥
किंचित्काला स्थिरा किंचिदुन्नता तिर्यगायता।
गूढा चकिततारा च शङ्किता दृष्टिरिष्यते॥ ६५॥
विषादविस्तीर्णपुटा पर्यस्तारा (?) निमेषिणी।
किंचिन्निष्टब्धतारा च कार्या दृष्टिर्विषादिनी॥ ६६॥
स्फुरदाश्लिष्टपक्ष्माग्रा मुकुलोर्ध्वपुटाञ्चिता।
सुखी(ख)मीलिततारा च मुकुला दृष्टिरुच्यते॥ ६७॥
आनिकुञ्चितपक्ष्माग्रा पुटैराकुञ्चितैस्तथा।
सनिकुञ्चिततारा च कुञ्चिता दृष्टिरुच्यते॥ ६८॥
मन्दायमानतारा या पुटैः प्रचलितैस्तथा।
संतापोपप्लुता दृष्टिरभितप्ता तु सव्यथा॥ ६९॥
लम्बिताकुञ्चितपुटा शनैस्तिर्यङ्निरीक्षिणी।
निगूढा गूढतारा च जिह्मा दृष्टिरुदाहृता॥ ७०॥
मधुरा कुञ्चितान्ता च सभ्रूक्षेपा च सस्मिता।
समन्मथविकासा च दृष्टिः सा ललिता स्मृता॥ ७१॥

वितर्कोद्वर्तितपुटा तथैवोत्फुल्लतारका ।
अधोगतविचारा च दृष्टिरेषा वितर्किता ॥ ७२ ॥
अर्धव्याकोशपक्ष्मा च ह्लादार्धमुकुलैः पुटैः ।
स्मृतार्धमुकुला दृष्टिः किंचिल्लुलिततारका ॥ ७३ ॥
अनवस्थिततारा च विभ्रान्ताकुलदर्शना ।
विस्तीर्णोत्फुल्लमध्या च विभ्रान्ता दृष्टिरुच्यते ॥ ७४ ॥
पुटौ प्रस्फुरितौ यस्या निष्टब्धौ पतितौ पुनः ।
विप्लुतोद्वृत्ततारा च दृष्टिरेषा तु विप्लुता ॥ ७५ ॥
आकुञ्चितपुटापाङ्गा संगतार्धनिमेषिणी ।
मुहुर्व्यावृत्ततारा च दृष्टिराकेकरा स्मृता ॥ ७६ ॥
विकोशितोभयपुटा प्रोत्फुल्ला चानिमेषिणी ।
अनवस्थिततारा च विकोशा दृष्टिरिष्यते ॥ ७७ ॥
शसो(?)द्वृत्तपुटा या तु तथोत्कम्पिततारका ।
अनवस्थितसंचारा दृष्टिर्मध्यमदे भवेत् ॥ ७८ ॥
सनिमेषानिमेषा च किंचिद्दर्शिततारका ।
अधोभागचरीदृष्टिरधमे तु मदे स्मृता ॥ ७९ ॥
इत्येवं लक्षिता ह्येताः षट्त्रिंशद्दृष्टयो मया ।
रसजा भावजाश्चासां विनियोगं निबोधत ॥ ८० ॥
रसजा तु रसेष्वेव स्थायिषु स्थायिदृष्टयः ।
शृणुत व्यभिचारिण्यः संचारिषु यथा स्थिताः ॥ ८१ ॥
शून्या दृष्टिस्तु चिन्तायामभितप्ता च कीर्तिता ।
निर्वेदे चापि मलिना वैवर्ण्ये च विधीयते ॥ ८२ ॥
श्रान्ता श्रमार्तौ स्वेदे च लज्जायां लज्जिता तथा ।
अपस्मारे तथा व्यानम्लान(?)ग्लाना विधीयते ॥ ८३ ॥
शङ्कायां शङ्किता ज्ञेया विषादार्थे विषादिनी ।
निद्रास्वप्नसुखार्थेषु मुकुला दृष्टिरिष्यते ॥ ८४ ॥

कुञ्चितासूयतानिष्टदुष्प्रेक्षाक्षिव्यथासु च ।
अभितप्ता च निर्वेदे ह्यभिघाताभितापयोः ॥ ८५ ॥
जिह्मा दृष्टिरसूयायां जडतालस्ययोस्तथा ।
धृतौ हर्षे सललिता स्मृतौ तर्के च तर्किता ॥ ८६ ॥
आह्लादेष्वर्धमुकुला गन्धस्पर्शसुखादिषु ।
विभ्रान्ता दृष्टिरावेगे संभ्रमे विभ्रमे तथा ॥ ८७ ॥
विप्लुता चापलोन्मादे दुःखार्तिमरणादिषु ।
आकेकरा दुरालोके विच्छेदप्रेक्षितेषु च ॥ ८८ ॥
विबोधगर्वामर्षौग्र्यमतिषु स्याद्विकासिता ।
त्रस्ता त्रासे भवेद्दृष्टिर्मदिरा च मदेष्विति ॥ ८९ ॥
षट्त्रिंशद्दृष्टयो ह्येता यथावत्समुदाहृताः ।
..........................................॥ ९० ॥

रसजानां तु दृष्टीनां भावजानां तथैव च ।
तारापुटभ्रुवां कर्म गदतो मे निबोधत ॥ ९१ ॥
भ्रमणं वलनं पातश्चलनं संप्रवेशनम् ।
निवर्तनं समुद्वृत्तं निष्क्रामः प्राकृतं तथा ॥ ९२ ॥
पुटान्तर्मण्डलावृत्तिस्तारयोर्भ्रमणं स्मृतम् ।
चलनं गमनं त्र्यस्रं पातनं स्रस्तता तथा ॥ ९३ ॥
चलनं कम्पनं ज्ञेयं प्रवेशोऽन्तः प्रवेशनम् ।
विक(व)र्तनं कटाक्षस्तु समुद्वृत्तं समुन्नतिः ॥ ९४ ॥
निष्क्रामो निर्गमः प्रोक्तः प्राकृतं तु स्वभावजम् ।
अथैषां रसभावेषु विनियोगं निबोधत ॥ ९५ ॥
भ्रमणं चलनोद्वृत्ते निष्क्रामो वीररौद्रयोः ।
निष्क्रामणं संचलनं कर्तव्यं हि भयानके ॥ ९६ ॥
हास्यबीभत्सयोश्चापि प्रवेश[न]मिहेष्यते ।
पपात(पातनं?) करुणे कार्यं निष्क्रामणमथाद्भुते ॥ ९७ ॥

प्राकृतं शेषभावेषु शृङ्गारे च विवर्तितम् ।
स्वभावसिद्धमेवैतत्कर्म लोकक्रियाश्रयम् ॥ ९८ ॥
एवं रसेषु भावेषु ताराकर्माणि योजयेत् ।
अथात्रैव प्रवक्ष्यामि प्रकारान्दर्शनस्य तु ॥ ९९ ॥
समं सव्ये(त्र्यस्रा?)नुवृत्ते च ह्यालोकितविलोकिते ।
प्रलोकितोल्लोकिते वाप्यवलोकितमेव च ॥ १०० ॥
समतारं च सौम्यं च यद्दृष्टं तत्समं स्मृतम् ।
पक्षा(क्ष्मा?)न्तर्गततारं यत्त्र्यस्रं साचीकृतं तु तत् ॥ १०१ ॥
रूपनिर्वर्णनायुक्तमनुवृत्तमिति स्मृतम् ।
सहसा दर्शनं यत्स्यात्तदालोकितमुच्यते ॥ १०२ ॥
विलोकितं पृष्ठतस्तु पार्श्वाभ्यां तु प्रलोकितम् ।
ऊर्ध्वमुल्लोकितं ज्ञेयमवलोकितमप्यधः ॥ १०३ ॥
इत्येष दर्शनविधिः सर्वभावरसाश्रयः ।
ताराकृतोऽस्यानुगतं पुटकर्म निबोधत ॥ १०४ ॥
उन्मेषश्च निमेषश्च प्रसृतं कुञ्चितं समम् ।
विवर्तितं सस्फुरितं पिहितं सविताश्रयम्(?) ॥ १०५ ॥
विश्लेषैः पुटयोर्यस्तु स उन्मेषः प्रकीर्तितः ।
समागमो निमेषः स्यादायामः प्रसृतं भवेत् ॥ १०६ ॥
आकुञ्चितं कुञ्चितं स्यात्समं स्वाभाविकं स्मृतम् ।
विवर्तितं समुद्वृत्तं स्फुरितं स्पन्दितं तथा ॥ १०७ ॥
छादितं पिहितं प्रोक्तमाहतं तु विलोलितम् ।
अथैषां रसभावेषु विनियोगं निबोधत ॥ १०८ ॥
क्रोधे विवर्तितं कार्यं निमेषोन्मेषणैः सह ।
विस्मयार्थे च हर्षे च वीरे च प्रसृतं स्मृतम् ॥ १०९ ॥
अदृष्टदर्शने गन्धे रसे स्पर्शे च कुञ्चितम् ।
शृङ्गारे च समं कार्यमीर्ष्यासु स्फुटितं तथा ॥ ११० ॥

सुप्तमूर्च्छितवातोष्णधूमवर्षाजनादिषु ।
नेत्ररोगे च पिहितमभिघाते वितानिते ॥ १११ ॥
इत्येषु रसभावेषु तारकापुटयोर्विधिः ।
कार्यानुगतमस्यैव भ्रुवोः कर्म निबोधत ॥ ११२ ॥
उत्क्षेपः पातनं चैव भ्रुकुटी चतुरं भ्रुवोः ।
कुञ्चितं रेचितं कर्म सहजं चेति सप्तधा ॥ ११३ ॥
भ्रुवोरुद्गतिरुत्क्षेपः सममेकैकशोऽपि वा ।
सममेकैकशोऽप्येव पातनं स्यादधोगति ॥ ११४ ॥
भ्रुवोर्मूलसमुत्क्षेपाद्भ्रुकुटी परिकीर्तिता ।
चतुरं किंचिदुच्छ्वासान्मधुरा आयता भ्रुवोः ॥ ११५ ॥
एकस्या उभयोर्वापि मृदुभङ्गो निकुञ्चितः ।
एकस्या एव ललितादुत्क्षेपाद्रेचितं भ्रुवः ॥ ११६ ॥
सहजातं तु सहज कर्म स्वाभाविकं स्मृतम् ।
अथैषां संप्रवक्ष्यामि रसभावप्रयोजनम् ॥ ११७ ॥
कोपे वितर्को हेलायां लीलादौ सहजे तथा ।
दर्शने श्रवणे चैव भ्रुवमेकां समुत्क्षिपेत् ॥ ११८ ॥
उत्क्षेपो विस्मये हर्षे रोषे चैव द्वयोरपि ।
असूयते जुगुप्सायां हासे घ्राणे च पातनम् ॥ ११९ ॥
क्रोधस्थानेषु दीप्तेषु योजयेद्भ्रुकुटीं बुधः ।
शृङ्गारे ललिते सौम्ये स्पर्शे च चतुरं भवेत् ॥ १२० ॥
मोटायिते कुट्टमिते विलासे किलकिञ्चिते ।
निकुञ्चितं तु कर्तव्यं नृत्ये योज्यं तु रेचितम् ॥ १२१ ॥
अनाविद्धेषु भावेषु विद्यात्स्वाभाविकं बुधः ।
इत्येता दृष्टयः प्रोक्ता नासाकर्म निबोधत ॥ १२२ ॥
नता मन्दा विकृष्टा च सोच्छ्वासानुविकूणिता ।
स्वाभाविकी चेति बुधैः षड्विधा नासिका स्मृता ॥ १२३ ॥

---

१. 'ताननं' क-ख.

नता मुहुः श्लिष्टपुटा मन्दा तु निभृता मता ।
विकृष्टा पुल्लितपुटा सोच्छ्वासाकृष्टमारुता ॥ १२४ ॥
विकूणिता संकुचिता समा स्वाभाविकी स्मृता ।
निर्वेदौत्सुक्यचिन्तासु मन्दाशोके प्रकीर्तिता ॥ १२५ ॥
विकृष्टा तीव्रगन्धा च श्वासरोषभयार्तिषु ।
सोच्छ्वासा मधुरे गन्धे दीर्घोच्छ्वासकृतेषु च ॥ १२६ ॥
विकूणनार्तौ हास्ये च जुगुप्सायामसूयिते ।
स्वाभाविकाशेषभावेष्वित्येवं नासिका स्मृता ॥ १२७ ॥
क्षामं फुल्लं च पूर्णं च कम्पितं कुञ्चितं समम् ।
षड्विधं गण्डमुद्दिष्टमस्य लक्षणमुच्यते ॥ १२८ ॥
क्षामं त्ववनतं ज्ञेयं फुल्लं विकसितं भवेत् ।
उन्नतं पूर्णमात्रोक्तं कम्पितं स्फुरितं भवेत् ॥ १२९ ॥
स्यात्कुञ्चितं संकुचितं समं प्राकृतमुच्यते ।
गण्डयोर्लक्षणं प्रोक्तं विनियोगं निबोधत ॥ १३० ॥
क्षामं दुःखेषु कर्तव्यं प्रहर्षे फुल्लमेव च ।
पूर्णमुत्साह[1]गर्वेषु रोमहर्षेषु कम्पितम् ॥ १३१ ॥
कुञ्चितं च सरोमाञ्चं कम्पे शीतभये ज्वरे ।
प्राकृतं शेषभावेषु गण्डकर्म भवेदिति ॥ १३२ ॥
विकर्तनं कम्पनं च विसर्गो विनिगूहनम् ।
संदष्टकं समुद्गश्च षट्कर्माण्यधरस्य तु ॥ १३३ ॥
विकूणनं विवर्तैस्तु वेपनं कम्पनं स्मृतम् ।
विनिष्क्रामो विसर्गस्तु प्रवेशो विनिगूहनम् ॥ १३४ ॥
संदष्टकं द्विजैर्दष्टं समुद्गृत्तं समुद्गकः ।
इत्यष्टौ लक्षणं प्रोक्तं विनियोगं निबोधत ॥ १३५ ॥
असूयावेदनावज्ञालस्यादिषु विवर्तनम् ।
कम्पनं कोपशीतार्तिभयरोगजयादिषु ॥ १३६ ॥

---

१. 'उच्छाह' क-ख.

स्त्रीणां विलासे विब्बोके विसर्गः सुरते स्मृतः ।
विनिगूहनमायासे संदष्टं क्रोधकर्मसु ॥ १३७ ॥
समुद्गस्त्वतिकम्पाङ्गधूनने चाभिनन्दने ।
इत्योष्ठकर्माण्युक्तानि चिबुकस्य निबोधत ॥ १३८ ॥
कुट्टनं खण्डनं दन्तचिकितं लेहनं समम् ।
दष्टं च दन्तक्रियया चिबुकं त्विह भक्ष्यते ॥ १३९ ॥
कुट्टनं दन्तसंहर्षः संस्फोटं खण्डनं मुहुः ।
छिन्नं तु गाढसंश्लेषश्चिकितं दूरमुद्यतम् ॥ १४० ॥
लेहनं जिह्वया लेहः किंचिच्छ्लेषः(शः) समं भवेत् ।
दन्तैर्दष्टेऽधरे दष्टमित्येषां विनियोजनम् ॥ १४१ ॥
भयशीतज्वरव्याधिस्त्रस्तानां कुट्टनं भवेत् ।
जपा.....यनं संतापभक्षायातेषु खण्डनम् ॥ १४२ ॥
छिन्नं व्याधिभये शीतेष्वायामे कूजिते मृते ।
जृम्भणे चिकितं कार्यं तथालोक्ये च लेहनम् ॥ १४३ ॥
समं स्वभावभावेषु संदष्टं क्रोधकर्मसु ।
इति दन्तोष्ठजिह्वानां करणाच्चिबुकक्रिया ॥ १४४ ॥
अयातो मुखरागस्तु चतुर्धा स च कीर्तितः ।
स्वाभाविकः प्रसन्नश्च रक्तः श्यामोऽर्थसंश्रयः ॥ १४५ ॥
स्वाभाविकस्तु कर्तव्यः स्वभावाभिनयाश्रयः ।
मध्यस्थादिषु भावेषु मुखरागप्रयोक्तृभिः ॥ १४६ ॥
प्रसन्नस्त्वद्भुते कार्यो हास्यशृङ्गारयोस्तथा ।
वीररौद्रमदाद्येषु रक्तः स्यात्करुणे तथा ॥ १४७ ॥
भयानके सबीभत्से श्यामं संजायते मुखम् ।
एवं भावरसार्थेषु मुखरागं प्रयोजयेत् ॥ १४८ ॥
शाखाङ्गोपाङ्गसंयुक्तः कृतोऽप्यभिनयः शुभः ।
मुखरागविहीनस्तु नैव शोभान्वितो भवेत् ॥ १४९ ॥

शारीराभिनयोऽल्पोऽपि मुखरागसमन्वितः ।
द्विगुणां लभते शोभां रात्राविव निशाकरः ॥ १९० ॥
नयनाभिनयोऽपि स्यान्नानाभावरसस्फुटः ।
मुखरागान्वितो यस्मान्नाट्यमत्र प्रतिष्ठितम् ॥ १९१ ॥
यथा नेत्रं प्रसर्पेत मुखभूदृष्टिसंयुते ।
तथा भावरसोपेतं मुखरागं प्रयोजयेत् ॥ १९२ ॥
इत्येष मुखरागस्तु प्रोक्तो भावरसाश्रयः ।
अतः परं प्रवक्ष्यामि ग्रीवाकर्म द्विजोत्तमाः ॥ १९३ ॥
समाना चोन्नता त्र्यस्रा रेचिता कुञ्चिताञ्चिता ।
वलिता च निवृत्ता च ग्रीवा नवविधार्थतः ॥ १९४ ॥
समा स्वाभाविकी ध्यानस्वभावजपकर्मसु ।
नता तातास्यालंकारबन्धे कण्ठावलम्बने ॥ १९५ ॥
उन्नताभ्युन्नतमुखी ग्रैवेयोर्ध्वादिदर्शने ।
त्र्यस्रा पार्श्वगता चैव स्कन्धभारे च दुःखिते ॥ १९६ ॥
रेचिता विधुतभ्रान्ता हावे मथननृत्तयोः ।
कुञ्चिता गदिता मूर्ध्नि भारिते गलरक्षणे ॥ १९७ ॥
अञ्चितापसृता बद्धकेशाकर्षे च दर्शने ।
पार्श्वोन्मुखी स्याद्वलिता ग्रीवाभङ्गे च वीक्षणे ॥ १९८ ॥
निवृत्ताभिमुखीभूता स्वस्थानाभिमुखादिषु ।
इत्यादिलोकभावार्था ग्रीवाभेदैरनेकधा ॥ १९९ ॥
ग्रीवाकर्माणि सर्वाणि शिरःकर्मानुगानि हि ।
शिरसः कर्मणा कर्म ग्रीवायाः संप्रवर्त्यते ॥ १६० ॥
इत्येतल्लक्षणं प्रोक्तं शीर्षोपाङ्गसमाश्रयम् ।
अङ्गकर्माणि शेषाणि वदतो मे निबोधत ॥ १६१ ॥

इति श्रीभारतीये नाट्यशास्त्र उपाङ्गाभिनयो नामाष्टमोऽध्यायः ।

---

नेत्रं प्रतिष्ठितम्' क-ख.

२

नवमोऽध्यायः ।

एवमेतच्छिरोनेत्रे भ्रूनासोष्ठकपोलकम् ।
कर्मलक्षणसंयुक्तमपाङ्गानां मयोदितम् ॥ १ ॥
हस्तानां तु प्रवक्ष्यामि कर्म नाट्यप्रयोजकम् ।
यथा येनाभिनेयं च गदतो मे निबोधत ॥ २ ॥
हस्तोरःपार्श्वजठरकटीजङ्घोरुपादतः ।
लक्षणं संप्रवक्ष्यामि विनियोगं च तत्त्वतः ॥ ३ ॥
पताकस्त्रिपताकश्च तथा वै कर्तरीमुखः ।
अर्धचन्द्रो ह्यरालश्च शुकतुण्डस्तथैव च ॥ ४ ॥
मुष्टिश्च शिखराम्यश्च कपित्थः खटकामुखः ।
सूच्यास्यः पद्मकोषश्च स(ख)र्परा मृगशीर्षकः ॥ ५ ॥
काङ्गूलकोपं पद्मश्च चतुरो भ्रमरस्तथा ।
हंसास्यो हंसपक्षश्च संदंशो मुकुलस्तथा ॥ ६ ॥
ऊर्णनामस्ताम्रचूडश्चतुर्विंशतिकीर्तिताः[1] ।
असंयुताः संयुताश्च गदतो मे निबोधत ॥ ७ ॥
अञ्जलिश्च कपोतश्च कर्कटः स्वस्तिकस्तथा ।
खटका वर्धमानश्च ह्युत्सङ्गो निषधस्तथा ॥ ८ ॥
दोलपुष्पपुटाश्चैव तथा मकर एव च ।
गजदन्तोऽवहित्थश्च वर्धमानस्तथैव च ॥ ९ ॥
एते ससंयुता हस्ता मया प्रोक्तास्त्रयोदश ।
नृत्तहस्तानत ऊर्ध्वं गदतो मे निबोधत ॥ १० ॥
चतुरस्रौ तथोद्वृतौ तथा तलमुखौ स्मृतौ ।
स्वस्तिकौ विप्रकीर्णौ चाष्य(?)रालावटकामुखौ ॥ ११ ॥
आविद्धवक्रौ सूच्यास्यौ रेचितावर्धरेचितौ ।
..................चैव पल्लवौ च तथाकरौ ॥ १२ ॥

---

१. 'चतुर्विंशतिरीरिताः' इति साधीयान्पाठः.

नितम्बावपि विज्ञेयौ केशबन्धौ तथैव च ।
लताख्यौ च तथा प्रोक्तौ करिहस्तौ तथैव च ॥ १३ ॥
पक्षवञ्चितकौ[1] चैव पक्षप्रद्योतकौ तथा ।
ज्ञेयौ गरुडपक्षौ च दण्डपक्षावतः परम् ॥ १४ ॥
ऊर्ध्वमण्डलिनौ चैव पार्श्वमण्डलिनौ......... ।
.................चापि[2] नलिनौ पद्मकोपकौ ॥ १५ ॥
अल्लपल्लवौल्वणौ च ललितौ वलितौ तथा ।
चतुःषष्टिकरा ह्येते नामतोऽभिहिता मया ॥ १६ ॥
यथालक्षणमेतेषां कर्माणि च निबोधत ।
प्रसारिताः समाः सर्वा यस्याङ्गुल्यो भवन्ति हि ॥ १७ ॥
कुञ्चितश्च तथाङ्गुष्ठः स पताक इति स्मृतः ।
[3]..........................................॥ १८ ॥
एष प्रहारपाते प्रतापने नोदने प्रहर्षे च ।
गर्वेष्वहमिति तज्ज्ञैर्ललाटदेशोत्थितः कार्यः ॥ १९ ॥
एषोऽग्निवर्षधारानिरूपणे पुष्पवृष्टिपतने च ।
संयुतकरणः कार्यः प्रविरलचलिताङ्गुलिर्हस्तः ॥ २० ॥
स्वस्तिकविच्युतिकरणात्पुनरेवाधोमुखेन कर्तव्यम् ।
संवृतविवृतं पाल्यं छन्नं निबिडं च गोप्यं च ॥ २१ ॥
अस्यैव चाङ्गुलीभिस्त्वधोमुखप्रस्थितोत्थितचलिता(चला)भिः ।
वायूर्मिवेगवेलाक्षोभाश्चोद्यश्च कर्तव्यः ॥ २२ ॥
उत्साहनं बहु तथा महाजनप्रांशुपुष्करप्रहतिम् ।
पक्षोत्क्षेपाभिनयं रेचककरणे न कुर्वीत ॥ २३ ॥
परिघृष्टतलस्थेन तु धौतं मृदितं प्रमृष्टपिष्टे च ।
पुनरेव शैलधारणमुत्पाटनमेव चाभिनयेत् ॥ २४ ॥
एवमेष प्रयोक्तव्यः स्त्रीपुंसाभिनये करः ।
अतः परं प्रवक्ष्यामि त्रिपताकस्य लक्षणम् ॥ २५ ॥

---

१. 'वञ्चितकौ' ख. २. 'वापि' ख. ३. त्रुटिचिह्नं पुस्तकद्वयेऽपि नास्ति.

पताके तु यदा वक्रानामिका त्वङ्गुलिर्भवेत् ।
त्रिपताकः स विज्ञेयः कर्म चास्य निबोधत ॥ २६ ॥
आवाहनमवतरणं विसर्जनं धारणं प्रवेशश्च ।
उन्नामनं प्रणामो निदर्शनं विविधवचनं च ॥ २७ ॥
माङ्गल्यद्रव्याणां स्पर्शः शिरसोऽथ संनिवेशश्च ।
उष्णीषमुकुटधारणनासास्यश्रोत्रसंवरणम् ॥ २८ ॥
अस्यैव चाङ्गुलीभ्यामधोमुखप्रस्थितोत्थितचलाभ्याम् ।
लघुमुखपतनश्रोतोभुजगभ्रमरादिकान्कुर्यात् ॥ २९ ॥
अस्तु प्रमार्जनं तिलकविरचनं रोचनालभनकं च ।
त्रिपताकानामिकयोः स्पर्शनमलिकस्य कर्तव्यम् ॥ ३० ॥
स्वस्तिकौ त्रिपताकौ तु गुरूणां पादवन्दनम् ।
विच्युतौ चलितावस्थौ कर्तव्यौ नृपदर्शने ॥ ३१ ॥
तिर्यक्स्वस्तिकसंबद्धौ स्यातां तौ गृहदर्शने ।
तपस्विदर्शने कार्यो चोर्द्ध्वौ चापि पराङ्मुखौ ॥ ३२ ॥
परस्पराभिमुखौ च कर्तव्यौ द्वारदर्शने ।
उत्तानाधोमुखौ कार्यावग्रे च कुस्य(च)संस्थितौ ॥ ३३ ॥
वडवानलसंक्रामे मकराणां च दर्शने ।
अभिनेयास्त्वनेनैव वानरप्लवनोर्मयः ॥ ३४ ॥
पततश्च स्त्रियश्चैव नाट्ये नाट्यविचक्षणैः ।
तन्मुखप्रसृताङ्गुष्ठः कार्यो बालेन्दुदर्शने ॥ ३५ ॥
पराङ्मुखस्तु कर्तव्यो याने नृणां प्रयोक्तृभिः ।
त्रिपताके यदा हस्तः [1]........................ ॥ ३६ ॥
..............................भवेत्पृष्ठावलोकिनी ।
तर्जनी मध्यमापाश्च तदासौ कर्तरीमुखः ॥ ३७ ॥
पथिचरणरचनरञ्जनरङ्गणकरणान्यधोमुखेनैव ।
ऊर्ध्वमुखेन तु कुर्याद्दृष्टं शृङ्गं च लेखं च ॥ ३८ ॥

१. पुस्तकद्वयेऽपि त्रुटिचिह्नं न दृश्यते.

पतनमरणव्यतिक्रमपरिवर्तिवितर्कितं तथा न्यस्तम् ।
भिन्नवलिते च कुर्यात्कर्तर्यास्याङ्गुलिमुखेन ॥ ३९ ॥
यस्याङ्गुल्यस्तु विनताः सहाङ्गुष्ठेन चापवत् ।
सोऽर्धचन्द्र इति ख्यातः करः कर्मास्य वक्ष्यते ॥ ४० ॥
एतेन बालतरवः शशिलेखाकम्बुकलशवलयानि ।
निर्याटनमीयस्तं मध्यौपम्यं च पीनं च ॥ ४१ ॥
रसनाजघनकटीनामाननतलपत्रकुण्डलादीनाम् ।
कर्तव्यो नारीणामभिनययोगोऽर्धचन्द्रेण ॥ ४२ ॥
आद्या धनुर्लता कार्या कुञ्चिताङ्गुष्ठकस्तथा ।
शेषाभिन्नोर्ध्ववलिता ह्य(ह्य)रालेऽङ्गुलयः करे ॥ ४३ ॥
एतेन सत्त्वशौडीर्य(?)धृतिकान्तिदिव्यगाम्भीर्यम् ।
आशीर्वादाश्च तथा भावाहितसंज्ञकाः कार्याः ॥ ४४ ॥
एतेन पुनः स्त्रीणां केशानां संग्रहस्तथोत्कर्षः ।
सर्वाङ्गिकं तथैव च निर्वर्णनमात्मनः कार्यम् ॥ ४५ ॥
कौतुकविवाहयोगः प्रदक्षिणो नैव संप्रयोगश्च ।
अङ्गुल्यग्रस्वस्तिकयोगात्परिमण्डलेनैव ॥ ४६ ॥
प्रादक्षिण्यं परिमण्डलं च कुर्यान्महाजनं चैव ।
यत्र महीतलरचितं द्रव्यं तच्चाभिनेयं स्यात् ॥ ४७ ॥
आवाहननिर्वाहणनिर्माणे चाप्यनेकवचः ।
खेदस्य चापनयानगन्धघ्राणे शुभे चैव ॥ ४८ ॥
त्रिपताकहस्तजानि तु पूर्वं यान्यभिहितानि कर्माणि ।
तान्यथ गलयोगे····स्त्रीभिः सम्यक्प्रयोज्यानि ॥ ४९ ॥
अरालस्य यदा वक्रानामिका त्वङ्गुलिर्भवेत् ।
शुकतुण्डः स कर[ः]····कर्म चास्य निबोधत ॥ ५० ॥
एतेन त्वभिनेयं चाहं न त्वं न कृत्यमिति चार्थे ।
आवाहने विसर्गे च धिगिति वचने च सावज्ञम् ॥ ५१ ॥

अङ्गुल्यो यस्य हस्तस्य तलमाध्यग्रसंस्थिताः ।
तासामुपरि चाङ्गुष्ठः स मुष्टिरिति संज्ञितः ॥ ९२ ॥
एष प्रहारे व्यायामे निर्गमे पीडने तथा ।
संवाहनेऽसियष्टीनां दण्डकुन्तग्रहे तथा ॥ ९३ ॥
अस्यैव तु यदा मुष्टेरूर्ध्वोऽङ्गुष्ठः प्रयुज्यते ।
हस्तः स शिखरो नाम तथा ज्ञेयः प्रयोक्तृभिः ॥ ९४ ॥
[1]····सिकुशाङ्कुशधनुषां तोमरशक्तिप्रमोक्षणे चैव ।
अधरोष्ठपादरञ्जनमलकस्योत्क्षेपणं चैव ॥ ९५ ॥
अस्यैव शिखराख्यस्य ह्यङ्गुष्ठकनिपीडिता ।
यदा प्रदेशिनीवक्रा स कपित्थस्तदा स्मृतः ॥ ९६ ॥
असिचापचक्रतोमरकुन्तगदाशक्तिवज्रवर्गाणि ।
शस्त्राण्यभिनेयानि तु कार्यं पथ्यं च तथ्यं च ॥ ९७ ॥
उत्क्षिप्तवक्रा तु यदानामिका सकनीयसी ।
अस्यैव तु कपित्थस्य तदासौ खटकामुखः ॥ ९८ ॥
होत्रं हव्यं छत्रं प्रग्रहपरिकर्षणं च व्यञ्जनकम् ।
आदर्शधारणं खण्डनं तथा पेषणं चैव ॥ ९९ ॥
आयातदण्डग्रहणं मुक्ताप्रालम्बसंग्रहं चैव ।
स्रग्दामधारणं खलु वस्त्रान्तालम्बनं चैव ॥ ६० ॥
मन्थानशराक[2]र्षणपु[3]ष्पावचयप्रतोदकार्याणि ।
अङ्कुशरज्ज्वाकर्षस्त्रीदर्शनमेव कार्यं च ॥ ६१ ॥
खटकाख्ये यदा हस्ते तर्जनी सुप्रसारिता ।
हस्तः सूचीमुखो नाम तदा ज्ञेयः प्रयोक्तृभिः ॥ ६२ ॥
अस्य विविधान्प्रयोगान्वक्ष्यामि समासतः प्रदेशिन्याः ।
ऊर्ध्वनसलोलकम्पितविजृम्भितोद्वाहितवलेपाः ॥ ६३ ॥
चक्रं तडित्पताकामञ्जर्यः कर्णचूलिकाश्चैव ।
कुटिलगतयश्च सर्वे निर्देश्याः साधुवादश्चेत् ॥ ६४ ॥

---

१. पुस्तकद्वयेऽपि त्रुटिचिह्नं नास्ति. २. 'कषर्णं' क-ख. ३. 'पुष्पप्रच' क-ख.

बालोरगवहृयवधूमदीपवल्लीलताशिखण्डाश्च ।
परिपतनवक्रमण्डलमभिनेयान्यूर्ध्वलोलितया ॥ ६५ ॥
भूयश्चोर्ध्वे विरचिततारावोणैकदण्डयष्टिषु च ।
विनता च तथा कार्या दंष्ट्रिषु च तथास्ययोगेन ॥ ६६ ॥
पुनरपि मण्डलगतयः सर्वग्रहणं तथैव लोकस्य ।
प्रणतीकृता च कार्या[1]ध्यायेदर्थे च दिवसे च ॥ ६७ ॥
वदनाभ्यासे कुञ्चितविजृम्भिता वाक्यरूपणे कार्या ।
[2]...................................................॥ ६८ ॥

श्रवणाभ्यासे वक्रा विजृम्भणे वाक्यरूपणे च मुखे ।
सेति वादति(?)च योज्या प्रसारितोत्कम्पितोत्ताना ॥ ६९ ॥
कार्या प्रकम्पिता रोषदर्शने स्वेदमार्जने चैव ।
कुन्तलककुण्डलाङ्गदगण्डाश्रयसंश्रयेऽभिनये ॥ ७० ॥
गर्वेहमिति ललाटे रिपुनिर्देशे त्वथैव क्रोधे च ।
कोऽसाविति निर्देशे च कर्णकण्डूयने चैव ॥ ७१ ॥
संयुक्तसंयोगे कार्या विश्लेषिता वियोगे च ।
कलहे स्वस्तिकयुक्ता परस्परोत्पीडिता बन्धे ॥ ७२ ॥
द्वाभ्यां तु वामपार्श्वे दक्षिणतो दिननिशावसानानि ।
अभिमुखपराङ्मुखाभ्यां विश्लिष्टाभ्यां प्रयुञ्जीत ॥ ७३ ॥
द्वाभ्यां प्रदर्शयेन्नित्यं संपूर्णं चन्द्रमण्डलम् ।
श्लिष्टा ललाटे शक्रस्य कार्या ह्युत्तानसंश्रया ॥ ७४ ॥
परिमण्डलभ्रमितया मण्डलयो दर्शयेच्च चन्द्रस्य ।
हरनयने च ललाटे शक्रस्य तिर्यगुत्ताना ॥ ७५ ॥
यस्याङ्गुल्यस्तु विरला सहाङ्गुष्ठेन कुञ्चिता ।
ऊर्ध्वा ह्यसंगतास्ताश्च स भवेत्पद्मकोषकः ॥ ७६ ॥
बिल्वकपित्थफलानां ग्रहणं कुचदर्शनं च नारीणाम् ।
ग्रहणे ह्यामिषलाभे भवन्ति ताः कुञ्चिताग्रास्तु ॥ ७७ ॥

१. 'कार्या ह्याये दीर्घे च' ख. २. अत्र त्रुटितो ग्रन्थ इति प्रतिभाति.

देवार्चनबलिहरणे[1] समुद्गके साग्रपिण्डदाने च ।
कार्यः पुष्पप्रकरश्च पद्मकोषेण हस्तेन ॥ ७८ ॥
मणिबन्धनविश्लिष्टविरलचलिताङ्गुलिकराभ्याम् ।
कार्ये विवर्तिताभ्यां विकमलोत्पलाभिनयः ॥ ७९ ॥
अङ्गुल्यः संहताः सर्वाः सहाङ्गुष्ठेन यस्य च ।
तथा निम्नतलश्चैव स तु सर्वशिराः करः ॥ ८० ॥
एष सलिलप्रदाने भुजगगतौ तोयसेचने चैव ।
आस्फोटने च योज्यः करिकुम्भास्फालनाद्येषु ॥ ८१ ॥
अधोमुखीनां सर्वासामङ्गुलीनां समागमः ।
कनिष्ठाङ्गुष्ठकावूर्ध्वौ स भवेन्मृगशीर्षकः ॥ ८२ ॥
इह सांप्रतमस्त्यद्य(?)वशक्तेश्चोल्लालनेऽक्षपाते च ।
स्वेदापमार्जनेषु[3] च कुङ्कुमिते प्रचलितस्तु भवेत् ॥ ८३ ॥
त्रेताग्निसंस्थिता मध्या तर्जन्यङ्गुष्ठका यदा ।
कागू(ङ्गु)लेऽनामिका वक्रा तथा चोर्ध्वकनीयसी ॥ ८४ ॥
एतेन तरुणफलरूपणानि नानाविधानि च लघूनि ।
कार्याणि रोषजानि स्त्रीवचनान्यङ्गुलिक्षेपैः ॥ ८५ ॥
मरकतवैडूर्यादीनां निदर्शनं कार्यम् ।
ग्राह्यं विडालपदमिति चैव प्रयोगेषु ॥ ८६ ॥
आवर्तिन्यः करतले यस्याङ्गुल्यो भवन्ति हि ।
पार्श्वागतविकीर्णाश्च स भवेद्दलपल्लवः ॥ ८७ ॥
प्रतिषेधकृते योज्यं(?)तिकस्य त्वं नास्ति शून्यवचनेषु ।
पुनरात्मोपन्यासः स्त्रीणामेतेन कर्तव्यः ॥ ८८ ॥
विस्त्रः प्रसारिता यत्र तथा चोर्ध्वा कनीयसाम् ।
तासां मध्ये स्थितोऽङ्गुष्ठः करश्चतुरकः स्मृतः ॥ ८९ ॥

---

१. 'देवाचने' क-ख. २. लेखकादिदोषाच्छन्दोभङ्गदूषितोऽयं पाठः, एवमन्यत्रापि ज्ञेयम्. ३. 'श्वेद' क-ख.

नयविनयनियमनिपुणबालातुरसत्त्वकैतवार्थेषु ।
वोको मध्ये पुत्रे पद्ये प्रशमे च विनियोज्यः ॥ ९० ॥
एकेन द्वाभ्यां वा किंचिन्मण्डलकृतेन हस्तेन ।
विवृतविवारितरचितं वितर्कितं लज्जितं चैव ॥ ९१ ॥
नयनोपम्यं पद्मदलरूपणं कर्णनिर्देशः ।
संयुतकरणेनैवातुरेणैतानि कुर्वीत ॥ ९२ ॥
लीलारती[1] रुचिं स्मृतिबुद्धिविभावनाः क्षमां पुष्टिं च ।
संज्ञामासां प्रणयं विचारणं संततं शौचम् ॥ ९३ ॥
चातुर्यं माधुर्यं दाक्षिण्यं मार्दवं सुखं शीलम् ।
प्रश्नं वार्तायुक्तिं वेषं मृदुशाड्वलं स्तोकम् ॥ ९४ ॥
विभवाविभवौ सुरतं गुणागुणौ यौवनं दारान् ।
नानावर्णांश्च तथा चतुरेणैवं प्रयुञ्जीत ॥ ९५ ॥
सितमूर्ध्वेन तु कुर्याद्रक्तं पीतं च मण्डलकृते च ।
परिमृदितेन तु नीलं वर्णांश्चतुरेण हस्तेन ॥ ९६ ॥
मध्यमाङ्गुष्ठसंदेशो वक्रा चैव प्रदेशिनी ।
ऊर्ध्वमान्यप्रकीर्णे च द्व्यङ्गुलौ भ्रमरे करे ॥ ९७ ॥
पद्मोत्पलकुमुदानामन्येषां चैव दीर्घवृन्तानाम् ।
पुष्पाणां ग्रहणविधिः कर्तव्यः कर्णपूरश्च ॥ ९८ ॥
विद्युतश्च सहजश्च कार्यो निर्भत्सनादिषु ।
बालालापे च शीघ्रे च तालविश्वासने तथा ॥ ९९ ॥
तर्जनीमध्यमाङ्गुष्ठास्त्रेताग्निस्था निरन्तराः ।
भवेयुर्हंसवक्त्रस्य शेषे द्वे संप्रसारिते ॥ १०० ॥
श्लक्ष्णाल्पशिथिललाघवनिःसारार्थमृदुतयोगे च ।
कार्योऽभिनयविशेषः किंचित्प्रस्यन्दिताग्रेण ॥ १०१ ॥
समाः प्रसारितास्तिस्रस्तथा चोर्ध्वा कनीयसी ।
अङ्गुष्ठः कुञ्चितश्चैव हंसपक्ष इति स्मृतः ॥ १०२ ॥

---

1. 'रतिं' क.

एष च निवापसलिले दातव्ये गञ्जसंश्रये चैव ।
कार्यः प्रतिग्रहावमनभोजनार्थेषु विप्राणाम् ॥ १०३ ॥
आलिङ्गने महास्तम्भनिदर्शने रोमहर्षणे चैव ।
स्पर्शेऽनुभेपनार्थे योज्यः संवाहने चैव ॥ १०४ ॥
पुनरेव च नारीणां स्तनान्तरस्थेन विभ्रमविशेषाः ।
कार्यो यथा रसाः स्युर्दुःखे हनुधारणे चैव ॥ १०५ ॥
तर्जन्यङ्गुष्ठसंदेहस्त्वरालस्यं यदा भवेत् ।
आभुग्नतलमध्यस्थः स संदंश इति स्मृतः ॥ १०६ ॥
संदंशस्त्रिविधो ज्ञेयस्त्वग्रजो मुखजस्तथा ।
तथा पार्श्वगतश्चैव रसभावोपबृंहितः ॥ १०७ ॥
पुष्पावचयग्रथने ग्रहणे तृणपर्णकेशसूत्राणाम् ।
शिल्पावयवग्रहणे प्रकर्षणे चाङ्गसंदंशः ॥ १०८ ॥
वृन्तात्पुष्पोद्धरणं चिति शलाकादिपूरणं चैव ।
धिगिति [च] वचनं रोषे मुखसंदंशस्य कर्माणि ॥ १०९ ॥
यज्ञे पर्वतधारणवेधनगुणसूक्ष्मबाणलक्ष्येषु ।
योगे ध्याने स्तोके संयुतकरणस्तु कर्तव्यः ॥ ११० ॥
पेलवकुत्सासूयासदूषवचने च वामहस्तेन ।
किंचिद्विवर्तिताग्रः प्रयुज्यते पार्श्वसंदंशः ॥ १११ ॥
आलेख्य नेत्ररञ्जनवितर्कवृत्तप्रवालरचनं च ।
निष्पीडनं तथालक्तकस्य कार्यं च नारीभिः ॥ ११२ ॥
समागताग्राः सहिता यस्याङ्गुल्यो भवन्ति हि ।
ऊर्ध्वा हंसमुखस्यैव स भवेन्मुकुलः करः ॥ ११३ ॥
देवार्चनबलिकरणे पद्मोत्पलकुमुदरूपणे चैव ।
विदचुम्बने च कार्यो विकुशिते विप्रकीर्णस्य ॥ ११४ ॥
भोजनहिरण्यगणनामुखसंकोचप्रदानशीघ्रेषु ।
मुकुलितकुसुमेषु तथा तज्ज्ञैरेष प्रयोक्तव्यः ॥ ११५ ॥

१. 'मान' क. २. 'उद्धारणं' क-ख. ३. 'चति' क. ४. 'च' क-ख.

पद्मकोषस्य हस्तस्य ह्यङ्गुल्यः कुञ्चिता यदा ।
ऊर्णनाभः स विज्ञेयः केशचौर्यग्रहादिषु ॥ ११६ ॥
शिरःकण्डूयने चैव कुष्ठव्याधिनिरूपणे ।
सिंहव्याघ्रेष्वभिनयः प्रस्तरग्रहणे तथा ॥ ११७ ॥
मध्यमाङ्गुष्ठसंदंशो वक्रा चैव प्रदेशिनी ।
शेषे तलस्थे कर्तव्ये ताम्रचूलकरेऽङ्गुली ॥ ११८ ॥
व्युत्पन्नश्च सशब्दश्च कार्यो निर्भर्त्सनादिषु ।
तालेष्विष्वसिते चैव शीघ्रार्थे संज्ञितेषु च ॥ ११९ ॥

अथवा । 'अङ्गुल्यः संयुता वक्रा उपर्यङ्गुष्ठपीडिता ।
प्रसारिता कनिष्ठा च ताम्रचूलकरः स्मृतः ॥
शतं सहस्रं लक्षादि कनकं चापि दर्शयेत् ।
क्षिप्रमुक्ताङ्गुलीभिस्तु स्फुलिङ्गान्विप्रुषस्तथा ॥' इति ।

असंयुताः करा ह्येते मया प्रोक्ता द्विजोत्तमाः ।
अधुना संयुतान्हस्तानादितो मे निबोधत ॥ १२० ॥
पताकाभ्यां तु हस्ताभ्यां संश्लेषादञ्जलिः स्मृतः ।
देवतानां गुरूणां च मित्राणां चाभिवादने ॥ १२१ ॥
देवतानां शिरस्कस्तु गुरूणामास्यसंस्थितः ।
वक्षःस्थश्चैव मित्राणां स्त्रीणां कार्यो यथेप्सितः ॥ १२२ ॥
उभाभ्यामभिहस्ताभ्यामन्योन्यं पार्श्वसंग्रहात् ।
हस्तः कपोतको नाम कर्म चास्य निबोधत ॥ १२३ ॥
एषोऽभिनयाभिगमे प्रणामकरणे गुरोश्च संभाषे ।
शीते भये च कार्यो वक्षःस्थः कम्पितः स्त्रीभिः ॥ १२४ ॥
अयमेवाङ्गुलिपरिघृष्यमाणमुक्तस्तु खिन्नवाक्येषु ।
एतावदिति [च] कार्यो भेदाङ्गीकृत्यमिति वाथ ॥ १२५ ॥
अङ्गुल्यो यस्य हस्तस्य ह्यन्योन्यान्तरतिस्मृतः ।
स कर्कट इति ज्ञेयः करः कर्म च वक्ष्यते ॥ १२६ ॥

एष मदनाङ्गमर्दे सुप्तोत्थितजृम्भणे बृहद्देहे ।
अनुधारणे च योज्यः शङ्खग्रहणेऽर्थतत्त्वज्ञैः ॥ १२७ ॥
मणिबन्धनविन्यस्तावरालौ स्त्रीप्रयोजितौ ।
उत्तानौ वामपार्श्वस्थौ स्वस्तिकः परिकीर्तितः ॥ १२८ ॥
स्वस्तिकविच्युतिकरणा दिशो घनाः खं वनं समुद्राश्च ।
ऋतवो मही तथायं विस्तीर्णं वाभिनेयं स्यात् ॥ १२९ ॥
खटकः खेटके न्यस्तः खटकावर्धमानकः ।
शृङ्गारार्थेषु योक्तव्यः प्रणामकरणे तथा ॥ १३० ॥
अन्ये, 'कुमुदोत्पलवृन्तेषु कर्तव्यश्छत्रधारणे ।' इति ।
'अरालौ तु विपर्यस्तादुत्तानौ वर्धमानकौ ।
उत्सङ्ग इति विज्ञेयः कार्ये सिंहावलोकिते ॥' इति [च] ।
मुकुलं तु यदा हस्तं कपित्थः परिवेष्टयेत् ।
स मन्तव्यस्तदा हस्तो निषेधो नाम नामतः ॥ १३१ ॥
संग्रहपरिग्रहो धारणं च समयश्च सत्यवचनं च ।
संक्षेपः संक्षिप्तं निपीडितेनाभिनेतव्यम् ॥ १३२ ॥
अंसौ प्रशिथिलौ मुक्तौ पताकौ तु प्रलम्बितौ ।
यदा भवेतां करणे स दोल इति संज्ञितः ॥ १३३ ॥
संभ्रमविषदे मूर्छितमदाभिघाते तथैव चावेगे ।
व्याधिप्लुते च शस्त्रक्षते च कार्योऽभिनययोगः ॥ १३४ ॥
यस्तु सर्पशिराः प्रोक्तस्तस्याङ्गुलिनिरन्तरः ।
द्वितीयः पार्श्वसंश्लिष्टः स तु पुष्पपुटः स्मृतः ॥ १३५ ॥
धान्यफलपुष्पसदृशान्यनेन नानाविधानि युक्तानि ।
ग्राह्याण्युपनेयानि च तोयानयनापनयनं च ॥ १३६ ॥
पताकौ तु यदा हस्तादूर्ध्वाङ्गुष्ठावधोमुखौ ।
उपर्युपरि विन्यस्तौ तदा स मकरः करः ॥ १३७ ॥
सिंहव्यालद्वीपिप्रदर्शनं नक्रमकरमत्स्यानाम् ।
ये चान्ये क्रव्यादा अभिनेयास्तेऽर्थयोगेन ॥ १३८ ॥

कूर्परं संचितौ हस्तौ यदास्तां सर्पशीर्षकौ ।
गजदन्तः स तु करः कर्म चास्य निबोधत ॥ १३९ ॥
एष [च] वधूवराणामुद्वाहे चातिभारयोगेन ।
स्तम्भग्रहणे च तथा शैलशिलोत्पाटने चैव ॥ १४० ॥
शुकतुण्डौ करौ कृत्वा वक्ष्यस्यभिमुखाञ्चितौ ।
शनैरधोमुखाविद्धोऽसावहित्थ इति स्मृतः ॥ १४१ ॥
दैन्यस्य निःश्वसिते गात्राणां दर्शने न(त)नुत्वे च ।
उत्कण्ठिता न तसैरभिनययोगश्च कर्तव्यः ॥ १४२ ॥
ज्ञेया वै वर्धमानस्तु हंसपक्षौ पराङ्मुखौ ।
जालवातायनादीनां प्रयोक्तव्यो विघाटने ॥ १४३ ॥
उक्ताश्चैते द्विविधा ह्यसंयुताः संयुताश्च संक्षेपात् ।
अभिनयकरास्तु ये त्विह तेऽन्यत्राप्यर्थतः साध्याः ॥ १४४ ॥

अन्यैरप्युक्तम्—'आकृत्या चेष्टया चिह्नैर्जात्या विज्ञाय वस्तुतः ।
स्वयं वितर्क्य कर्तव्यं हस्ताभिनयनं बुधैः ॥' इति ।

नास्ति कश्चित्तथा हस्तो नाट्याभिनयनं प्रति ।
यस्य संदृश्यते रूपं बहुशस्तन्मयोदितम् ॥ १४५ ॥
अन्ये चाप्यर्थसंयुक्ता लौकिका ये करास्त्विह ।
छन्दस्तेऽपि प्रयोक्तव्या रसभावविचेष्टितैः ॥ १४६ ॥
देशं कालं प्रयोगं चाप्यर्थमु(यु)क्तिमवेक्ष्य च ।
हस्ता ह्येते प्रयोक्तव्या नृणां स्त्रीणां विशेषतः ॥ १४७ ॥
सर्वेषामेव हस्तानां यानि कर्माणि ह(स)न्ति वै ।
तान्यहं सप्त वक्ष्यामि रसभावकृतानि तु ॥ १४८ ॥
उत्कर्षणं विकर्षणं तथा व्याकर्षणं पुनः ।
परिग्रहश्चाप्याह्वानं ताडनं तर्जनं तथा ॥ १४९ ॥
संश्लेषश्च वियोगश्च रक्षणं मोक्षणं तथा ।
विक्षेपधूनने चैव विसर्गस्तर्जनं तथा ॥ १५० ॥

छेदनं भेदनं चैव छिन्धि(द्र)विस्फोटनं तथा ।
ताडनं चेति विज्ञेयं तज्ज्ञैः कर्मकरान्प्रति ॥ १९१ ॥
सर्वे हस्तप्रचाराश्च प्रयोगेषु यथाविधि ।
नेत्रभ्रूमुखरागाद्यैः कर्तव्या व्यञ्जितायुधैः ॥ १९२ ॥
करणं कर्मस्थानं प्रचारयुक्तिं क्रियां च समवेक्ष्य ।
हस्ताभिनयः कार्यस्तज्ज्ञैर्लोकोपचारेण ॥ १९३ ॥
उत्तमानां कराः कार्या ललाटाक्षेत्र(क्षिप्र)चारिणः ।
वक्षःस्थाश्चैव मध्यानामधमानामधोगताः ॥ १९४ ॥
येऽष्ट स्वल्पप्रचाराः स्युर्मध्ये कुर्वीत मध्यमैः ।
लोकक्रियास्वभावेन नीचैरप्यर्थसंश्रयाः ॥ १९५ ॥
अथ चान्यदशप्राप्य्यं प्रयोगं कालमेव च ।
विपरीतक्रियाहस्ताः प्रयोक्तव्या बुधैर्नरैः ॥ १९६ ॥
विषण्णे मूर्छिते हीने जुगुप्साशोकपीडिते ।
ग्लाने स्वप्ने विहस्ते च निश्चेष्टे तन्द्रिते तथा ॥ १९७ ॥
व्याधिग्रस्ते जरार्ते च भयार्ते शीतविप्लुते ।
मत्तप्रमत्ते चोन्मत्ते चिन्तायां तपसि स्थिते ॥ १९८ ॥
न हस्ताभिनयः कार्यः कार्यः सत्त्वसमाश्रयः ।
तथा काकुविशेषश्च नानाभावरसान्वितः ॥ १९९ ॥
यन्नाट्यप्रादुर्भौ हस्तौ तत्र दृष्टिविलोकनैः ।
वाचिकाभिनयं का(कु)र्याद्विरामैरर्थदर्शकैः ॥ १६० ॥
उत्तानः पार्श्वगश्चैव तथाधोमुख एव च ।
प्रचारस्त्रिविधोऽङ्गानां नाट्यनृत्तसमाश्रयः ॥ १६१ ॥
अन्ये तु, 'उत्तानोवर्तुलस्त्र्यस्त्रः स्थितोऽधोमुख एव च ।
पञ्च प्रकारा हस्तस्य नाट्यनृत्तसमाश्रयाः ॥' इति ।
एवं ज्ञेयाः करा ह्येते नानाभिनयसंज्ञकाः ।
अत ऊर्ध्वं प्रवक्ष्यामि करान्नृत्तसमाश्रयान् ॥ १६२ ॥

१. 'नूल' क-ख.

वक्षसोऽष्टाङ्गुलस्थौ तु प्राङ्मुखौ खटकामुखौ ।
समानकूर्परांसौ तु चतुरस्रौ प्रकीर्तितौ ॥ १६३ ॥
हंसपक्षकृतौ हस्तौ व्यावृत्तौ तालवृन्तवत् ।
उद्वृत्ताविति विज्ञेयावथवा तालवृन्तके ॥ १६४ ॥
चतुरप्रस्थितौ हस्तौ हंसपक्षकृतौ तथा ।
तिर्यक्स्थितौ वाभिमुखौ ज्ञेयौ तलमुखाविति ॥ १६५ ॥
तावेव मणिबन्धान्ते स्वस्तिकाकृतिसंस्थितौ ।
स्वस्तिकाविति विख्यातौ विच्युतौ विप्रकीर्णकौ ॥ १६६ ॥
[1]अलपवसंस्थानात्तूर्द्वास्यौ पद्मकोषकौ ।
अरालखटकाख्यौ तु(?)प्यरालखटकामुखौ॥ १६७ ॥

अन्ये तु, 'तथैव मणिबन्धान्ते ह्यरालविच्युतावुभौ ।
ज्ञेयौ प्रयोक्तृभिर्नित्यमरालखटकाविति ॥' इति ।

भुजांसकूर्पराग्रैस्तु कुटिलावर्तितौ करौ ।
पराङ्मुखतलाविद्धौ ज्ञेयावाविद्धवक्रकौ ॥ १६८ ॥
हस्तौ तु सर्पशिरसौ मध्यमाङ्गुष्ठकौ यदा ।
तिर्यक्प्रसारितास्यौ च तदा सूचीमुखौ स्मृतौ ॥ १६९ ॥

अन्यैः, 'सर्पशीर्षौ यदा हस्तौ भवेतां स्वस्तिकस्थितौ ।
मध्यप्रसारिताङ्गुष्ठौ ज्ञेयौ सूचीमुखौ तदा ॥' इति ।

रेचितौ वापि विज्ञेयौ हंसपक्षोद्धृतभ्रमौ ।
प्रसारितोत्तानतलौ रेचिताविति संज्ञितौ ॥ १७० ॥
चतुरस्रो भवेद्वामः सव्यहस्तश्च रेचितः ।
विज्ञेयौ नृत्ततत्त्वज्ञैरर्धरेचितसंज्ञितौ ॥ १७१ ॥
अञ्चितौ कूर्परांसौ तु त्रिपताकौ करौ कृतौ ।
किंचित्तिर्यग्ल(क्त)लावेतौ स्मृतावुत्तानवञ्चितौ ॥ १७२ ॥
मणिबन्धनमुक्तौ तु पताकौ पल्लवौ स्मृतौ ।
बहुशेषाद्विनिष्क्रान्तौ नित्यं वार्चित(?)कीर्तितौ ॥ १७३ ॥

---

१. 'अरालपदसंस्थानात्' इति स्यात्.

केशदेशाद्विनिष्क्रान्तौ पारिपार्श्वोत्थितौ तथा ।
विज्ञेयौ केशबन्धौ तु करावाचार्यसंमतौ ॥ १७४ ॥
तिर्यक्प्रसारितौ चैव पार्श्वसंस्थौ तथैव च ।
लताख्यौ च करौ ज्ञेयौ नृत्ताभिनयनं प्रति ॥ १७५ ॥
समुन्नतो लताहस्तः पार्श्वात्पार्श्वं विलोलितः ।
त्रिपताकोऽपरः कर्णे करिहस्तः प्रकीर्तितः ॥ १७६ ॥
करिहस्तनिविष्टौ द्वौ त्रिपताकौ यदा करौ ।
पक्षवञ्चितकौ हस्तौ तदा ज्ञेयौ प्रयोक्तृभिः ॥ १७७ ॥
तावेव तु परावृत्तौ पक्षप्रद्योतकौ स्मृतौ ।
अधोमुखतलाविद्धौ ज्ञेयौ गरुडपक्षकौ ॥ १७८ ॥
हंसपक्षकृतौ हस्तौ व्यावृत्तपरिवर्तितौ ।
तथा प्रसारितभुजौ दण्डपक्षाविति स्मृतौ ॥ १७९ ॥
ऊर्ध्वमण्डलिनौ हस्तावूर्ध्वदेशविवर्तनात् ।
तावेव पार्श्वविन्यस्तौ पार्श्वमण्डलिनौ स्मृतौ ॥ १८० ॥
उद्वेष्टितो भवेदेको द्वितीयश्चापवेष्टितः ।
भ्रामितावुरसं(सः) स्थाने ह्युरो मण्डलिनौ स्मृतौ ॥ १८१ ॥
अरालपल्लवकरावुरोर्धभ्रमणक्रमात् ।
पार्श्वावर्तश्च विज्ञेयावुरः पार्श्वार्धमण्डलौ ॥ १८२ ॥
हस्तौ तु मणिबन्धान्ते कुञ्चितावञ्चितौ यदा ।
खटकाख्यकृतौ स्यातां मुष्टिकस्वस्तिकौ तदा ॥ १८३ ॥
पद्मकोषौ यदा हस्तौ व्यावृत्तपरिवर्तितौ ।
नलिनीपद्मकोषौ तु तदा ज्ञेयौ प्रयोक्तृभिः ॥ १८४ ॥
करावुद्वेष्टिताग्रौ तु प्रविधायालपल्लवौ ।
ऊर्ध्वप्रसारिताविद्धौ कर्तव्या(?)दुल्बणावपि ॥ १८५ ॥
अथावेष्टितमेकं स्यादुद्वेष्टितमथापरम् ।
[1]व्यावर्तितं तृतीयं तु चतुर्थं परिवर्तितम् ॥ १८६ ॥

१. 'व्यावृतितं' क-ख.

आवेष्ट्यन्ते यदाङ्गुल्यस्तर्जन्याद्या यथाक्रमम् ।
अत्यन्तरेण करणं तदावेष्टितमुच्यते ॥ १८७ ॥
आवेष्ट्यन्ते यदाङ्गुल्यस्तर्जन्याद्या बहिर्मुखम् ।
क्रमशः करणं विप्रास्तदुद्वेष्टितमुच्यते ॥ १८८ ॥
आवर्त्यन्ते कनिष्ठाद्या अङ्गुल्योऽभ्यन्तरेण तु ।
यथाक्रमेण करणं तद्व्यावर्तितमुच्यते ॥ १८९ ॥
उद्वर्त्यन्ते कनिष्ठाद्या बाह्यतः क्रमशो यदा ।
अङ्गुल्यः करणं विप्रास्तदुक्तं परिवर्तितम् ॥ १९० ॥
नृत्तेऽभिनययोगे च पाणिभिर्वर्तनाश्रयैः ।
मुखभ्रूनेत्रयुक्तानि करणानि प्रयोजयेत् ॥ १९१ ॥
तिर्यक्तथोर्ध्वसंस्थो ह्यधोमुखश्चाञ्चितोपविध(द्ध)स्तु ।
मण्डलगतिस्तथा स्वस्तिकश्च पुष्टानुसारी च ॥ १९२ ॥
उद्वेष्टितप्रसारित इत्येते वै स्मृताः प्रकारास्तु ।
बाह्वोरिति करणगता विज्ञेया निव(न)र्तकैर्नित्यम् ॥ १९३ ॥
हस्तानां करणविधिर्मया समासेन निगदितो विप्राः ।
अत ऊर्ध्वं व्याख्यास्ये हृदयोदः(रः)पार्श्वकर्माणि ॥ १९४ ॥
अभुग्नमप्यनिर्भुग्नं तथा चैव प्रकम्पितम् ।
उद्वाहितं समं चैव ह्युरः पञ्चविधं स्मृतम् ॥ १९५ ॥
निम्नमुन्नतपुष्टं च व्याभुग्नांसं श्लथं क्वचित् ।
आभुग्नं तदुरो ज्ञेयं कर्म चास्य निबोधत ॥ १९६ ॥
संभ्रमविषादमूर्छाशोकभयव्याधिहृदयशिल्पेषु ।
कार्यं शीतस्पर्शे वर्षे लज्जान्वितेऽर्थवशात् ॥ १९७ ॥
स्वच्छं च निम्नपृष्ठं च निर्भुग्नांसं समुन्नतम् ।
उरोनिर्भुग्नमेतद्धि कर्म चास्य निबोधत ॥ १९८ ॥
स्तम्भे मानग्रहणे विस्मयदृष्टे च सत्यवचने च ।
अहमिति च दर्पवचने गर्वोत्सेके च कर्तव्यम् ॥ १९९ ॥
(आर्या पुनः केचित् क्षेपकोऽयम् ।)

दीर्घनिश्वसिते चैव जृम्भणामोटने तथा ।
विक्षो(व्वो)के च पुनः स्त्रीणां तद्विज्ञेयं[1] प्रयोक्तृभिः ॥ २०० ॥
ऊर्ध्वक्षेपैरुरो यत्र निरन्तरकृतैः कृतम् ।
प्रकम्पितं तु तज्ज्ञेयमुरो नाट्यप्रयोक्तृभिः ॥ २०१ ॥
हसितरुदितेषु कार्यं श्रमे भये श्वासकाशयोश्चैव ।
हिक्कादुःखे च तथा नाट्यज्ञैरर्थवेगेन ॥ २०२ ॥
उद्वाहितमूर्ध्वकृतमुरो ज्ञेयं प्रयोक्तृभिः ।
दीर्घोच्छ्वासोऽत्र चालोकजृम्भणादिषु चेष्यते ॥ २०३ ॥
सर्वैरेवाङ्गविन्यासैश्चतुरस्रकृतैः कृतम् ।
उरः समं तु विज्ञेयं स्वस्थं सौष्ठवसंयुतम् ॥ २०४ ॥
एतदुक्तं मया सम्यगुरसस्तु विकल्पनम् ।
अतः परं प्रवक्ष्यामि पार्श्वयोरिह लक्षणम् ॥ २०५ ॥
नतं [स]मुन्नतं [चैव] प्रसारितविवर्तिते ।
तथापसृतमेवं तु पार्श्वयोः कर्म पञ्चधा ॥ २०६ ॥
कटी भवेत्तु व्याभुग्ना पार्श्वमाभुग्नमेव च ।
तथैवापसृतांसं च किंचित्पार्श्वं नतं स्मृतम् ॥ २०७ ॥
नतस्यैवापरं पार्श्वं विपरीतं तु युक्तितः ।
कटीपार्श्वभुजांसैश्चा प्युन्नतैरुन्नतं भवेत् ॥ २०८ ॥
आयामत्वादुभयतः पार्श्वयोः स्यात्प्रसारितम् ।
परिवर्तात्त्रिकस्यापि विवर्तितमिहेष्यते ॥ २०९ ॥
विवर्तनोपनयनाद्भवेदपसृतं पुनः ।
पार्श्वलक्षणमित्युक्तं विनियोगं निबोधत ॥ २१० ॥
उपसार्यं नतं कार्यमुन्नतं चापसर्पणे ।
प्रसारितं प्रहर्षादौ परिवृत्ते विवर्तितम् ॥ २११ ॥
विनिवृत्ते त्वपसृतं पार्श्वनर्थ(र्त)वशाद्भवेत् ।
एतानि पार्श्वकर्माणि जठरस्य निबोधत ॥ २१२ ॥

१. 'विगुणयं' क-ख.

क्षामं खल्लं च पूर्णं च संप्रोक्तमुदरं त्रिधा ।
तनु क्षामं नतं खल्लं पूर्णमाध्मातमुच्यते ॥ २१३ ॥
क्षामं हास्येऽथ रुदिते निःश्वासे जृम्भणे भवेत् ।
व्याधिते तपसि श्रान्ते क्षुधार्ते खल्लमिष्यते ॥ २१४ ॥
पूर्णमुच्छ्वासिते स्थूले व्याधितान्यशतादिषु ।
अन्ये तु, 'क्षामं खल्लं समं पूर्णमुदरं स्याच्चतुर्विधम् ।
इत्येतदुदरस्योक्तं कर्म कट्या निबोधत ॥' इति ।
छिन्ना चैव निवृत्ता च रेचिता कम्पिता तथा ॥ २१५ ॥
उद्वाहिता चेति कटी नाट्यनृत्ते च पञ्चधा ।
कटीमध्यस्य चलनाच्छिन्ना संपरिकीर्तिता ॥ २१६ ॥
पराङ्मुखस्याभिमुखी निवृत्ता स्यान्निवर्तिता ।
सर्वतो नमनाच्चापि विज्ञेया रेचिता कटी ॥ २१७ ॥
तिर्यग्गता क्षिप्रकटी ज्ञेया सा वै प्रकम्पिता ।
नितम्बपार्श्वोद्वहनच्छनैरुद्वाहिता कटी ॥ २१८ ॥
पुनश्चासां प्रवक्ष्यामि विनियोगप्रयोजनम् ।
छिन्ना व्यायामसंभ्रान्तव्यावृत्तक्षेपणादिषु ॥ २१९ ॥
निवृत्तावर्तने चैव रेचिता भ्रमणादिषु ।
कुब्जवामननीचानां गतौ कार्या प्रकम्पिता ॥ २२० ॥
स्थूलेषूद्वाहिता योज्या स्त्रीणां लाजगतेषु च ।
[1]........................................ ॥ २२१ ॥
कम्पनं चलनं चैव स्तम्भनोद्वर्तने तथा ।
विवर्तनं च पञ्चैतान्यूरुकर्माणि कारयेत् ॥ २२२ ॥
नमनोन्नमनात्पार्ष्णेर्मुहुः स्यादूरुकम्पनम् ।
गच्छेदभ्यन्तरं जातु यत्र तद्वलनं स्मृतम् ॥ २२३ ॥

---

१. त्रुटिचिह्नं पुस्तकद्वितयेऽपि नास्ति. परं कटिलक्षणविरामसूचकमूरुलक्षणारम्भसूचकं श्लोकार्धमपेक्षत एव.

पार्ष्णिरभ्यन्तरं गच्छेद्यत्र तेऽसुविवर्तनम् ।
गतिष्वधमपात्राणां भवेच्चापि हि कम्पनम् ॥ २२४ ॥
चलनं चैव कर्तव्यं स्त्रीणां स्वैर परिक्रमम् ।
साध्वसे च विषादे च स्तम्भनं संप्रयोजयेत् ॥ २२५ ॥
व्यायामे ताण्डवे चैव कार्यमुद्वर्तनं बुधैः ।
विवर्तनं च कर्तव्यं संभ्रमादिपरिक्रमे ॥ २२६ ॥
यथादर्शनमन्यच्च लोकाद्ग्राह्यं प्रयोक्तृभिः ।
इत्यूर्वोर्लक्षणं प्रोक्तं जङ्घयोस्तु निबोधत ॥ २२७ ॥
आवर्तितं नतं क्षिप्तमुद्वाहितमथापि वा ।
परिवृत्तं तथा चैव जङ्घाकर्माणि पञ्चधा ॥ २२८ ॥
वामो दक्षिणपार्श्वेन दक्षिणश्चापि वामतः ।
पादो यत्र व्रजेद्विप्रास्तदावर्तितमुच्यते ॥ २२९ ॥
(केचित्) 'जङ्घास्वस्तिकयोगेन क्रमादावर्तितं लये(भवे)त् ।
जानुनः कुञ्चनाच्चैव नतं ज्ञेयं प्रयोक्तृभिः ॥
विक्षेपाच्चापि जङ्घायाः क्षिप्तमित्यभिधीयते ।' इति ।
केचित्, क्षेपकोऽयम् ।
नतं स्याज्जानुनमनात्क्षिप्तं विक्षेपणाद्बहिः ।
उद्वाहितं च विज्ञेयमूर्ध्वमुद्वाहनादिह ॥ २३० ॥
प्रतीपनयनं यत्तु परिवृत्तं तदुच्यते ।
आवर्तितं प्रयोक्तव्यं विदूषकपरिक्रमे ॥ २३१ ॥
नतं चापि हि कर्तव्यं स्थानासनगमादिषु ।
क्षिप्रं[1] व्यायामयोगेषु ताण्डवे यं(च) प्रयुज्यते ॥ २३२ ॥
तथा चोद्वाहितं कार्यमाविद्धगमनादिषु ।
ताण्डवादौ प्रयोक्तव्यं परिवृत्तं प्रयोक्तृभिः ॥ २३३ ॥
इत्येवं जङ्घयोः कर्म पादयोस्तु निबोधत ।
उद्घटितसमग्रो य[स्त]थाग्रतलसंचरः ॥ २३४ ॥

---

१. 'क्षिप्रं' क-ख.

अञ्चितः कुञ्चितः सूचीपादः षोढा प्रकीर्तितः ।
स्थित्वा पादतलाग्रेण पार्ष्णिर्भूमौ निपात्यते ॥ २३५ ॥
यस्य पादस्य करणे भवेदुद्धटितस्तु सः ।
अयमुद्धटितकरणेष्वनुकरणार्थं प्रयोगमासाद्य ॥ २३६ ॥
हृतमध्यमप्रचारः सकृदसकृद्वा प्रयोक्तव्यः ।
स्वभावरचितो भूमौ समस्थानश्च यो भवेत् ॥ २३७ ॥
समपादः स विज्ञेयः स्वभावाभिनयाश्रयः ।
स्थिरः स्वभावाभिनये नानाकरणसंश्रये ॥ २३८ ॥
चलितश्च पुनः कार्यो विक्षेपः पादरेचिते ।
उत्क्षिप्ता तु भवेत्पार्ष्णिः प्रसृतोङ्गुष्ठकस्तथा ॥ २३९ ॥
अङ्गुल्यग्राञ्चिताः सर्वाः पादाग्रतलसंचरे ।
तोदननिकुट्टने स्थितनिशुम्भने भूमिताडने भ्रमणे ॥ २४० ॥
विक्षिप्तभ्रान्तकारचका(?)स्वनेनाभिनेतव्याः ।
पार्ष्णिर्यस्य स्थिता भूमावूर्ध्वमग्रतलं तथा ॥ २४१ ॥
अङ्गुल्यश्चाञ्चिताः सर्वाः स पादोऽञ्चित उच्यते ।
पादाग्रस्थितसंचारे वर्तितोद्वर्तिते तथा ॥ २४२ ॥
अतिक्रान्तक्रमे चैव पादमेतं प्रयोजयेत् ।
उत्क्षिप्ता तु भवेत्पार्ष्णिरङ्गुष्ठाग्रेण संस्थितः ॥ २४३ ॥
षड्विधं वादितोऽन्ये ।
वामश्चैव स्वभावस्थः सूचीपादः प्रकीर्तितः ।
नृत्तेऽन्तःपुरकरणे प्रयोगस्तस्य कीर्तितः ॥ २४४ ॥
पादजङ्घोरुकरणं समं कार्यं प्रयोक्तृभिः ।
पादस्य करणं सर्वं जङ्घोरुकृतमिष्यते ॥ २४५ ॥
यथा पादः प्रवर्तेत तथैवैताः(वासौ) प्रवर्तते ।
तयोः समानकरणात्पादचारी प्रयोजयेत् ॥ २४६ ॥
इत्येतदङ्गजं प्रोक्तं लक्षणं चैव कर्म हि ।
अतः परं प्रवक्ष्यामि चारीघा(पा)तनलक्षणम् ॥ २४७ ॥

इति श्रीभारतीये नाट्यशास्त्रेऽङ्गाभिनयो नाम नवमोऽध्यायः ।

दशमोऽध्यायः ।

विधानोपगताश्चार्यो व्यायामो यः परस्परम् ।
यस्मादङ्गसमायुक्तस्तस्माद्व्यायाम उच्यते ॥ १ ॥
एकपादे प्रचारो यः संचारीत्यभिधीयते ।
द्विपादप्रवणं यस्तु करणं नाम तद्भवेत् ॥ २ ॥
करणानां समायोगः खण्ड इत्यभिधीयते ।
खण्डैस्त्रिभिश्चतुर्भिर्वा संयुक्तं मण्डलं भवेत् ॥ ३ ॥
चारीभिः प्रस्तुतं नृत्तं चारीभिश्चेष्टितं यथा ।
चारीभिः शस्त्रमोक्षश्च चार्या युद्धेषु कीर्तिता ॥ ४ ॥
यदेतत्प्रस्तुतं नाट्यं तच्चारीष्वेव संस्थितम् ।
नहि चार्या विना किंचिन्नाट्येऽङ्गं संप्रवर्तते ॥ ५ ॥
तस्माच्चारीविधानस्य संप्रवक्ष्यामि लक्षणम् ।
ये यस्मिंश्च प्रयोक्तव्या नृत्ते युद्धे तथा गतौ ॥ ६ ॥
समपादा स्थितावार्ता शकटास्या तथैव च ।
अर्धिका वाषगति च चार्विभ्यश्च तथापरा ॥ ७ ॥
ए(अ)लकाक्रीडिता वद्धा(द्धा) भूरुद्वृत्ता तथाङ्गिता ।
उत्स्यन्दिता च जनिता स्यन्दिता चापस्यन्दिता ॥ ८ ॥
समोसरितवल्ली च मतल्ली चेति षोडश ।
एताः सौम्य[1]स्थिताश्चार्यः शृणुताकौशिकीः पुनः ॥ ९ ॥
अतिक्रान्ता ह्यपक्रान्ता पार्श्वक्रान्ता तथैव च ।
ऊर्ध्वजानुश्च सूची च तथार्त्त[2]परपादिका ॥ १० ॥
दोलापादा तथा क्षिप्ता आविद्धावृत्तसंज्ञके ।
विद्युत्क्रान्ता ह्यलाका च भुजंगत्रासिता तथा ॥ ११ ॥
मृगप्लुता दण्डपादा भ्रमरी चेति षोडश ।
आकौशिक्यः स्मृता ह्येता लक्षणं च निबोधत ॥ १२ ॥

---

१. 'भौम्य' क-ख. २. 'नूपुरपादिका' इति स्यात्.

पादैर्निरन्तरकृतैस्तथा समनखैरपि ।
समपादा तु सा चारी विज्ञेया स्थानसंश्रया ॥ १३ ॥
भूमिकृष्टेन पादेन कृत्वाभ्यन्तरमण्डले ।
पुनरुत्सारयेदन्यं स्थिता वार्ता तु सा स्मृता ॥ १४ ॥
निषण्णाङ्गस्तु चरणं प्रसार्य तलसंचरम् ।
उद्वाहितमुरः कृत्वा शकटास्यां प्रयोजयेत् ॥ १५ ॥
सव्यस्य पृष्ठतो वामश्चरणस्तु यदा भवेत् ।
तस्यापसर्पणं चैव ज्ञेया साध्यर्चिकाबुधैः ॥ १६ ॥
पादः प्रसारितः सव्यः पुनश्चैवोपसर्पितः ।
वामः सव्यापसर्पी वा चाषगत्यां विधीयते ॥ १७ ॥
एवं वा समपादाया(?) विच्यांवां संप्रयोजयेत् ।
निकुट्टयं नचात्रेण(?) पादस्य धरणीतलम् ॥ १८ ॥
तलसंचरपादाभ्यामुल्लत्य(ङ्घ्य) पातनं तु यत् ।
उपर्यधश्च क्रियते अलकाक्रीडिता तु सा ॥ १९ ॥
अन्योन्यजङ्घासंवेधात्कृत्वारस्वस्तिकं ततः ।
ऊरुभ्यां चलनं यस्मात्सा बद्धा चार्युदीरिता ॥ २० ॥
तलसंचरपादस्य पार्ष्णिवाह्योन्मुखी यदा ।
जङ्घाञ्चिता तथोद्वृत्ता ऊरुद्वृत्तेति सा स्मृता ॥ २१ ॥
अग्रतः पृष्ठतश्चापि पादोऽग्रतलसंचरः ।
द्वितीयपादनिर्घृष्टो यस्यां स्यादड्गिता तु सा ॥ २२ ॥
शनैः पादो निवर्तेत बाह्येनाभ्यन्तरेण च ।
यद्रेचकानुसारेण [सा] चार्युत्स्यन्दिता स्मृता ॥ २३ ॥
पुष्टिहस्तश्च वक्षःस्थः करोत्यश्वप्रकीर्तितः ।
तलसंचरपादश्च जनिता चार्युदाहृता ॥ २४ ॥
पञ्चतालान्तरं पादं प्रसार्य संन्यतां न्यसेत् ।
द्वितीयेन तु पार्श्वेन तथापस्यन्दितामपि ॥ २५ ॥

१. 'सा त्वर्धिका' इति भवेत्.

तलसंचरपादाभ्यां घूर्णमानापसर्पणैः ।
समोसरितवल्ली[1] च व्यायामे समुदाहृता ॥ २६ ॥
एता भौम्यैः स्मृताश्चार्यो निरुद्धकरणाश्रयाः ।
[2]............................................................ ॥ २७ ॥
आकौशिकीनां चारीणां संप्रवक्ष्यामि लक्षणम् ।
कुञ्चितं पादमुत्क्षिप्य पुरतः संप्रसारयेत् ॥ २८ ॥
उत्क्षिप्य पातयेच्चैनमतिक्रान्ता तु सा स्मृता ।
कुञ्चितं पादमुत्क्षिप्य जानुस्तनसमं न्यसेत् ॥ २९ ॥
उद्घाटितेन पादेन पार्श्वक्रान्ता विधीयते ।
कुञ्चितं पादमुत्क्षिप्य जानुस्तनसमं न्यसेत् ॥ ३० ॥
द्वितीयं चक्रमस्तब्ध ऊर्ध्वजानुः प्रकीर्तिता ।
पृष्ठतो ह्यञ्चितं कृत्वा पादमग्रतलेन तु ॥ ३१ ॥
द्रुतं निपातयेद्भूमौ चारी नूपुरपादिका ।
कुञ्चितं पादमुत्क्षिप्य जानुरूर्ध्वं प्रसारयेत् ॥ ३२ ॥
पातयेच्चाग्रयोगेन सा सूची परिकीर्तिता ।
कुञ्चितं पादमुत्क्षिप्य पार्श्वपार्श्वे तु दोलयेत् ॥ ३३ ॥
पाता यदञ्चितं चैव दोलापादा प्रकीर्तिता ।
कुञ्चितं पादमुत्क्षिप्य व्याक्षिप्य त्वञ्चितं न्यसेत् ॥ ३४ ॥
जङ्घा स्वस्तिकसंयुक्ता प्रक्षिप्ता नाम सा स्मृता ।
स्वस्तिकस्याग्रतः पादः कुञ्चितश्च प्रसारितः ॥ ३५ ॥
निपातादञ्चिताविद्ध आविद्धा नाम सा स्मृता ।
पादमाविद्धमावेष्ट्य समुत्पत्य निपातयेत् ॥ ३६ ॥
परिवृत्य द्वितीयं च सा द्रुत्ता चार्युदाहृता ।
पृष्ठतो वलितं पादं शरोद्धृष्टं प्रसारयेत् ॥ ३७ ॥
सर्वतो मण्डलाविद्धं विद्युद्भ्रान्ता[3] तु सा स्मृता ।
पृष्ठतः सर्वतः पादो वलितोऽभ्यन्तरीकृतः ॥ ३८ ॥

---

१. 'मतल्ली' क-ख. २. 'मतल्लीलक्षणात्मकं श्लोकार्धं त्रुटितमिति प्रतिभाति'. ३. 'विद्युत्क्रान्ता' इति स्यात्.

पार्ष्णिप्रपतितश्चैव ह्यलाता[1] संप्रकीर्तिता ।
कुञ्चितं पादमुत्क्षिप्य त्र्यस्त्रमूरुं विवर्तयेत् ॥ ३९ ॥
कटीजानुविवर्ताच्च भुजंगत्रासिता भवेत् ।
अतिक्रान्तं समं कृत्वा चोत्प्लुत्य विनिपातयेत् ॥ ४० ॥
जङ्घाञ्चितोपरिक्षिप्ता सा ज्ञेया हरिणीप्लुता ।
नूपुरं चरणं कृत्वा पुरतः संप्रसारयेत् ॥ ४१ ॥
क्षिप्तमाविद्धकरणं दण्डपाता[2] तु सा स्मृता ।
अतिक्रान्तं समं कृत्वा त्रिकं तु परिवर्तयेत् ॥ ४२ ॥
द्वितीयपादभ्रमणाच्चलने भ्रमरी स्मृता ।
आकाशिक्यः स्मृता ह्येता ललिताङ्गक्रियात्मिकाः ॥ ४३ ॥
धनुर्वज्रासिशस्त्राणां योक्तव्या शस्त्रमोक्षणे ।
अग्रगौ पृष्ठगौ वापि ह्यनुगौ वापि योगतः ॥ ४४ ॥
पादयोस्तु द्विजा हस्तौ कर्तव्यौ नाट्ययोक्तृभिः ।
यतः पादस्ततो हस्तो यतो हस्तस्ततस्त्रिकम् ॥ ४५ ॥
पादस्य निर्गतिं कृत्वा तथोपाङ्गानि योजयेत् ।
पादाचार्यो यथा पादो धरणीमेव गच्छति ॥ ४६ ॥
एवं हस्तश्चरित्वा तु कटीदेशं समाश्रयेत् ।
एताश्चार्यो मया प्रोक्ता ललिताङ्गक्रियात्मिकाः ॥ ४७ ॥
स्थानान्यासां प्रवक्ष्यामि सर्वशस्त्रविमोक्षणे ।
वैष्णवं समपादं च वैशाषा(खा)खण्डलं तथा ॥ ४८ ॥
प्रत्यालीढं तथालीढं स्थानान्येतानि षण्नृणाम् ।
द्वौ तालावर्धतालश्च पादयोरन्तरं भवेत् ॥ ४९ ॥
तयोः समुत्थितस्त्वेकस्त्र्यस्त्रः पक्षस्थितोऽपरः ।
किंचिदञ्चितजङ्घं च सौष्ठवाङ्गपुरस्कृतम् ॥ ५० ॥
वैष्णवस्थानमेतद्धि विष्णुरेवाधिदैवतम् ।
स्थानेनानेन कर्तव्यः संलापस्तु स्वभावजः ॥ ५१ ॥

---

१. 'अलाका' इति स्यात्. २. 'दण्डपादा' इति स्यात्.

नानाकार्यान्तरोपेतैर्नृभिरुत्तममध्यमे ।

अन्येऽपि, चक्रस्य मोक्षणे चैव धारणा धनुषि स्थिते ॥ ५२ ॥

धैर्योदात्ताङ्गलीलासु तथोद्वाह्य प्रयोजयेत् ।

इदमेव विपर्यस्तं प्रणयं कोप इच्छति ॥ ५३ ॥

उपालम्भकृते चैव हर्षयो(?)द्वेगयोस्तथा ।

शङ्का तथोग्रता चिन्तामतिस्मृतिषु चैव हि ॥ ५४ ॥

दैन्ये चपलतायां च मन्त्राधिक्येषु शक्तिषु ।

शृङ्गाराद्भुतबीभत्सवीरप्राधान्ययोजितम् ॥ ५५ ॥

समस्तत्र समौ पादौ तालमात्रान्तरस्थितौ ।

स्वभावसौष्ठवोपेतौ ब्रह्मा चात्राधिदैवतम् ॥ ५६ ॥

अनेन कार्यं स्थानेन विप्रमङ्गलधारणम् ।

रूपणं पक्षिणां चैव वरं कौतुकमेव च ॥ ५७ ॥

स्वस्थानां स्यन्दनस्थानां विमानस्थायिनामपि ।

लिङ्गस्थानां प्रतस्थानां स्थानमेतत्तु कारयेत् ॥ ५८ ॥

त्र्यस्रौ पक्षस्थितौ चैव तत्र पादैः प्रयोजयेत् ।

वैशाखस्थानमेतद्धि स्कन्दश्चात्राधिदैवतम् ॥ ५९ ॥

स्थानेनानेन कर्तव्यमश्वतां(?)वाहनं बुधैः ।

व्यायामो निर्गमश्चैव स्थूलपक्षनिरूपणम् ॥ ६० ॥

केचिदन्येऽपि, शरासनसमुत्कर्षे व्यायामकृत एव च ।

रेचकेषु च कर्तव्यमिदमेव प्रयोक्तृभिः ॥ ६१ ॥

ऐन्द्रे तु मण्डले पादौ चतुस्तालान्तरस्थितौ ।

त्र्यस्रौ पक्षकृतौ चैव कटीजानुसमा तथा ॥ ६२ ॥

धनुर्वज्राणि शस्त्राणि मण्डलेन प्रयोजयेत् ।

वहनं कुञ्जरादीनां स्थूलपक्षिनिरूपणम् ॥ ६३ ॥

अस्यैव दक्षिणं पादं पञ्चतालान्प्रसार्य तु ।

आलीढं स्थानकं कुर्याद्रुद्रश्चात्राधिदैवतम् ॥ ६४ ॥

अनेन कार्यं स्थानेन वीररौद्रकृतं तु यत् ।
उत्तरोत्तरसंजल्पारोषामर्षकृतश्च यः ॥ ६५ ॥
मल्लानां चैव संस्फोटः शत्रूणां च निरूपणम् ।
तथाभिद्रवणं चैव शस्त्राणां चैव मोक्षणम् ॥ ६६ ॥
कुञ्चितं दक्षिणं कृत्वा वामपादं प्रसार्य च ।
आलीढपरिवर्तस्तु प्रत्यालीढमिति स्मृतम् ॥ ६७ ॥
आलीढसंहितं शस्त्रं प्रत्यालीढेन मोक्षयेत् ।
नानाशस्त्रविमोक्षो हि कार्योऽनेन प्रयोक्तृभिः ॥ ६८ ॥
न्यायाश्चैव प्रयोक्तव्याश्चत्वारः शस्त्रमोक्षणे ।
भरतः सात्वतश्चैव वर्षगण्योऽथ कैशिकः ॥ ६९ ॥
भारती[1] च कटिश्छेद्ये पादाश्छेद्यं तु सात्वते ।
वक्षसौ वर्षगणैस्तु शिरश्छेद्यं तु कैशिके ॥ ७० ॥
एभिः प्रयोक्तृभिर्न्यायैर्नानाचारीमुपस्थितैः ।
प्रविचाराः प्रयोक्तव्या नानाशस्त्रविमोक्षणे ॥ ७१ ॥
न्यायाश्रितैरङ्गहारैर्न्यायाच्चैव समुत्थितैः ।
यस्माद्युद्धान्निवर्तन्ते तस्मान्न्यायाः प्रवर्तिताः ॥ ७२ ॥
वामहस्ते विनिक्षिप्य[2]ोक्षटाकं दक्षिणेन च ।
शस्त्रमादाय हस्तेन प्रविचारमथारभेत् ॥ ७३ ॥
प्रसार्य च करौ सम्यक्पुनरावर्त्य चैव हि ।
खेटकं भ्रामयेत्पश्चा[......]त्पार्श्वमथापि च ॥ ७४ ॥
शिरःपरिगमश्चापि कार्यः शस्त्रेण योक्तृभिः ।
कपोलांसान्तरे वापि शस्त्रस्योद्धट्टनं तथा ॥ ७५ ॥
पुनश्च खड्गहस्तेन ललितोद्वर्तितेन च ।
खेटकेन च कर्तव्यः शिरःपरिगमो बुधैः ॥ ७६ ॥

---

१. 'भारते च कटिच्छेद्यं पादच्छेद्यं तु सात्वते । वक्षश्छेद्यं वर्षगण्ये' इति स्यात्.
२. 'अक्षरकं' ख.

एवं विचारः कर्तव्यो भारते शस्त्रमोक्षणे ।
सात्वते च प्रवक्ष्यामि प्रविचारं यथाविधि ॥ ७७ ॥
स एवं प्रविचारस्तु खङ्गखेटकयोः स्मृतः ।
केवलं पृष्ठतः शस्त्रं कर्तव्यं खलु सात्वते ॥ ७८ ॥
गतिश्च वार्षगण्येऽपि सात्वतेन क्रमेण तु ।
खङ्गखेटकयोश्चापि भ्रमणं संविधीयते ॥ ७९ ॥
शिरःपरिगमादस्मिंस्तत्र शस्त्रं च केवलम् ।
उरस्युद्वेष्टनं कार्यं शस्त्रस्यांशेऽथवा पुनः ॥ ८० ॥
भारते प्रविचारो यः कर्तव्यः स तु कैशिकैः[1] ।
विभ्रमश्च तथा शस्त्रं केवलं मूर्ध्नि पातयेत् ॥ ८१ ॥
प्रविचाराः प्रयोक्तव्या ह्येवमेतेऽङ्गलीलया ।
धेनुर्वज्रासिशस्त्राणां प्रयोक्तव्या विमोक्षणे ॥ ८२ ॥
न भेद्यं नापि च च्छेद्यं न चापि रुधिरस्रुतिः ।
रङ्गे प्रहरणं कार्यं न चापि व्यक्तघातनम् ॥ ८३ ॥
राज्ञा मात्रेण[2] कर्तव्यं शस्त्राणां मोक्षणं बुधैः ।
अथवाभिनयोपेतं कुर्याच्छेद्यं विधानतः ॥ ८४ ॥
अङ्गसौष्ठवसंपन्नैरङ्गहारैर्विभूषितम् ।
व्यायामं कारयेत्सम्यग्लयावा(?)लत्समन्वितम् ॥ ८५ ॥
सौष्ठवे हि प्रयत्नस्तु कार्यो व्यायामवेदिभिः ।
सौष्ठवं लक्षणं प्रोक्तवर्त्मना क्रमयोजितम् ॥ ८६ ॥
शोभा सर्वविनित्यं (?) हि सौष्ठवं समुपाश्रिता ।
नहि सौष्ठवहीनाङ्गः शोभते नाट्यनृत्तयोः ॥ ८७ ॥
अचञ्चलमकुब्जं च सन्नगात्रं तथैव च ।
नात्युभ्रबलपादं[3] च सौष्ठवाङ्गं प्रयोजयेत् ॥ ८८ ॥

१. 'कैशिके' इत्युचितम्. २. 'राज्ञा मात्रेण' इत ऊर्ध्वमा दशमाध्यायपरिसमाप्तेर्ग्रन्थः क-पुस्तके त्रुटितः. ३. 'नात्युग्रचलपादं' इति स्यात्.

कटी कर्णसमा यत्र कूर्परोंऽसशिरस्तथा ।
समुन्नतमुरश्चैव सौष्ठवं नाम तद्भवेत् ॥ ८९ ॥
अत्र नित्यं प्रपन्नो हि विधये मध्यमोत्तमैः ।
नाट्यं नृत्तं च सर्वं हि सौष्ठवे संप्रतिष्ठितम् ॥ ९० ॥
कटीनाभिवरौ हस्तौ वक्षश्चैव समुन्नतम् ।
वैष्णवं स्थानमित्यङ्गचतुरस्रमुदाहृतम् ॥ ९१ ॥
परिमार्जनमादानं संधानं मोक्षणं तथा ।
धनुषस्तु प्रयोक्तव्यं करणं तु चतुर्विधम् ॥ ९२ ॥
तैलाभ्यक्तेन गात्रेण यवागूमृदितेन च ।
व्यायामं कारयेद्धीमान्भित्तावाकाशके तथा ॥ ९३ ॥
योग्यायां मातृकाभीतिस्तस्माद्भीतिं समाश्रयेत् ।
भित्सो(त्तौ) प्रसारितायां तु व्यायामं कारयेन्नरम् ॥ ९४ ॥
बलार्थं च निषेवेत नस्यं वस्तिविधिं तथा ।
स्निग्धान्यशनिताथा····रसकं पानकानि च ॥ ९५ ॥
आहाराधिष्ठिताः प्राणाः प्राणयोग्याः प्रतिष्ठिताः ।
तस्माद्योग्याप्रसिध्द्यर्थमाहारे यत्नवान्भवेत् ॥ ९६ ॥
अशुद्धकायं प्रक्लान्तमधीरं क्षुत्पिपासितम् ।
अतिपीतं तथा भुक्तं व्यायामं नैव कारयेत् ॥ ९७ ॥
अचलैर्मधुरैर्गात्रैश्चतुरस्रेण वक्षसा ।
व्यायामं कारयेद्धीमान्नरमङ्गक्रियार्थिनम् ॥ ९८ ॥
एवं व्यायामसंयोगे कार्यश्चारीकृतो विधिः ।
अत ऊर्ध्वं प्रवक्ष्यामि मण्डलानां विकल्पनम् ॥ ९९ ॥

इति श्रीभारतीये नाट्यशास्त्रे चारीविधानो नाम दशमोऽध्यायः ।

---

१. 'प्रयत्नो हि विधेयः' इत्युचितम्. २. 'स्निग्धानशनजातांश्च' इत्युचितम्. ३. 'प्राणे भोग्याः' इति स्यात्. ४. 'भोग्यप्रसिद्ध्यर्थं' इति स्यात्.

एकादशोऽध्यायः ।

एताश्चार्यो मया प्रोक्ता यथावच्छस्त्रमोक्षणे ।
चारीसंयोगजानीह मण्डलानि निबोधत ॥ १ ॥
अतिक्रान्तं विचित्रं च तथा ललितसंवरम् ।
सूचीविद्धं तथा दण्डं परिवृत्तालातके[1] तथा ॥ २ ॥
वामविद्धं सललितं क्रान्तं वाकाशका(गा)मि तु ।
भ्रमरास्कन्दिते[2]..............ततः परम् ॥ ३ ॥
[3]समोसरितमप्याहुरेलकाक्रीडितं तथा ।
अण्डितं च शकास्यं च तथाध्यर्धमिति स्मृतम् ॥ ४ ॥
पिष्टकुट्टं च विज्ञेयं तथा चाषगतं पुनः ।
आद्यं पादं च जनितं कृत्वोद्वाहितमाचरेत् ॥ ५ ॥
अलातं वामकं चैव पार्श्वक्रान्तं च दक्षिणम् ।
विज्ञेयमेतद्यायामेष्वतिक्रान्तं तु मण्डलम् ॥ ६ ॥
सूचीद्गमपदं दद्यादपक्रान्तं च दक्षिणम् ।
आद्यं तु जनितं कृत्वा तेनैव च निकुट्टनम् ॥ ७ ॥
आस्यन्दितं तु वामेन पार्श्वक्रान्तं च दक्षिणम् ।
भुजंगत्रासितं सव्यमतिक्रान्तं च दक्षिणम् ॥ ८ ॥
उद्वृत्तं दक्षिणं चैव ह्यलान्तं चैव वामकम् ।
पार्श्वक्रान्तं पुनः सव्यं सूचीवामक्रमं तथा ॥ ९ ॥
विक्षेपो दक्षिणश्च स्यादपक्रान्तश्च वामकः ।
विज्ञेयमेतद्यायामे विचित्रं नाम मण्डलम् ॥ १० ॥
कृत्वोर्ध्ववामचरणमाद्यं सूचीं प्रयोजयेत् ।
अपक्रान्तः पुनर्वाम आद्यपार्श्वगतो भवेत् ॥ ११ ॥
वामं सूचीं पुनः कृत्वा त्रिकं च परिवर्तयेत् ।
पार्श्वक्रान्तं पुनश्चाद्यमतिक्रान्तं च वामकम् ॥ १२ ॥

---

१. 'विवृत्त' क. २. त्रुटिलक्ष्म पुस्तकद्वितयेऽपि न दृश्यते. ३. क-पुस्तके 'समोत्सरितं' इति केनचिच्छोधितः पाठ उपलभ्यते.

सूचीवामक्रमं कृत्वा ह्यपक्रान्तं च वामकम् ।
पार्श्वक्रान्तं पुनश्चाद्यं सूचीविद्धे तु मण्डले ॥ १३ ॥
आद्यस्तु तद्गतो भूत्वा स च दण्डक्रमो भवेत् ।
वामं सूचीं पुनर्दद्यात्त्रिकं च परिवर्तयेत् ॥ १४ ॥
उद्वृत्तो दक्षिणश्च स्यादलातश्चैव वामकः ।
पार्श्वक्रान्तः पुनश्चाद्यो भुजंगत्रासितस्तथा ॥ १५ ॥
अतिक्रान्तः पुनर्वामो दण्डपादश्च दक्षिणः ।
वामः सूची त्रिकावर्ता दण्डपादे च मण्डले ॥ १६ ॥
आद्यं तु जनितं कृत्वा तेनैव च निकुट्टनम् ।
आस्कन्दितं च वामेन ह्युत्तम्भं दक्षिणेन च ॥ १७ ॥
अलातं वामकं पादं सूचीं दद्यात्तु दक्षिणाम् ।
पार्श्वक्रान्तं पुनर्वाम आक्षिप्तो दक्षिणस्तथा ॥ १८ ॥
समावर्त्य त्रिकं चैव दण्डपादं प्रसारयेत् ।
सूचीं वामपदं दद्यात्त्रिकं तु परिवर्तयेत् ॥ १९ ॥
भुजंगत्रासितश्चाद्यो वामोऽतिक्रान्त एव च ।
एष चारीप्रयोगस्तु विवृते मण्डले भवेत् ॥ २० ॥
सूचीमाद्यं क्रमं दद्यादपक्रान्तं च वामकम् ।
पार्श्वक्रान्तं पुनश्चाद्यो ह्यलातश्चैव वामकः ॥ २१ ॥
भ्रान्त्वा चारीभिरेताभिः पर्यायेणाथ मण्डलम् ।
तत्संख्यं सप्तसंख्यं वा ललितैः पादविक्रमैः ॥ २२ ॥
अतिक्रान्तः पुनश्चाद्यो वामोऽतिक्रान्त एव च ।
पादभ्रमकरश्च स्यादलाते खलु मण्डले ॥ २३ ॥
सूचीमाद्यक्रमं कृत्वा ह्यपक्रान्तं च वामकम् ।
आद्यो दण्डक्रमश्चैव सूचीकार्यस्तु वामकः ॥ २४ ॥
ऊरूद्वृत्तं च तेनैव कर्तव्यं दक्षिणेन तु ।
सूचीवामक्रमश्चैव त्रिकं तु परिवर्तयेत् ॥ २५ ॥

अलातश्च भवेद्वामः पार्श्वक्रान्तश्च दक्षिणः ।
अतिक्रान्तः पुनर्वामः कार्यो ललितसंचरः ॥ २६ ॥
एष पादप्रचारस्तु ललिते मण्डले भवेत् ।
सूचीमाद्यक्रमं कृत्वा ह्यपक्रान्तं च वामकम् ॥ २७ ॥
पार्श्वक्रान्तं पुनश्चाद्यं वामं पार्श्वक्रमं तथा ।
भ्रान्त्वा चारीभिरेताभिः पर्यायेणाथ मण्डलम् ॥ २८ ॥
वामं सूचीं ततो दद्यादपक्रान्तं च दक्षिणम् ।
स्वभावगमने ह्येतन्मण्डलं संविधीयते ॥ २९ ॥
क्रान्तमेतत्तु विज्ञेयं नामतो नाट्ययोक्तृभिः ।
एतान्याकाशगामीनि ज्ञेयान्येवं दशैव तु ॥ ३० ॥
अतः परं प्रवक्ष्यामि भौमानामपि लक्षणम् ।
आद्यस्तु जनितः कार्यो वामश्चास्कन्दितो भवेत् ॥ ३१ ॥
शकटास्यः पुनश्चाद्यो वामश्चापि प्रसारितः ।
आद्यो भ्रमरकः कार्यस्त्रिकं तु परिवर्तयेत् ॥ ३२ ॥
आक्रन्दितः पुनर्वामः शकटास्यश्च दक्षिणे ।
वामः पृष्ठावसर्पी च दद्याद्भ्रमरकं तथा ॥ ३३ ॥
स एवास्कन्दितः कार्य एतद्भ्रमरमण्डलम् ।
[1]..................आद्यो भ्रमरमण्डलम् ॥ ३४ ॥
आद्यो भ्रमरकः कार्यो वामश्चैवाञ्चितो भवेत् ।
कार्यस्त्रिकविवर्तश्च शकटास्यश्च दक्षिणः ॥ ३५ ॥
ऊरूद्वृत्तः स एव स्याद्वामश्चैवापसर्पितः ।
कार्यस्त्रिकविवर्तश्च दक्षिणः स्कन्दितो भवेत् ॥ ३६ ॥
शकटास्यो भवेद्वामस्तथैवास्फोटनं भवेत् ।
एतदास्कन्दितं नाम व्यायामे युद्धमण्डले ॥ ३७ ॥
आद्यं तु जनितं कृत्वा वामेन तु निकुट्टनम् ।
शकटास्यः पुनश्चाद्य ऊरूद्वृत्तः स एव तु ॥ ३८ ॥

---

१. पुस्तकद्वयेऽपि त्रुटिचिह्नं न वर्तते.

पृष्ठावसर्पी वामश्च स च चाषगतिर्भवेत् ।
आस्कन्दितः पुनः सद्यः शकटास्यश्च वामकः ॥ ३९ ॥
आद्यो भ्रमरकश्चैव त्रिकं तु परिवर्तयेत् ।
पृष्ठावसर्पी वामश्चेत्यावर्ते मण्डले भवेत् ॥ ४० ॥
समपादं बुधः कृत्वा न च हस्तौ प्रसारयेत् ।
निरन्तराद्वा····गतावावेष्टोद्वेष्ट्य चैव हि ॥ ४१ ॥
कटीतटे विनिक्षिप्य आद्यमावर्तयेत्क्रमम् ।
यथाक्रमं पुनर्वाममावर्तेन प्रसारयेत् ॥ ४२ ॥
अनया····चेया भ्रान्त्वा पर्यायेणाथ मण्डलम् ।
समोसरितमेतच्च ज्ञेयं व्यायाममण्डलम् ॥ ४३ ॥
पादैस्तु भूमिसंयुक्तैः सूचीविद्धैस्तथैव च ।
एलका क्रीडितैश्चैव तूर्णैस्त्रिकविवर्तनम् ॥ ४४ ॥
सूचीविद्धापविद्धैश्च क्रमेणावृत्य मण्डलम् ।
एलकाक्रीडितं विद्यात्········खण्डलसंज्ञितम् ॥ ४५ ॥
सव्यमुद्धटितं कृत्वा तेनैवावृत्तमाचरेत् ।
तेनैवास्कन्दितः कार्यः शकटास्यश्च वामकः ॥ ४६ ॥
आद्यपृष्ठापसर्पी च स च वामे गतिर्भवेत् ।
अञ्चितश्च पुनर्वाम आद्यश्चैवापसर्पितः ॥ ४७ ॥
वामो भ्रमरकः कार्य आद्यश्चास्कन्दितो भवेत् ।
तेनैवास्फोटनं कुर्यादेतदञ्चितमण्डलम् ॥ ४८ ॥
आद्यं तु जनितं कृत्वा तेनैव च निकुट्टनम् ।
स एव शकटास्यश्च वामश्चास्कन्दितो भवेत् ॥ ४९ ॥
पादैश्च शकटास्यस्थैः पर्यायेणाथ मण्डलम् ।
विज्ञेयं शकटास्यं तु व्यायामे युद्धमण्डलम् ॥ ५० ॥
आद्यस्तु जनितो भूत्वा स एवास्कन्दितो भवेत् ।
अपसर्पी पुनर्वामः शकटास्यश्च दक्षिणः ॥ ५१ ॥

भ्रान्त्वा चारीभिरेताभिः पर्यायेणाथ मण्डलम् ।
अध्यर्धमेतद्विज्ञेयं नियुद्धे चापि मण्डलम् ॥ ९२ ॥
सूचीमाद्यक्रमं कृत्वा ह्यपक्रान्तं च वामकम् ।
भुजंगत्रासितश्चाद्य एवमेव च वामकः ॥ ९३ ॥
भुजंगत्रासितैर्भ्रान्त्वा पादैरपि च मण्डलम् ।
पिष्टकुट्टं च विज्ञेयं चारीभिर्मण्डलं बुधैः ॥ ९४ ॥
सर्वैश्चाषगतैः पादैः परिक्रम्य च मण्डलम् ।
एतच्चाषगतं विद्यान्नियुद्धं चापि मण्डलम् ॥ ९५ ॥
नानाचारीसमुत्थानि मण्डलानि समासतः ।
उक्तान्यतः परं चैव समचारीं नियोजयेत् ॥ ९६ ॥
समचारीप्रयोगो यस्तमनाम····मण्डलम् ।
आचार्य बुद्ध्या तानीह कर्तव्यानि प्रयोक्तृभिः ॥ ९७ ॥
एतानि खण्डानि समण्डलानि युद्धे नियुद्धे परिचङ्क्रमे च ।
लीलाङ्गमाधुर्यपुरस्कृतानि कार्याणि वाद्यानुगतानि तज्ज्ञैः ॥ ९८ ॥

इति श्रीभारतीये नाट्यशास्त्रे मण्डलकल्पनं नामैकादशोऽध्यायः ।

---

## द्वादशोऽध्यायः ।

अतः परं प्रवक्ष्यामि गतीस्तु प्रकृतिस्थिताः ।
तत्रोपवाहनं कृत्वा भाण्डवाद्यपुरस्कृतम् ॥ १ ॥
यथामार्गरसोपेतं प्रकृतीनां प्रवेशने ।
ध्रुवायां संवृत्तायां पटे चैवापकर्षिता ॥ २ ॥
कार्यः प्रवेशः पात्राणां नानार्थरससंभवः ।
स्थानं तु वैष्णवं कृत्वा ह्युत्तमे मध्यमे तथा ॥ ३ ॥
समुन्नतं समं चैव चतुरस्रपुरस्तथा ।
बाहुशीर्षे प्रसन्ने च नात्युत्क्षिप्ते च कारयेत् ॥ ४ ॥
ग्रीवाप्रवेशः कर्तव्यो मयूराङ्कितमस्तकः ।
कर्णाद्दष्टाङ्गुलस्थे च बाहुशीर्षे प्रयोजयेत् ॥ ५ ॥

उरसश्चापि चिबुकं चतुरङ्गुलसंस्थितम् ।
हस्तौ तथैव कर्तव्यौ कटिनाभितटस्थितौ ॥ ६ ॥
दक्षिणो नाभिसंस्थस्तु वामः कटितटे स्थितः ।
पादयोरन्तरं कार्यं द्वौ तालावर्धमेव च ॥ ७ ॥
पादक्षेपस्तु कर्तव्यः स्वप्रमाणविनिर्मितः ।
चतुस्तालो द्वितालश्चाप्येकतालस्तथैव च ॥ ८ ॥
चतुस्तालस्तु देवानां पार्थिवानां तथैव च ।
[1]द्विता[ल]श्चैव मध्यानां [तालः स्त्रीनीचलिङ्गिनाम्] ॥ ९ ॥
चतुष्कलो ह्युत्तमानां मध्यानां द्विकलो भवेत् ।
तथा चैव(क)कलः पातो नीचानां संप्रकीर्तितः ॥ १० ॥
स्थितं मध्यं द्रुतं चैव समवेक्ष्य लयं बुधः ।
यथाप्रकृतिनाट्यज्ञो गतिमेवं प्रयोजयेत् ॥ ११ ॥
धैर्योपपन्ना गतिरुत्तमानां मध्या गतिर्मध्यमसंमतानाम् ।
द्रुता गतिश्च प्रचुराधमानां लयत्रयं सत्त्ववशेन योज्यम् ॥ १२ ॥
एष एव भुवि ज्ञेयः कलातालल्ये विधिः ।
पुनर्गतिप्रचारस्य प्रयोगं शृणुतानघाः ॥ १३ ॥
स्वभावे तूत्तमगतौ कार्यं जानुकटीसमम् ।
युद्धचारीप्रयोगेषु पुनः स्तनसमं भवेत् ॥ १४ ॥
पार्श्वक्रान्तैः सललितैः पादैर्वाद्यान्वितैरथ ।
रङ्गकोणोन्मुखं गच्छेत्सम्यक्पञ्च पदानि तु ॥ १५ ॥
वामवेधं ततः कुर्याद्विक्षेपं दक्षिणेन च ।
परिवृत्य द्वितीयं तु गच्छेत्कोणं ततः परम् ॥ १६ ॥
तत्रापि वामवेधस्तु विक्षेपो वृक्षितेन च ।
ततो भाण्डोन्मुखो गच्छेत्तान्येह विपदानि च ॥ १७ ॥
एवं गतागतैर्गत्वा पदानामेकविंशतिम् ।
वामवेधं ततः कुर्याद्विक्षेपं [2]दक्षिणस्य च ॥ १८ ॥

---

१. 'द्वितानेध्यैश्चैव मध्यानां तालस्त्री च लिङ्गानाम्' क-ख. २. 'दक्षिणेन' ख.

रङ्गे विकृष्टे भरतेन कार्यो गतागतैः पादगतिप्रचारः ।
त्र्यस्रत्रिकोणे चतुरस्ररङ्गे गतिप्रचारश्चतुरस्र एव ॥ १९ ॥
यः समैः सहितो गच्छेत्तत्र कार्यो लयाश्रयः ।
चतुष्कलोऽथ द्विकलस्तथैवैककलः पुनः ॥ २० ॥
अथ मध्यमनीचैस्तु गच्छेद्यः परिवारितः ।
चतुष्कलमथार्धं च तथा चैककलं पुनः ॥ २१ ॥
दैत्यदानवयक्षाणां नृपपन्नगरक्षसाम् ।
चतुस्तालप्रमाणेन कर्तव्याथ गतिर्बुधैः ॥ २२ ॥
दिवौकसां तु सर्वेषां मध्यमा गतिरिष्यते ।
तत्रापि योद्धता ये तु तेषां देवैः समा गतिः ॥ २३ ॥

ऋषय ऊचुः—

यदा मनुष्या राजानस्तेषां देवगतिः कथम् ।
अत्रोच्यते कथं नैषा गती राज्ञां भविष्यति ॥ २४ ॥
अथ दिव्याः प्रकृतयो मानुषी या प्रकीर्तिता ।
देवान्वाजा(न्वया)स्तु राजानो वेदाध्यात्मास्तु कीर्तिताः ॥२५॥
एवं देवानुकरणो देवो ह्यत्र न विद्यते ।
अयं विधिस्तु कर्तव्यः स्वयंदैगमनं प्रति ॥ २६ ॥
संभ्रमोत्पातरोषेषु प्रमाणं न विधीयते ।
चतुरर्धकलं [च] स्यात्तदर्धकलमेव च ॥ २७ ॥
अवस्थान्तरमासाद्य कुर्याद्गतिविचेष्टितम् ।
ज्वरार्ते च क्षुधार्ते च तपःश्रान्ते भयान्विते ॥ २८ ॥
विस्मये चावहित्थे च तथौत्सुक्यसमन्विते ।
शृङ्गारे चैव शोके च स्वच्छन्दगमने तथा ॥ २९ ॥
गतिः स्थितलया कार्या विफलातन्रपातिना ।
अस्वःस्थे कामिते चैव भये वित्रासिते तथा ॥ ३० ॥

---

१. 'सर्वेषां' इत ऊर्ध्वं 'देवगतिः' इतः प्राक् ख-पुस्तके पाठस्त्रुटितः. २ 'भूभृतः' इति स्यात्. ३. 'मन्दगम' इति स्यात्.

आवेगे चैव हर्षे च कार्यं यच्छ(?)त्वरान्वितम् ।
अनिष्टश्रवणे चैव क्षेपे चाद्भुतदर्शने ॥ ३१ ॥
अपि चात्ययिके कार्ये तथा चैवारिमार्गणे ।
अमराद्यानुसरणे श्वापदानुगते तथा ॥ ३२ ॥
एतेष्वेव गतिं प्राज्ञो विकलां संप्रयोजयेत् ।
गतिः शृङ्गारिणी कार्या स्वच्छकामितसंभवा ॥ ३३ ॥
दूतीदर्शनमार्गस्तु प्रविशेद्रङ्गमण्डलम् ।
सूचयन्वाभिनयनं कुर्यादर्थसमाश्रयम् ॥ ३४ ॥
हृद्यैर्वस्त्रैस्तथा गन्धैर्धूपैश्चूर्णैश्च भूषितः ।
नानापुष्पसुगन्धाभिर्मालाभिः समलंकृतः ॥ ३५ ॥
गच्छेत्सललितैः पादैरतिक्रान्तैः स्थितैस्तथा ।
तथा सौष्ठवसंयुक्तैर्लयतालवशानुगैः ॥ ३६ ॥
पादयोरनुगौ वापि हस्तौ कार्यौ प्रयोक्तृभिः ।
प्रच्छन्नकामिते चैव गतिं भूयो निबोधत ॥ ३७ ॥
विसर्जितजनः स्रस्तस्तथा दूतीसहायवान् ।
निर्वाणदीपो नात्यर्थं भूषणैश्च विभूषितः ॥ ३८ ॥
वेलासदृशवस्त्रश्च सह दूत्या शनैस्तथा ।
व्रजेत्प्रच्छन्नकामस्तु पादैर्निःशब्दमन्दगैः ॥ ३९ ॥
शब्द····साक्ष्युत्सुकः स्यादवलोकनतत्परः ।
वेपमानशरीरश्च शङ्कितः प्रस्खलन्मुहुः ॥ ४० ॥
रसे रौद्रे तु वक्ष्यामि दैत्यरक्षोगणा[न्] प्रति ।
एक एव रसस्तेषां स्थायी रौद्रो द्विजोत्तमाः ॥ ४१ ॥
नेपथ्यरौद्रो विज्ञेयस्त्वङ्गरौद्रस्तथैव च ।
तथा स्वभावजश्चैव त्रिधा रौद्रः प्रकल्पितः ॥ ४२ ॥
रुधिरक्लिन्नदेहो यो रुधिरार्द्रमुखस्तथा ।
तथापि सहितस्तच्च रौद्रो नेपथ्यजस्तु सः ॥ ४३ ॥

बहुबाहुर्बहुमुखो नानाप्रहरणाकुलः ।
स्थूलकायस्तथा प्रांशुरङ्गरौद्रः प्रकीर्तितः ॥ ४४ ॥
रक्ताक्ष[ः] पिङ्गकेशश्च असितो विकृतस्वरः ।
रूक्षो निर्भत्सनपरो रौद्रे सोऽप्यस्वभावजः ॥ ४५ ॥
चतुस्तालान्तरोत्क्षिप्तैः पादैस्त्वन्तरपातितैः ।
गतिरेवं प्रकर्तव्या तेषां ये चापि तद्विधाः ॥ ४६ ॥
आद्या तु मही यत्र श्मशानरणकश्मला ।
अत्र किंचित्प्रयुञ्जीत बीभत्साभिनयं प्रति ॥ ४७ ॥
क्वचिदासन्नपतितैर्विकृष्टपतितैः क्वचित् ।
एलका················उपर्युपरि पातितैः ॥ ४८ ॥
तेषामेवानुगैर्हस्तैर्बीभत्सगतिरुच्यते ।
················तथा विक्षेपसंयुक्ता ॥ ४९ ॥
द्रुतप्रचाराधिष्ठाना नानाचारीसमाकुला ।
पार्श्वक्रान्तैर्द्रुताविद्धैः सूचीविद्धैस्तथैव च ॥ ५० ॥
कालाकालगतैः पादैरावेगे योजयेद्गतिम् ।
उत्तमानामयं प्रायः प्रोक्तो गतिपरिक्रमः ॥ ५१ ॥
आसाद्य तु परं हास्यमेतच्चान्यच्च योजयेत् ।
पुनश्च करणे कार्या गतिः स्थिरपदैरथ ॥ ५२ ॥
बाष्पाम्बुरुद्धनयनः सन्नगात्रस्तथैव च ।
उत्क्षिप्तपातितकरस्तथा सस्वनरोदनः ॥ ५३ ॥
गच्छेत्तया····धिकया प्रत्यग्रहणसंश्रये ।
एषा स्त्रीणां प्रयोक्तव्या····नीचसस्तथैव च ॥ ५४ ॥
उत्तमानां तु कर्तव्या सधैर्या बाष्पसंगता ।
निःश्वासैरायतोत्सृष्टैस्तथैवोर्ध्वनिरीक्षितैः ॥ ५५ ॥
····नता सौष्ठवं कार्यं न प्रमाणं तथाविधम् ।
मध्यानामपि तत्त्वज्ञा गति····विधानतः ॥ ५६ ॥

उरःपातहतोत्साहः शोकव्यामूढचेतनः ।
नात्युत्क्षिप्तैः पदैर्गच्छेदिष्टबन्धुनिपातने ॥ ९७ ॥
गाढप्रहारे कार्या च शिथिलाङ्गभुजाश्रया ।
विघूर्णितशरीरा च गतिस्तूर्णपदैरथ ॥ ९८ ॥
शीतेन चाभिभूतस्य वर्षेणाभिद्रुतस्य च ।
गतिः प्रयोक्तृभिः कार्या स्त्रीनीचप्रकृतावथ ॥ ९९ ॥
पिण्डीकृत्य तु गात्राणि तेषां चैव प्रकम्पनम् ।
करौ वक्षसि निक्षिप्य कुब्जीभूतस्तथैव च ॥ ६० ॥
दन्तो[ष्ठ]स्फुरणं चैव चिबुकस्य प्रकम्पनम् ।
कार्यं शनैश्च कर्तव्यं शीताभिनयने गतौ ॥ ६१ ॥
तथा भयानके चैव गतिः कार्या विचक्षणैः ।
स्त्रीणां कापुरुषाणां च ये चान्ये सत्त्ववर्जिताः ॥ ६२ ॥
विस्फारिते चले नेत्रे विधुतं च शिरस्तथा ।
भयसंयुक्तया दृष्ट्या पार्श्वयोश्च विलोकितैः ॥ ६३ ॥
द्रुतैः पूर्णपदैश्चैव बद्ध्वा हस्तं कपोतकम् ।
प्रवेपितशरीरश्च शुष्कोष्ठस्खलितं व्रजेत् ॥ ६४ ॥
एषानुसरणे कार्या तर्जने त्रासने तथा ।
सत्त्वं च विकृतं दृष्ट्वा श्रुत्वा च विकृतं रवम् ॥ ६५ ॥
एषां स्त्रीणां प्रयोक्तव्या नृणामाक्षिप्तविक्रमाः ।
क्वचिदासन्नपतितैर्विकृष्टपतितैः क्वचित् ॥ ६६ ॥
एलकाक्रीडितैः पादैरुपर्युपरि पातितैः ।
एषामेवानुगैर्हस्तैर्गतिं भीतेषु योजयेत् ॥ ६७ ॥
वणिजां ससचिवानां च गतिः कार्या स्वभावजा ।
अतिक्रान्तैः पदैर्विप्रा द्वितालान्तरगामिभिः ॥ ६८ ॥
यतीनां चैव सर्वेषां ये चान्ये तपसि स्थिताः ।
तेषां कार्या गतिर्ये तु नैष्ठिकं व्रतमास्थिताः ॥ ६९ ॥

अलोलचक्षुश्च भवेद्युगमत्र निरीक्षणः।
उपस्थितगतिश्चैव गात्रं सर्वं विधाय च ॥ ७० ॥
अचञ्चलमनाश्चैव यथावल्लिङ्गमाश्रितः।
विनीतवेषश्च भवेत्काषायवसनस्तथा ॥ ७१ ॥
प्रथमे सप्तपादेन स्थित्वा स्थानेन वै बुधः।
हस्तं च चतुरं कृत्वा तथा चैकं प्रसारयेत् ॥ ७२ ॥
प्रसन्नवदनं कृत्वा प्रयोगस्य वशानुगम्।
अनिषण्णेन गात्रेण गतिं गच्छेद्व्यतिक्रमात् ॥ ७३ ॥
उत्तमानां भवेदेषा लिङ्गे नो ये महाव्रताः।
एभिरेव विपर्यस्तैर्गुणैरन्येषु योजयेत् ॥ ७४ ॥
तथा प्रतानुगा वा स्यादन्येषां लिङ्गिनामपि।
विभ्रान्ता चाप्युक्षान्ता वा विभ्रान्ता निभृतापि च ॥ ७५ ॥
शकटास्यस्थितैः पादैरतिक्रान्तैस्तथैव च।
कार्या पाशुपतानां च गतिरुद्धतगामिनी ॥ ७६ ॥
अन्धकारेऽथ याने च गतिः कार्या प्रयोक्तृभिः।
भूमौ विसर्पितैः पादैर्हस्तैर्मार्गप्रदर्शिभिः ॥ ७७ ॥
रथस्थस्यापि कर्तव्या गतिस्तूर्णपदैरथ।
समपादं तथा स्थानं कृत्वा रथगतिं व्रजेत् ॥ ७८ ॥
धनुर्गृहीत्वा चैकेन तथा ह्येकेन कूबरम्।
सूतश्चास्य भवेदेवं प्रतोदानग्रहाकुलः ॥ ७९ ॥
केनानि वै विचित्राणि कर्तव्यानि विभागतः।
द्रुतैश्चूर्णपदैश्चैव गन्तव्यं रङ्गमण्डले ॥ ८० ॥
विमानस्थस्य कर्तव्या ह्येषैव स्यादनीगतिः।
आरूढमुद्वहेद्गात्रं किंचित्स्यादुन्मुखस्थितम् ॥ ८१ ॥
अन्यैव वैपरीत्येव कुर्याच्चाप्यतिरोहणम्।
अधोवलोकनैश्चैव मण्डलावर्तनेन च ॥ ८२ ॥

आकाशगमने चैव कर्तव्या नाट्ययोक्तृभिः ।
व्योम्नश्चावतरेद्यस्तु तस्यैतां कारयेद्गतिम् ॥ ८३ ॥
रुद्धायतोऽनुतननैः कुटिलावर्तितैरथ ।
भ्रश्यतश्च तथाकाशादपविद्धभुजागतिः ॥ ८४ ॥
विकीर्णवसना चैव तथा भूगतलोचना ।
प्रासादद्रुमशैलेषु नदीनिम्नोन्नतेषु च ॥ ८५ ॥
आरोहणावतरणं कार्यमर्थवशात्तथा ।
प्रासादारोहणं कार्यमतिक्रान्त[प]दैरथ ॥ ८६ ॥
उद्वाह्य गात्रं पादं च न्यसेत्सोपानपङ्क्तिषु ।
तथावतरणं चैव गोत्रमस्यैव कारयेत् ॥ ८७ ॥
प्रसादे यन्मया प्रोक्तं प्रतारः केवलो भवेत् ।
जलप्रमाणापेक्षा तु जलमध्ये गतिर्भवेत् ॥ ८८ ॥
तोयेऽल्पे वसनोत्कर्षः प्राज्येऽग्राणि विवेकगैः (?) ।
किंचित्र(न्न)ताग्रकाया तु प्रतारे गतिरिष्यते ॥ ८९ ॥
प्रसार्य बाहुमेकैकं मुहुर्वारिविकर्षणैः ।
तिर्यक्प्रसारिता चैव ह्रियमाणा च वारिणा ॥ ९० ॥
अशेषाङ्गाकुला धूतवदना गतिरिष्यते ।
नैस्थस्यापि(?) प्रयोक्तव्या द्रुतैस्तूर्णैः पदैर्गतैः ॥ ९१ ॥
प्रासादारोहणे यत्तु तदेवाविषु कारयेत् ।
केवलं तच्च विक्षेपमङ्घ्रिव्यङ्गं भवेदथ ॥ ९२ ॥
द्रुमे चारोहणं कार्यमतिक्रान्तैः स्थितैः पदैः ।
सूचीविद्धैरपक्रान्तैः पार्श्वक्रान्तैस्तथैव च ॥ ९३ ॥
संज्ञामात्रेण कर्तव्यान्येतानि विधिपूर्वकम् ।
तस्मान्नृत्त इति प्रोक्ते किं कर्तव्यं प्रयोक्तृभिः ॥ ९४ ॥
अङ्कुशग्रहणान्नाङ्गं खलीनग्रहणद्वयम् ।
प्रग्रहग्रहणायानमेवमेवापरेष्वपि ॥ ९५ ॥

अश्वयाने गतिः कार्या वैशाखस्थानकेन तु ।
तथा तूर्णपदैश्चित्रैरुपर्युपरि पातितैः ॥ ९६ ॥
पन्नगानां गतिः कार्या पादे स्वस्तिकयोजयेत् ।
विटस्यापि तु कर्तव्या गतिर्ललितविभ्रमा ॥ ९७ ॥
पादैराकुञ्चितैः किंचित्तालाभ्यन्तरयानगैः ।
स्वसौष्ठवसमायुक्तस्तथा हस्तौ पदानुगौ ॥ ९८ ॥
खटकाबद्धमानौ तु कृत्वा विटगतिं व्रजेत् ।
कञ्चुकीव प्रकर्तव्या वयोऽवस्था विशेषतः ॥ ९९ ॥
अवृद्धस्य प्रयोगज्ञो गतिमेवं प्रयोजयेत् ।
अर्धतालोत्थितैः पादैर्विष्कम्भैर्ऋजुभिस्तथा ॥ १०० ॥
समुद्वहंस्तथाङ्गानि पङ्कलग्न इव व्रजेत् ।
अथ वृद्धस्य कर्तव्या गतिकम्पितदेहिका ॥ १०१ ॥
विष्कम्भनकृतप्राणा मन्दोत्क्षिप्तपदक्रमात् ।
कृशस्याप्यभिनेया वै गतिर्मन्दपरिक्रमात् ॥ १०२ ॥
व्याधिग्रस्तस्य च तथा एषा श्रान्तस्य चैव हि ।
विष्कम्भनकृतप्राणः कृशः क्षामोदरस्तथा ॥ १०३ ॥
क्षामश्वरश्चैव भवेन्निःश्वासबहुलस्तथा ।
श्रमस्वेदाभिभूतश्च व्रजेत्तूर्णपदैस्तथा ॥ १०४ ॥
मत्तानां तु गतिः कार्या मदे तरुणमध्यमे ।
वामदक्षिणपादाभ्यां घूर्णमानोऽपसर्पणैः ॥ १०५ ॥
अवकृष्टे पदे चैव ह्यनवस्थितपादिका ।
विघूर्णितशरीरा च करैः प्रचलितैस्तथा ॥ १०६ ॥
उन्मत्तस्यापि कर्तव्या गतिस्त्वभिनयक्रमात् ।
बहुचारीसमायुक्ता लोकानुकरणाश्रया ॥ १०७ ॥
रूक्षस्फुटितकेशश्च रजोध्वस्ततनुस्तथा ।
अनिमित्तप्रकथनो बहुभाषी विकारवान् ॥ १०८ ॥

गायत्यकस्माद्धसति सङ्गेनापि न सज्जते ।
नृत्यत्यपि च संहृष्टो वादयत्यपि वा पुनः ॥ १०९ ॥
कदाचिद्वाचनिकवाक्कदाचिदवतिष्ठते ।
कदाचिदुपविष्टस्तु शयानः स्यात्कदाचन ॥ ११० ॥
नानाचीरधरश्चैव पथ्या(?)स्त्वनियतालयः ।
उन्मत्तो भवति ह्येवं तस्यैतां कारयेद्गतिम् ॥ १११ ॥
स्थित्वान्तपरपादेन दण्डपादं प्रसारयेत् ।
एतच्चारी तथा चैव कृत्वा स्वस्तिकमेव च ॥ ११२ ॥
अनेन चारीयोगेन परिभ्राम्य तु मण्डलम् ।
बाह्यभ्रमरकं चैव रङ्गकोणे प्रसारयेत् ॥ ११३ ॥
त्रिकं सुवलितं कृत्वा लतास्यं हस्तमेव च ।
विपर्ययगतैर्हस्तैः पद्भ्यां सह गतिर्भवेत् ॥ ११४ ॥
त्रिविधा तु गतिः कार्या खञ्जदा(का)मुकतामनैः ।
विकलाङ्गप्रयोगेण कुहंगा(का)भिनयं प्रति ॥ ११५ ॥
एकः खञ्जगतेर्नित्यं स्तब्धो वै चरणो भवेत् ।
तथा द्वितीयः कार्यस्तु पादोग्रतलसंचरः ॥ ११६ ॥
स्तब्धेनोद्या(स्था)पनं कार्यमङ्गस्य[1] चरणेन तु ।
इतरेण निषीदेच्च क्रमेणानेन वै व्रजेत् ॥ ११७ ॥
एषा खञ्जगतिः कार्या तलशल्यक्षतेषु च ।
पादादग्रतलस्थेन गतिः कार्याञ्चितेन तु ॥ ११८ ॥
निषण्णदेहः पङ्गोस्तु नते जङ्घे तथैव च ।
सर्वसंकुचिताङ्गा च वामने गतिरिष्यते ॥ ११९ ॥
न तस्य विक्रमः कार्यो विक्षेपश्चरणस्य च ।
सोद्वाहिता तूर्णपदा सा कार्या कुहकामि(त्मि)का ॥ १२० ॥
विदूषकस्यापि गतिर्हास्यत्रयविभूषिता ।
अङ्गकाव्य(य)कृतं हास्यं [हास्यं] नेपथ्यजं तथा ॥ १२१ ॥

१. 'भङ्गस' क.

दन्तुरः खलतिः कुब्जः खञ्जश्च विकृताननः ।
यदीदृशः प्रवेशः स्यादङ्गहास्यं तु तद्भवेत् ॥ १२२ ॥
अङ्गहास्यं तु विज्ञेयं कायहास्यं तु [त]द्भवेत् ।
काव्य(य)हास्यं तु विज्ञेयमसंबद्धप्रभाषणम् ॥ १२३ ॥
अनर्थकैर्विकारैश्च तथा वातुलभाषितैः ।
यदा तु बकवद्गच्छेदुलोकितविलोकिते ।
अन्यायतावरं(?) हास्यं वरं नेपथ्यजं भवेत् ॥ १२४ ॥
तस्मात्तु प्रकृतिं ज्ञात्वा भावं कार्यं च तत्त्वतः ।
गतिप्रचारं विभजेन्नानावस्थान्तरात्मकम् ॥ १२५ ॥
स्वभावजायां विन्यस्य कुटिलं वामके करे ।
तथा दक्षिणहस्ते च कुर्याच्चतुरकं पुनः ॥ १२६ ॥
पार्श्वमेकं शिरश्चैव हस्तोऽथ चरणस्तथा ।
पर्यायशः सन्नमते लयतालवशानुगः ॥ १२७ ॥
स्वभावजा तु तस्यैषा गतिरन्या विकारजा ।
अलाभलाभाभुक्तस्य तथा तस्य गतिर्भवेत् ॥ १२८ ॥
पार्श्वमेकं शिरश्चैव करः सचरणस्तथा ।
गतौ नमे(?) तु खेटानां दृष्टिश्चार्धविचारिणी ॥ १२९ ॥
वस्त्राभरणसंस्पर्शैर्मुहुर्मुहुरवेक्षितैः ।
समर्चिता तूर्णपदा सकामस्य गतिर्भवेत् ॥ १३० ॥
[1]म्लेच्छानां जातयो यास्तु पुलिन्दाद्या द्विजोत्तमाः ।
तेषां देशानुरूपेण कार्यं गतिविचेष्टितम् ॥ १३१ ॥
पक्षिणां श्वापदानां च पशूनां च द्विजोत्तमाः ।
स्वस्वजातिसमुत्थेन भावेन प्रतियोजयेत् ॥ १३२ ॥
सिंहर्क्षवानराणां च गतिः कार्या प्रयोक्तृभिः ।
या कृता नरसिंहेन विष्णुना प्रभविष्णुना ॥ १३३ ॥

---

१. 'म्लेच्छानां' इत्यारभ्य 'श्वापदानां च' इति पर्यन्तं पाठः ख-पुस्तके नास्ति.

आलीढं स्थानकं कृत्वा गात्रं तस्यैव चानुगम् ।
जानूपरि करं त्वेकमपरं चैव खस्थितम् ॥ १३४ ॥
अवलोक्य दिशः सर्वाश्चिबुकं बाहुमस्तके ।
गन्तव्यं विक्रमैर्विप्राः पञ्चतालान्तरोत्थितैः ॥ १३५ ॥
शेषाणामर्थयोगेन गतिं स्थानं प्रयोजयेत् ।
वाहनार्थप्रयोगेषु रङ्गावतरणेषु च ॥ १३६ ॥
एवमेताः प्रयोक्त[व्या] नराणां गतयो बुधैः ।
नोक्ता या या म[या] ह्यत्र ग्राह्यास्ताश्चापि लोकतः ॥१३७॥
अतःपरं प्रवक्ष्यामि स्त्रीणां गतिविचेष्टितम् ।
स्त्रीणां स्थानानि कार्याणि गतिस्ता भाषणेषु च ॥ १३८ ॥
आयतं चावहित्थं च अश्वक्रान्तमथापि वा ।
वामः स्वभावतो यत्र पादो विरचितः समः ॥ १३९ ॥
तालमात्रान्तरे न्यस्तस्त्रिस्त्रः पक्षस्थितोऽपरः ।
प्रसन्नमानसपुरा (?) समं यत्र समुन्नतम् ।
लतानितम्बगौ हस्तौ स्थानं ज्ञेयं तदा जगुम् ॥ १४० ॥
रङ्गावतरणारम्भपुष्पाञ्जलिविसर्जनम् ।
मन्मथस्योद्भवं कोपं तर्जनाङ्गुलिमोटनम् ॥ १४१ ॥
निषेवं(?) गर्वगाभीर्यं मौनमानावलम्बनम् ।
स्थानेऽस्मिन्संविधानीयं दिगम्बरनिरूपणम् ॥ १४२ ॥
पुरा विरचितस्त्रिस्त्रस्तदन्योऽपसृतः समः ।
पादस्तालान्तरन्यस्तस्त्रिकमीषत्समुन्नतम् ॥ १४३ ॥
पाणिर्लताख्ये यत्रैकस्तदन्योऽपि नितम्बगः ।
अवहित्थं समाख्यातं स्थानमागमभूषणैः ॥ १४४ ॥
विलासलीलाविब्बोकशृङ्गारात्मनिरूपणैः ।
स्थानमेतत्प्रयोक्तव्यं भर्तुर्मार्गावलोकने ॥ १४५ ॥
पादः समुत्थितश्चैक एष चाग्रतलान्वितः ।
सूचीविद्धमविद्धं वा तदश्वक्रान्त उच्यते ॥ १४६ ॥

स्खलितं घूर्णितं चैव ग(ल)लिताम्बरधारणम्।
कुसुमस्तबकादानं परिरक्षणमेव च ॥ १४७ ॥
खत्रासनं सललितं तरुशाखावलम्बनम्।
स्थानेऽस्मिन्संविधानीयं स्त्रीणामेतत्प्रयोक्तृभिः ॥ १४८ ॥
एवं स्थानविधिः कार्यः स्त्रीणां [नृ]णामथापि च।
स्थानकं तावदेव स्याद्यावच्चेष्टा प्रवर्तते ॥ १४९ ॥
भग्नावस्थानकं नृत्ये चारी च समुपस्थिता।
कृत्वावहित्थं स्थानं तु वामं चाधोमुखं भुजम् ॥ १५० ॥
नाभिप्रदेशे विन्यस्य सव्यं च खटकामुखम्।
ततः संललितं पादं तालमात्रसमुत्थितम् ॥ १५१ ॥
दक्षिणं वामपादस्य बाह्यपार्श्वे विनिक्षिपेत्।
तेनैव समकालं च लताख्यं वामकं भुजम् ॥ १५२ ॥
दक्षिणं विनयेत्पार्श्वे न्यसेन्नाभितटे ततः।
नितम्बे दक्षिणे कृत्वा हस्तं चोद्वेष्ट्य वामकम् ॥ १५३ ॥
ततो वामपदं दद्याल्लताहस्तं सदक्षिणम्।
लीलयोद्वाहितेनाथ शिरसानुगतेन च ॥ १५४ ॥
षट्कलं तु न कर्तव्यं तथाष्टकलमेव च।
पादस्य पतनं तज्ज्ञैः खेदनं तद्भवेत्स्त्रियाः ॥ १५५ ॥
सयौवनानां नारीणामेवं कार्या गतिर्बुधैः।
स्थानीया याः स्त्रियस्तासां संप्रवक्ष्याम्यहं गतिम् ॥ १५६ ॥
कृत्वावहित्थं स्थानं तु वामं न्यस्य कटीतटे।
आद्यं चारालमुत्तानं कुर्यान्नाभिस्तनान्तरे ॥ १५७ ॥
न निषण्णं न च स्तब्धं न चापि परिवाहितम्।
कृत्वा गात्रं ततो गच्छेत्तेनैवेह क्रमेण तु ॥ १५८ ॥
वृद्धाणामपि कर्तव्या गतिरुद्भ्रान्तगामिनी।
किंचिदुन्नमितैर्गात्रैराविद्धभुजविक्रमा ॥ १५९ ॥

स्थानं कृत्वावहित्थं तु वामं चाधोमुखं भुजम् ।
नाभिप्रदेशे विन्यस्य सव्यं च खटकामुखम् ॥ १६० ॥
अर्धनारीगतिः कार्या स्त्रीपुंसाभ्यां विमिश्रिता ।
उदात्तललितैर्गात्रैः पदैर्ली[ला]समन्वितैः ॥ १६१ ॥
या पूर्वमेवाभिहिता ह्युत्तमानां गतिर्मया ।
स्त्रीणां कापुरुषाणां च ततोऽर्धार्धा तु योजयेत् ॥ १६२ ॥
मध्यमोत्तमनीचानां नृपं प्रति विचेष्टितम् ।
स्त्रीणां तदर्धा कर्तव्या ललितैः पादविक्रमैः ॥ १६३ ॥
बालानामपि कर्तव्या स्वच्छन्दपदविक्रमा ।
न तस्यां सौष्ठवं कार्यं न प्रमाणं प्रयोक्तृभिः ॥ १६४ ॥
विपर्ययः प्रयोक्तव्यः पुरुषस्त्रीनपुंसकैः ।
स्वभावमात्मनस्त्यक्त्वा दभावगमनादिह(?) ॥ १६५ ॥
व्याजेन क्रीडया वापि तथा भूयश्च वञ्चनात् ।
स्त्री पुंसः प्रकृतिं कुर्यात्स्त्रीभावं पुरुषोऽपि वा ॥ १६६ ॥
धैर्योदार्येण सत्त्वेन बुद्ध्या तद्वच्च कर्मणा ।
स्त्री पुमांसं त्वभिनयेद्वेषवाक्यविचेष्टितैः ॥ १६७ ॥
स्त्रीवेषभाषितैर्युक्तः प्रेक्षिताप्रेक्षितैस्तथा ।
मृदुसन्नगतिश्चैव पुमान्स्त्रीभावमाचरेत् ॥ १६८ ॥
तथासनविधिः कार्यः स्त्रीणां नृणामथापि वा ।
नानाभावसमायुक्तस्तथैव शयनाश्रयः ॥ १६९ ॥
विष्कम्भेणाञ्चितौ पदौ त्रिकं किंचित्समुन्नतम् ।
हस्तौ कट्यूरुविन्यस्तौ बाहुशीर्षाश्रितं शिरः ॥ १७० ॥
संप्रणष्टेन्द्रियमना भवेच्छोकोपवेशने ।
प्रसार्य बाहू शिथिलौ तया चापाश्रयाश्रितः ॥ १७१ ॥
मूर्छामदश्रमग्लानिविषादेषूपवेशयेत् ।
सर्वपिण्डीकृताङ्गस्तु संपाते पादजानुभिः ॥ १७२ ॥

व्याधिपीडावहित्थेषु ध्याने चोपविशेन्नरः ।
तथा चोत्कण्टकं स्थानं स्फिक्पार्ष्णीनां समागमम् ॥ १७३ ॥
पित्र्ये निर्वापसलिले संध्यास्वाचमनेषु च ।
विष्कम्भितं पुनश्चैव जानु भूमौ निपातयेत् ॥ १७४ ॥
प्रियप्रसादने कार्यं होमादिकरणेषु च ।
महीगताभ्यां जानुभ्यामधोमुखमवस्थितम् ॥ १७५ ॥
देवाभिगमने कार्यं रूषिकानां च सान्त्वने ।
शोके चाक्रन्दने तीव्रं मृतानां चैव दर्शने ॥ १७६ ॥
त्रासने च कुसत्त्वानां दीनानां चैव याचने ।
होमयज्ञक्रियायां च प्रेष्याणां चैव योजयेत् ॥ १७७ ॥
मुनीनां नियमेष्वेष भवेदासनजो विधिः ।
अथासनविधिः कार्यो विविधो नाटकाश्रयः ॥ १७८ ॥
स्त्रीणां च पुरुषाणां च बाह्यश्चाभ्यन्तरस्तथा ।
देवानां नृपतीनां च दद्यात्सिंहासनं द्विजाः ॥ १७९ ॥
पुरोधसाममात्यानां भवेद्वेत्रासनं तथा ।
मुण्डासनं च दातव्यं सेनानीयुवराजयोः ॥ १८० ॥
काष्ठासनं ब्राह्मणानां कुमाराणां कुथासनम् ।
एवं राजासनं प्राप्य कार्य आसनजो विधिः ॥ १८१ ॥
स्त्रीणां चैवासनविधिं संप्रवक्ष्याम्यहं पुनः ।
सिंहासनं तु राज्ञीनां देवीनां मण्डलासनम् ॥ १८२ ॥
पुरोधोमात्यपत्नीनां भवेद्वेत्रासनं तथा ।
भोगिनीनां पुनश्चैव कुथा चर्मकुथापि वा ॥ १८३ ॥
शेषाणां प्रमदानां तु भवेद्भूम्यासनं द्विजाः ।
एवमाभ्यन्तरो ज्ञेयो बाह्यश्चासनजो विधिः ॥ १८४ ॥
तथा स्वगृहवा·········च्छन्देनासनमिष्यते ।
नियमस्थो मुनीनां च भवेदासनजो विधिः ॥ १८५ ॥

लिङ्गिनां वासनविधिः कार्यो व्रतसमाश्रयः ।
वृषीमुण्डासनप्रायं वेत्रासनमथापि वा ॥ १८६ ॥
स्थानीया ये च पुरुषाः कुलविद्यासमन्विताः ।
तेषामासनसत्कारः कर्तव्य इति पार्थिवैः ॥ १८७ ॥
समे समासनं दद्यान्मध्यमे मध्यमासनम् ।
अतिरिक्तेऽतिरिक्तं च हीने भूम्यासनं भवेत् ॥ १८८ ॥
उपाध्यायस्य नृपतेर्गुरूणां चाग्रतो बुधैः ।
भूम्यासनं सदा कार्यमथवा काष्ठमासनम् ॥ १८९ ॥
नौनागरथयानेषु भूमिकाष्ठासनेषु च ।
सहासनं न दुष्येत गुरूपाध्यायपार्थिवैः ॥ १९० ॥
आकुञ्चितं समं चैव प्रसारितविवर्तने ।
उद्वाहितं तथा चैव शयने कर्म कीर्त्यते ॥ १९१ ॥
गतिप्रचारस्तु मयोदितोऽयं नोक्तश्च यः सोऽर्थवशेन साध्यः ।
अतः परं रङ्गपरिक्रमस्य वक्ष्यामि कक्षान्तरसंविधानम् ॥ १९२ ॥

इति श्रीभारतीये नाट्यशास्त्रे गतिप्रचारो नाम द्वादशोऽध्यायः ।

---

## त्रयोदशोऽध्यायः ।

ये तु पूर्वं मया प्रोक्तास्त्रयो वै नाट्यमण्डपाः ।
तेषां विभागं विज्ञाय ततः कक्षां प्रयोजयेत् ॥ १ ॥
ये नेपथ्यगृहद्वारे मया पूर्वं प्रकीर्तिते ।
तयोर्भाण्डस्य विन्यासो मध्ये कार्यः प्रयोक्तृभिः ॥ २ ॥
कक्षाविभागो निर्देश्यो रङ्गपीठपरिक्रमात् ।
परिक्रमेण रङ्गस्य ह्यन्या कक्षा भवेदिह ॥ ३ ॥
कक्षाविभागे ज्ञेयानि गृहाणि नगराणि च ।
उद्यानारामसरितस्त्वाश्रमा अटवी तथा ॥ ४ ॥
पृथिवीसागराश्चैव त्रैलोक्यं सचराचरम् ।
वर्णनैः सप्त द्वीपाश्च पर्वता विविधास्तथा ॥ ५ ॥

आलोकश्चैव लोकश्च रसातलमथापि वा ।
दैत्यानामालयश्चैव गृहाणि च वनानि च ॥ ६ ॥
नगरे च वने चापि वर्षे वै पर्वते तथा ।
दूरं वा संनिकृष्टं वा देशं तु परिकल्पयेत् ॥ ७ ॥
पूर्वं प्रविष्टा ये रङ्गे ज्ञेयास्तेऽभ्यन्तरे बुधैः ।
पश्चात्प्रविष्टास्ते ज्ञेयाः कक्षाभावे तु मध्यतः ॥ ८ ॥
तेषां तु दर्शनेच्छुः सन्प्रविशेद्रङ्गमण्डलम् ।
दक्षिणाभिमुखः कुर्या·········दालनिवेदनम् ॥ ९ ॥
यतो मुखं भवेद्भाण्डद्वारं नेपथ्यकस्य च ।
सा मन्तव्या तु दिक्पूर्वा नाट्ययोगेन नित्यशः ॥ १० ॥
निष्क्रामेच्चापि यं सूत्रन(धा)रः कार्येण केनचित् ।
अतिक्रामेत्तु तेनैव कृतं येन निवेदनम् ॥ ११ ॥
सैव भूमिस्तु बहुभिर्विकृष्टा स्यात्परिक्रमैः ।
मध्या वासन्नकृष्टा वा तेषामेव विकल्पनात् ॥ १२ ॥
नगरे वा वने वापि पर्वते सागरेऽपि वा ।
दिव्यानां गमनं कार्यं वर्षे द्वीपेऽपि वा पुनः ॥ १३ ॥
आकाशेन विमानेन मयेना(?)प्यथवा पुनः ।
विविधाभिः क्रियाभिर्वा नानार्थाभिः प्रयोगतः ॥ १४ ॥
नाटके छन्नवेषाणां दिव्यानां भूमिसंचरः ।
मानुषैः कारणादेषां यदा भवति दर्शनम् ॥ १५ ॥
दिव्यानां छन्दगमनं सर्ववर्षेषु कीर्तितम् ।
भारते मानुषाणां च गमनं संविधीयते ॥ १६ ॥
हिमवत्पृष्ठपार्श्वे तु कैलासे पर्वते शुभे ।
यक्षाश्च गुह्यकाश्चैव धनदानुचराश्च ये ॥ १७ ॥
रक्षोभूतपिशाचाश्च सर्वे हैमवताः स्मृताः ।
हेमकूटे च गन्धर्वा विज्ञेयाः साप्सरोगणाः ॥ १८ ॥

१. 'नगरे' क.

सर्वे नागा[स्तु] निषधे शेषवासुकितक्षकाः ।
महामेरौ त्रयस्त्रिंशज्ज्ञेया देवगणा बुधैः ॥ १९ ॥
नीले तु वैडूर्यमये सिद्धा ब्रह्मर्षयस्तथा ।
दैत्यानां दानवानां च श्वेतपर्वत उच्यते ॥ २० ॥
पितरश्चापि विज्ञेयाः शृङ्गवन्तं समाश्रिताः ।
इत्येते पर्वताः श्रेष्ठा दिव्यावासा भवन्ति हि ॥ २१ ॥
तेषां कक्षाविभागस्तु जम्बूद्वीपे भवेदयम् ।
तेषां चावेष्टितं(ष्टनं) कार्यं स्वैः स्वैः कर्मपराक्रमैः ॥ २२ ॥
परिच्छदविशेषस्तु तेषां मानुषलोकवत् ।
सर्वे भावास्तु देवानां कार्या मानुषसंश्रयाः ॥ २३ ॥
तेषामनमिषं यत्तु तन्न कार्यं प्रयोक्तृभिः ।
इह भावा रसाश्चैव दृष्ट्यामेव प्रतिष्ठिताः ॥ २४ ॥
दृष्ट्या हि सूचितो भावः पश्चादङ्गैर्विभाव्यते ।
चतुर्विधा प्रवृत्तिश्च प्रोक्ता नाट्यप्रयोक्तृभिः ।
आवन्ती दाक्षिणात्या च पाञ्चाली चौड्रमागधी ॥ २५ ॥

अत्राह—प्रवृत्तिरिति कस्मात् । उच्यते—पृथिव्यां नाट्यदेशवेषभाषाचारो वार्ताः ख्यापयतीति प्रवृत्तिः, प्रवृत्तिश्च निवेदनैः । अत्राह—यदा पृथिव्यां नानादेशाः सन्ति, कथमासां चतुर्विधत्वमुत्पन्नम्, समानलक्षणश्चासां प्रयोग उच्यते । एवमेष समानलक्षणप्रयोगः । किंतु नानादेशवेषभाषाचारो लोक इति कृत्वा लोकानुमते वृत्तिसंश्रितमस्य मया चतुर्विधत्वमभिहितं भारत्यारभटी सात्त्वती कैशिकी चेति । वृत्तिसंश्रितैश्च प्रयोगैरभिहिता देशाः, यतः प्रवृत्तिचतुष्टयमभिनिवृत्तं प्रयोगश्चोत्पादितः । तत्र दाक्षिणात्या भवेत्, बहुगीतनृत्यवाद्या कैशिकीप्राया चतुरमधुरललिताङ्गाभिनया यथा ।

महेन्द्रो मलयः सह्यो मेलकः पलपिञ्जरः ।
एतेषु संश्रिता देशाः स ज्ञेयो दक्षिणापथः ॥ २६ ॥

कोशलास्तोशलाश्चैव कलिङ्गा एव मोशलाः ।
द्रविडान्ध्रमहाराष्ट्रा वैण्पा वैवानवासजाः ॥ २७ ॥
दक्षिणस्य समुद्रस्य तथा विन्ध्यस्य चान्तरे ।
ये देशास्तेषु युञ्जीत दाक्षिणात्यां तु नित्यशः ॥ २८ ॥
अवन्तिका वैदिशिकाः सौराष्ट्रा मालवास्तथा ।
सैन्धवास्त्वथ सौवीरा आनर्ताः सार्बुदेयकाः ॥ २९ ॥
दाशार्णास्त्रैपुराश्चैव तथा वै मार्तिका[1] मताः ।
कुर्वन्त्यावन्तिकीमेते प्रवृत्तिं नित्यमेव तु ॥ ३० ॥
सात्वतीं कैशिकीं चैव वृत्तिमेषां समाश्रितः ।
भवेष(त्त्र)योगो नान्यत्र सर्वैः कार्यः प्रयोक्तृभिः ॥ ३१ ॥
अङ्गा वङ्गाः कलिङ्गाश्च वत्साश्चैवोड्रमागधाः ।
पौण्ड्रनैपालिकाश्चैव अन्तर्गिरिबहिर्गिराः ॥ ३२ ॥
तत्र वङ्गसमा ज्ञेया मलचा मल्लवर्शकाः ।
ब्रह्मोत्तरप्रभृतयो भार्गवा मार्गवास्तथा ॥ ३३ ॥
[2]प्रापौतिषाः पुलिन्दाश्च वैदेहास्ताम्रलिप्तकाः ।
प्रागाः प्रावृतयाश्चैव युञ्जन्ति [3]च्योढ्रमागधीम् ॥ ३४ ॥
अन्येऽपि देशा एभ्यो ये पुराणे संप्रकीर्तिताः ।
तेषु प्रयुज्यते ह्येषा प्रवृत्तिस्त्वौड्रमागधी ॥ ३५ ॥
पाञ्चालमध्यमायां तु सात्वत्यारभटी स्मृता ।
प्रयोगस्त्वल्पगीतार्थ आविद्धगतिविभ्रमः ॥ ३६ ॥
पाञ्चालाः शौरसेनाश्च काश्मीरा हास्तिनापुराः ।
वाह्लीकाः शाकलाश्चैव मद्रकौसीनरास्तथा ॥ ३७ ॥
हिमवत्संश्रिता ये च गङ्गायाश्चोत्तरां दिशम् ।
ये श्रिता वै जनपदास्तेषु पाञ्चालमध्यमाः ॥ ३८ ॥
द्विधा क्रिया भवत्यासां रङ्गपीठपरिक्रमे ।
प्रदक्षिणप्रवेशाश्च तथा चाप्यप्रदक्षिणाः ॥ ३९ ॥

---

१. 'मार्तिकामुताः' ख. २. 'प्राग्ज्योतिषाः' इति स्यात्. ३. 'चौड्रमागधीम्' इत्युचितम्.

आवन्ती दाक्षिणात्या च प्रदक्षिणपरिक्रमे ।
अपसव्यप्रवेशा तु पाञ्चाली चौड्रमागधी ॥ ४० ॥
आवन्त्यां दाक्षिणात्यायां पार्श्वद्वारमथोत्तरम् ।
पाञ्चाल्यां सौड्रमागध्यां पार्श्वद्वारं तु दक्षिणम् ॥ ४१ ॥
एकभूताः पुनश्चैताः प्रयोक्तव्याः प्रयोक्तृभिः ।
पार्षदं देशकालौ चाप्यर्थयुक्तिमपेक्ष्य च ॥ ४२ ॥
ये देशेषु च या कार्या प्रवृत्तिः परिकीर्तिता ।
तं वृत्तकानि रूपाणि तेषु तज्ज्ञः प्रयोजयेत् ॥ ४३ ॥
प्रयोगो विविधश्चैव विज्ञेयो नाटकाश्रयः ।
सुकुमारस्तथा विद्धो नाट्ययुक्तिसमाश्रयः ॥ ४४ ॥
तत्र विद्धाङ्गहारं तु च्छेद्यभेद्याहवात्मकम् ।
माहेन्द्रजालबहुलं पुस्तनेपथ्यसंयुतम् ॥ ४५ ॥
पुरुषैर्बहुभिर्युक्तमल्पस्त्रीकं तथैव च ।
सात्वत्यारभटीप्रायं नाट्यमाविद्धमेव तत् ॥ ४६ ॥
डिमः समवकारश्च व्यायोगेहामृगौ तथा ।
एतान्याविद्धसंज्ञानि विज्ञेयानि प्रयोक्तृभिः ॥ ४७ ॥
एषां प्रयोगः कर्तव्यो देवदानवराक्षसैः ।
उद्धता ये च पुरुषाः शौर्यवीर्यबलान्विताः ॥ ४८ ॥
नाटकं सप्रकरणं भाणो वीथ्यङ्क एव च ।
सुकुमारप्रयोगाणि मानुषेष्वाश्रितानि च ॥ ४९ ॥
धर्मी या[1] द्विविधा प्रोक्ता मया पूर्वं द्विजोत्तमाः ।
लौकिकी नाट्यधर्मी च तयोर्वक्ष्यामि लक्षणम् ॥ ५० ॥
स्वभावभावोपगतं शुद्धं त्वविकृतं तथा ।
लोकवार्ताक्रियोपेतमङ्गलीलाविवर्जितम् ॥ ५१ ॥

---

१. चारीशब्दवद्धर्मीशब्दोऽपि स्त्रीलिङ्गो वर्तते, अत एव सर्वत्र स्त्रीलिङ्गत्वेनैव व्यवहारो दृश्यते.

स्वभावाभिनयोपेतं नानास्त्रीपुरुषाश्रयम् ।
यदीदृशं भवेन्नाट्यं लोकधर्मी तु सा स्मृता ॥ ९२ ॥
अतिवाक्यक्रियोपेतमतिसत्त्वातिभाविकम् ।
लीलाङ्गहाराभिनयं नाट्यलक्षणलक्षितम् ॥ ९३ ॥
स्वरालंकारसंयुक्तमस्वस्थपुरुषाश्रयम् ।
यदीदृशं भवेन्नाट्यं नाट्यधर्मी तु सा स्मृता ॥ ९४ ॥
लोके यदभियोज्यं तु भद्रमत्रोपयुज्यते ।
मूर्तिमत्साभिलाषं च नाट्यधर्मी तु सा स्मृता ॥ ९५ ॥
अत्रोक्तं चैव यद्वाक्यं न शृण्वन्ति परस्परम् ।
अनुक्तं श्रूयते यच्च नाट्यधर्मी तु सा स्मृता ॥ ९६ ॥
शैलयानविमानानि चर्मवर्मायुधध्वजाः ।
मूर्तिमन्तः प्रयुज्यन्ते नाट्यधर्मी तु सा स्मृता ॥ ९७ ॥
ललितैरङ्गविन्यासैस्तथोत्क्षिप्तपदक्रमैः ।
नृत्यते गम्यते चापि नाट्यधर्मी तु सा स्मृता ॥ ९८ ॥
योऽयं स्वभावो लोकस्य सुखदुःखक्रियात्मकः ।
सोऽङ्गाभिनयसंयुक्तो नाट्यधर्मी प्रकीर्तिता ॥ ९९ ॥
यश्च कक्षाविभागोऽयं नानाविधिसमाश्रितः ।
रङ्गपीठगतः प्रोक्तो नाट्यधर्मी तु सा भवेत् ॥ ६० ॥
नाट्यधर्मीप्रवृत्तं हि सदा नाट्यं प्रयोजयेत् ।
नह्यङ्गाभिनयात्कश्चिदन्ते रागः प्रवर्तते ॥ ६१ ॥
सर्वस्य सहजो भावः सर्वो ह्यभिनयोत्थितः ।
अङ्गालंकारचेष्टा तु नाट्यधर्मी प्रकीर्तिता ॥ ६२ ॥
एवं कक्षाविभागस्तु धर्मीयुक्तय एव च ।
विज्ञेया नाट्यतत्त्वज्ञैः प्रयोक्तव्याश्च यत्नतः ॥ ६३ ॥
उक्तो मयाङ्गाभिनयो यथावद्भावः कृतो यश्च कृताङ्गहारः ।
पुनश्च वाक्याभिनयं यथावद्वक्ष्ये स्वरव्यञ्जनवर्णयुक्तम् ॥ ६४ ॥

इति श्रीभारतीये नाट्यशास्त्रे करयुक्तिधर्मीव्यञ्जको नाम त्रयोदशोऽध्यायः ।

चतुर्दशोऽध्यायः ।

यं पुरस्कृत्य षण्मात्राः स्युस्तथैव च त्र्यक्षराः ।
उक्ताद्यास्तु त्रिका ज्ञेया लघुगुर्वक्षरान्विताः ॥ १ ॥
मात्रागणविभागस्तु गुरुलघ्वक्षराश्रयः ।
अन्त्याद्द्विगुणिताद्रूपाद्द्विद्विरेकं गुरोर्हरेत् ॥ २ ॥
द्विगुणं च लघोः कृत्वा संख्यां पिण्डेन निर्दिशेत् ।
आद्यं सर्वगुरु वृत्तं [ज्ञेयं] तु समसंज्ञितम् ॥ ३ ॥
कौशं तु सर्वलघ्वन्तं मिश्रैः शेषाणि सर्वतः ।
नैधनादङ्कमेकैकं प्रातिलोम्यक्रियात्मकम् ॥ ४ ॥
सर्वेषां छन्दसामेव लघ्वक्षरविनिश्चितम् ।
जानीत सर्ववृत्तानां संख्यां संक्षेपतस्तथा ॥ ५ ॥
एकाधिकां तथा संख्यां सदृशां विनिवेशयेत् ।
यावच्चरणं तु पूर्वेण पूरयेदुत्तरं गणम् ॥ ६ ॥
एवं कृत्वा तु सर्वेषां परेषां पूर्वपूरणम् ।
जानीत समवृत्तानां संख्यां संक्षेपतस्तथा ॥ ७ ॥
वृत्तानां तु समानानां संख्यां संयोज्य तावतीम् ।
राश्यूनामर्धविषमां समानां दश निर्दिशेत् ॥ ८ ॥
तदर्धविषमाणां द्विः संख्यां कृत्वा तु तावतीम् ।
राश्यूनामत्र जानीत विषमाणां समासतः ॥ ९ ॥
वृत्तार्धपरिमाणं तु च्छित्वार्धेन यथाक्रमम् ।
न्यसेत्तथा सैकवृत्ते..........कं गुरुवाप्यथ ॥ १० ॥
एवं विन्यस्य वृत्तानां नष्टोद्दिष्टं विभागतः ।
गुरुलघ्वक्षराणीह सर्वं छन्दःसु दर्शयेत् ॥ ११ ॥

इति श्रीभारतीये नाट्यशास्त्रे वाचिकाभिनये छन्दोविधानं नाम चतुर्दशोऽध्यायः ।

---

१. 'स्यात्तयैव' क. २. 'त्र्यक्षरा' ख. ३. 'शेषं' इति स्यात्. ४. 'यावत्पादं–' इति साधीयान्पाठः.

पञ्चदशोऽध्यायः ।

इति च्छन्दांसि यानीह मयोक्तानि द्विजोत्तमाः ।
वृत्तान्येतेषु नाट्येऽस्मिन्प्रयोज्यानि निबोधत ॥ १ ॥

आद्ये पुनरन्त्ये द्वे द्वे गुरुणी चेत् ।
सा स्यात्तनुमध्या गायत्रसमुत्था ॥ २ ॥

संत्यक्तविभूषा भ्रष्टाञ्जननेत्रा ।
हस्तार्पितवक्त्रा किंचित्तनुमध्या ॥ ३ ॥

लघुगण आद्यो भवति चतुष्कः ।
गुरुयुगमन्त्ये मकर[क]शीर्षा ॥ ४ ॥

स्वयमुपयातां भजसि न कान्ताम् ।
भव करिकित्वं(?) मकरकशीर्षा ॥ ५ ॥

षडक्षरक्षात(कृते) पादे लघु यत्र द्वितीयकम् ।
शेषाणि तु गुरूणि स्युर्मालिनी सा मता यथा ॥ ६ ॥

स्नानगन्धस्रग्भिर्वस्त्रभूषायोगैः ।
व्यक्तमेवैषा त्वं मालिनी प्रख्याता ॥ ७ ॥

द्वितीयं च चतुर्थं च पञ्चमं च यदा लघु ।
यस्याः सप्ताक्षरे पादे सा ज्ञेया तूद्धता यथा ॥ ८ ॥

दन्तकुन्तकृताङ्कं व्याकुलालकशोभम् ।
शंसतीव तवास्यं युद्धमुद्धतवेषम् ॥ ९ ॥

आदौ द्वे निधने चैव गुरुणी यत्र वै सदा ।
पादे सप्ताक्षरे ज्ञेया सा तु भ्रमरमालिका ॥ १० ॥

यथा— 'नानाकुसुमचित्रे प्राप्ते सुरभिमासे ।
एषा भ्रमति मत्ता कान्ता भ्रमरमाला ॥ ११ ॥'

आद्यं तृतीयमन्त्यं च पञ्चमं सप्तमं तथा ।
गुरूण्यष्टाक्षरे पादे सिंहलीलेति सा यथा ॥ १२ ॥

---

१. अत्र चरणान्ते विशेषेण विश्रामः कर्तव्य इत्याम्नायः. २. इदं वृत्तं ग्रन्थान्तरे शशिवदनानाम्ना व्यवह्रियते. ३. 'द्विजैः' क-ख.

[^1वैरिवारणान्तकारिन्वीर तावकं स्तुवन्ति ।
जन्यकामने करालं] वृत्तमत्र सिंहलीलम् ॥ १३ ॥
चतुर्थं च द्वितीयं च षष्ठमष्टममेव च ।
गुरूण्यष्टाक्षरे पादे वदन्ति मत्तचेष्टितम् ॥ १४ ॥

यथा— 'मदावघूर्णितेक्षणं विलम्बिताकुलालकम् ।
असंस्थितैः पदैः प्रिया करोति मत्तचेष्टितम् ॥ १५ ॥'

अष्टाक्षरकृते पादे सर्वाण्येव भवन्ति हि ।
गुरूणि यस्मिन्सा नाम्ना विद्युल्लेखेति संज्ञिता ॥ १६ ॥
अम्भोभारैरानदद्भिः श्यामाम्भोदैर्व्याप्ते व्योम्नि ।
आदित्यांशुस्पर्धिन्येषा दिक्षु भ्रान्ता विद्युल्लेखा ॥ १७ ॥
नवाक्षरकृते पादे त्रीणि स्युर्नैधनानि तु ।
गुरूणि यस्यां सा नाम्ना भवेन्मधुकरी यथा ॥ १८ ॥
कुसुमितमभिपश्यन्ती विविधनगगणैश्छन्नम् ।
नवनलिनसुगन्धाढ्यं भ्रमति मधुकरी हृष्टा ॥ १९ ॥
दशाक्षरकृते पादे त्रीण्यादौ त्रीणि नैधने ।
यस्या गुरूणि सा ज्ञेया पङ्क्तिरुत्पलमालिनी ॥ २० ॥

यथा— 'अस्मिंस्ते भ्रमरनिभे कान्ते
नानारत्नरचितभूषाढ्ये ।
[सीमन्ते स्फुरतितरामद्य]
प्रोत्फुल्ला कुवलयमालेयम् ॥ २१ ॥'

द्वितीयं च चतुर्थं च षष्ठमष्टममेव च ।
ह्रस्वं दशाक्षरे पादे यत्र सा शिखिसारिणी ॥ २२ ॥

यथा— 'नैव तेऽस्ति संगमो मनुष्यै-
र्नापि कामभोगचिह्नमन्यत् ।

---

१. 'यत्त्वयाद्यनेकभावं चेष्टितं रदस्तु गात्रिः। तसनो मम विष्टं-' क-ख. २. अस्य च्छन्दसो विद्युन्मालेति नामान्तरम्.

गर्भिणी च दृश्यसे ह्यनार्ये
किं सत्वरसारिणी(?) त्वमेव ॥ २३ ॥'

'प्रथमं च चतुर्थं च सप्तमं दशमं गुरु ।
अन्त्यं च त्रैष्टुभे पादे यत्र स्याद्दोधकं तु तत् ॥२४॥' इति ।

यथा— 'प्रस्खलिताग्रपदप्रविचारं मत्तविघूर्णितगात्रविलासम् ।
पश्य विलासिनि कुञ्जरमेतं दोधकवृत्तगतिं प्रकरोति ॥ २५ ॥'

आदौ द्वे पञ्चमं चैवाप्यष्टमं नैधनं तथा ।
गुरूण्येकादशे पादे यत्र तन्मोटकं यथा ॥ २६ ॥

एषोऽम्बुदनिःस्वनतुल्यरवः
क्षीबः [स्खलदङ्ग]विलम्बगतिः[1] ।
श्रुत्वा घनगर्जितमद्रितटे
वृक्षान्प्रतिमोटयति द्विरदः ॥ २७ ॥

नवमं सप्तमं षष्ठं तृतीयं च लघून्यथ ।
यत्रैकादशके पाद इन्द्रवज्रेति सा यथा ॥ २८ ॥

चन्द्रं निरीक्ष्यादुरितस्वभावा(?)
दुःखेन साध्या कठिनौ स्तनौ ते ।
सर्वास्ववस्थासु च कामतन्त्रे
योग्यासि किंवा बहुनेन्द्रवज्रा ॥ २९ ॥

एभिरेव तु संयुक्ता लघुभिस्त्रैष्टुभी यदा ।
उपेन्द्रवज्रा विज्ञेया लघ्वाद्यमिह केवलम् ॥ ३० ॥

यथा— 'प्रेम्णा श्रिया वर्णविशेषणेन
सितेन कान्त्या सुकुमारभावात् ।
अमी गुणा रूपगुणानुरूपा
वसन्ति ते किं त्वमुपेन्द्रवज्रा ॥ ३१ ॥'

षष्ठं च नवमं चैव लघूनि त्रैष्टुभे यदि ।
गुरूण्यन्यानि पादेषु सा ज्ञेया शालिनी यथा ॥ ३२ ॥

---

1. 'विलम्बमानगतिः' क-ख.

दुःशीलं स्यादल्पकं वा सुशीलं
लोके धैर्यादप्रियं न ब्रवीति ।
तस्माच्छीलं साधुहेतोः सुवृत्तं
माधुर्यार्थं सर्वथा शालिनीव ॥ ३३ ॥

आद्यं तृतीयमन्त्यं च सप्तमं नवमं तथा ।
गुरूण्येकादशे पादे यत्र सा तु रथोद्धता ॥ ३४ ॥

यथा— 'किं त्वया सुभट दूरवर्जितं
नात्मनो न सुहृदां प्रियं कृतम् ।
यत्पलायनपरायणस्य ते
याति धूलिरधुना रथोद्धता ॥ ३५ ॥

आद्यं तृतीयमन्त्यं च दशमं सप्तमं तथा ।
गुरूणि त्रैष्टुभे पादे यत्र सा स्वागता यथा ॥ ३६ ॥

अद्य मे सफलमायतनेत्रे
जीवितं मदनसंस्कृतभावम् ।
आगतासि भवनं मम यस्मा-
त्स्वागतं तव वरोरु निपीड(षीद) ॥ ३७ ॥

षष्ठं तृतीयं नवमं गुरूण्यन्त्यमथापि वा ।
यत्र तु द्वादशे पादे तज्ज्ञेयं तोटकं बुधैः ॥ ३८ ॥

यथा— 'किमिदं कपटाश्रयदुर्विषहं
बहुगण्डमिवोल्बणरूक्षपथम् ।
सुजनप्रियदुर्जनभेदकरं
ननु तोटकवृत्तमिदं प्रकुरु ॥ ३९ ॥'

तृतीयमन्त्यं नवमं पञ्चमं च यदा गुरु ।
द्वादशाक्षरके पादे तदा स्यात्प्रमिताक्षरा ॥ ४० ॥

यथा— 'सित[शोभना] ह्यचपलापरुषा
निभृतापवादविमुखा सततम् ।

अयि कस्यचिद्युवतिरस्ति [यदि]
प्रमिताक्षरा स हि पुमाञ्जगति ॥ ४१ ॥
द्वितीयमन्त्यं दशमं चतुर्थं पञ्चमाष्टमे ।
गुरूणि द्वादशे पादे वंशस्थं जगती तु सा ॥ ४२ ॥
यथा— 'न मे प्रियं यद्बहुमानवर्जिता
कृता प्रिया ते परुषातिभाषणैः ।
तथा च पश्याम्यहमद्य विग्रहं
ध्रुवं हि वंशस्थगता करिष्यति ॥ ४३ ॥'
चतुर्थमन्त्यं दशमं सप्तमं च यदा गुरु ।
भवेद्धि जागते पादे तदा स्याद्धरणीप्लुता ॥ ४४ ॥
यथा— 'परुषवाक्य[1]कर्कशाभिहिता त्वया
भयविलोकनपार्श्वनिरीक्षणा ।
वरतनुः प्रततप्लुतसर्पणै-
रनुकरोति गतैर्हरिणीप्लुतम् ॥ ४५ ॥
सप्तमं नवमं चान्त्यमुपान्त्यं च यदा गुरु ।
द्वादशाक्षरके पादे काममत्तेति सा यथा ॥ ४६ ॥
करजपदविभूषिता यथा त्वं
सुदति दशनविक्षताधरा च ।
गतिरपि चरणारविन्दमन्दा
त्वमसि [खलु] मृगाक्षि काममत्ता ॥ ४७ ॥
आद्यं चतुर्थं दशमं सप्तमं च यदा लघु ।
द्वादशाक्षरके पादे [2]अप्रमेया तु सा यथा ॥ ४८ ॥
न ते काचिदन्या समा दृश्यते स्त्री
गुणैर्यद्वितीया तृतीयापि चास्मिन् ।
ममेयं मतिर्लोकमालोक्य सर्वं
जगत्यप्रमेयासि सृष्टा विधात्रा ॥ ४९ ॥

१. 'कथा' क. २. वृत्तमिदं ग्रन्थान्तरे भुजङ्गप्रयातनाम्ना ख्यातम्.

द्वितीयं पञ्चमं चैव अष्टमैकादशे तथा ।
पादे यत्र लघूनि स्युः पद्मिनीनाम सा यथा ॥ ९० ॥

देहतोयाशया वक्त्रपद्मोज्ज्वला
नेत्रभृङ्गाकुला दन्तहंसैः सिता ।
केशपाशच्छदा चक्रवाकस्तनी
पद्मिनीव प्रिये भासि मे सर्वदा ॥ ९१ ॥

यदि [खलु[2] भवतो द्वौ] नौ तथा म्यौ
यतिविधिरपि [तूर्या[3]]ष्टाभिरिष्टः ।
भवति च जगतीस्थः सर्वदा यः
स इह हि पुटवृत्तं नामतस्तु ॥ ९२ ॥

यथा— 'उपवनसलिलानां बालपद्मे
भ्रमरपरभृतानां कण्ठनादे ।
समद[बहु]विलासे कामिनीनां
कथयति पुटवृत्तं पुष्पमासः ॥ ९३ ॥

द्वितीयान्त्ये चतुर्थे च नवमैकादशे गुरु ।
विच्छेदोऽतिजगत्यां तु चतुर्भिः सा प्रभावती ॥ ९४ ॥

यथा— 'कथं त्विदं कमलविशाललोचने
गृहं घनैः पिहितकरे दिवाकरे ।
अचिन्तयन्त्यभिनववर्षविद्युत-
स्त्वमागता सुतनु यथा प्रभावती ॥ ९५ ॥

त्रीण्यादावष्टमं यत्र दशमं नैधने तथा ।
गुरूण्यतिजगत्यां तु त्रिभिश्छेदैः प्रहर्षिणी ॥ ९६ ॥

यथा— 'भावस्थैर्मधुरकथैः सुभाषितैस्त्वं
साटोपस्खलितविलम्बितैर्गतैश्च ।

---

१. इदं छन्दोऽन्यत्र स्रग्विणीनाम्ना व्यवह्रियते. २. 'चरति विद्यौ' क-ख. ३. 'पु-क्त्या' क-ख.

मानाढ्यैर्हरसि मनांसि कामुकानां
सुव्यक्तं द्युतिजगता[1] प्रहर्षिणीवे[2] ॥ ५७ ॥

षष्ठं च सप्तमं चैव दशमेकादशं लघु ।
त्रयोदशाक्षरे पादे ज्ञेयं मत्तमयूरकम् ॥ ५८ ॥

यथा— 'विद्युन्नद्धाः [शक्रधनू]रञ्जितदेहा
वातोद्धूताः श्वेतबलाकाकृतशोभाः ।
एते मेघा गर्जितनादोज्ज्वलवक्त्रं
प्रावृट्काले मत्तमयूरं कथयन्ति ॥ ५९ ॥'

आदौ द्वे च चतुर्थं वाप्यष्टमैकादशे गुरु ।
अन्त्योपान्त्ये च शक्कर्यां वसन्ततिलका यथा ॥ ६० ॥

चित्रैर्वसन्तकुसुमैः कृतकेशहस्ता
स्रग्दाममाल्यरचनानुविभूषिताङ्गी ।
नानावसन्तकविभूषितगण्डपाली
साक्षाद्वसन्ततिलकेव विभाति नारी ॥ ६१ ॥

पञ्चादौ शक्करीपादे गुरूणि त्रीणि चान्ततः ।
पञ्चाक्षरादौ च यतिरसंबाधा तु सा स्मृता ॥ ६२ ॥

यथा— 'मानालोकज्ञः श्रुतबलकुलशीलाढ्यो
यस्मिन्संमानं न सदृशमनुपश्येद्धि ।
गच्छेत्तं त्यक्त्वा द्रुतगतिरपरं देशं
कीर्णां नानार्थैरवनिरियमसंबाधा ॥ ६३ ॥'

चत्वार्यादौ गुरूणि स्युर्दशमैकादशे तथा ।
अन्त्योपान्त्ये च शक्कर्याः पादे तु शरभा यथा ॥ ६४ ॥

एषा कान्ता व्रज[ति] ललितं वेपमाना
गुल्मच्छन्नं चितमुरुनगैः संप्रवृद्धम् ।

---

१. 'द्युतिजगते गती' क-ख. २. 'वा' क-ख.

हाहा कष्टं किमिदमिति नो वेद्मि मूढो
व्यक्तं क्रोधाच्छरभललितं कर्तुकामा ॥ ६५ ॥
आदौ षड्दशमं चैव लघु चैव त्रयोदशम् ।
यत्र पञ्चदशे पादे ज्ञेया नान्दीमुखी तु सा ॥ ६६ ॥
यथा— 'न खलु तव कदाचित्क्रोधताम्रायताक्षं
भ्रुकुटिचलितभङ्गं दृष्टपूर्वं मयास्यम् ।
किमिह बहुभिरुक्तैर्या ममेच्छा हृदिस्था
त्वमसि मधुरवाक्यादेव नान्दीमुखी च ॥ ६७ ॥'
आद्यं षष्ठं चतुर्थं च नैधनं च गुरूण्यथ ।
षोडशाक्षरके पादे गजं विलसितं तु तत् ॥ ६८ ॥
यथा— 'तोयधरैः सुधीरघनपटुपटहरवैः
सर्जकदम्बनीपकुटजकुसुमसुरभिः ।
कन्दलमिन्द्रगोपकरचितमवनितलं
वीक्ष्य करोत्यसौ वृषभगजविलसित[क]म् ॥ ६९ ॥'
आद्यात्पराणि पञ्चैव द्वादशं सत्रयोदशम् ।
अन्ये द्वे यत्र दीर्घाणि प्रवरं ललितं हि तत् ॥ ७० ॥
यथा— 'नखालीढं गात्रं विकचदशनं चोष्ठगण्डं
शिरः पुष्पोन्मिश्रं प्रतिलुलितकेशालकान्तम् ।
गतिर्मन्दायामा वदनमपि संभ्रान्तनेत्र-
महो श्लाघ्यं वृत्तं प्रवरललितं कामचेष्टम् ॥ ७१ ॥
आद्यात्पराणि [प]ञ्चैव द्वादशं सत्रयोदशम् ।
अन्त्यं सप्तदशे पादे शिखरिण्यां गुरूणि च ॥ ७२ ॥
यथा— 'महानद्याभोगं पुलिनमिव ते भाति जघनं
तथा सन्नेत्राढ्यं भ्रमरसहितं पङ्कजमिव ।
तनुस्पर्शश्चायं सुतनु सुकुमारो न परुषः
स्तनाभ्यां तुङ्गाभ्यां शिखरिणि ममाभासि दयिते ॥७३॥'

---

१. वृत्तमेतद्ग्रन्थान्तरे मालिनीनाम्ना प्रसिद्धम्.

यत्र पञ्च लघून्पादौ त्रयोदशचतुर्दशे ।
षोडशैकादशे चैव तत्स्याद्वृषभचेष्टितम् ॥ ७४ ॥

यथा— 'जलधररवं श्रुत्वा दीप्तसरोत्सवलालितो
विलिखति महीं दर्पाच्छृङ्गैर्मुहुः प्रतिनर्द्य च ।
स्वयुवतिवृतो गोष्ठाद्गोष्ठं प्रयाति च नो भिया
वृषभललितं चित्रं वृत्तं करोति च शाद्वले ॥ ७५ ॥'

चत्वार्यादौ च दशमं गुरूण्यथ त्रयोदशम् ।
चतुर्दशं तथा पञ्च एकादशमथापि च ॥ ७६ ॥
यदा सप्तदशे पादे शेषाणि तु लघून्यपि ।
भवन्ति यस्मिन्सा ज्ञेया श्रीधरा नामतो यथा ॥ ७७ ॥

स्नानैश्चूर्णैः सुखसुरभिभिर्गन्धसारैश्च धूपैः
पुष्पैर्माल्यैः शिरसि रचितैर्वस्त्रयोगैश्च तैस्तैः ।
नानारत्नैः कनकखचितैरङ्गसंभोगसंस्थै-
र्व्यक्तं कान्ते कमलनिलये श्रीधरा त्वं विभासि ॥ ७८ ॥

आद्यं चतुर्थं षष्ठं च दशमं नैधनं गुरु ।
तद्वंशपत्रपतितं दशभिः सप्तभिर्यतिः ॥ ७९ ॥

यथा— 'एष गजोऽद्रिमस्तकतटे कलभपरिवृतः
क्रीडति वृक्षगुल्मगहने कुसुमभरनते ।
मेघरवं निशम्य मुदितः पवनजवसमः
सुन्दरि वंशपत्रपतितं पुनरपि कुरुते ॥ ८० ॥

द्वितीयमन्त्यं षष्ठं च अष्टमं द्वादशं तथा ।
चतुर्दशं पञ्चदशं पादे सप्तदशाक्षरे ॥ ८१ ॥
भवन्ति यत्र दीर्घाणि शेषाणि च लघून्यथ ।
विलम्बितगतिस्तत्र विज्ञेया नामतो यथा ॥ ८२ ॥

---

१. ग्रन्थान्तरेऽस्य च्छन्दसो हरिणीनाम्ना प्रसिद्धिः. २. 'ललितमृषभः' इति पाठो युक्तः. ३. 'उपान्त्यान्त्ये' इति साधीयान्पाठः. ४. वृत्तमिदमन्यत्र मन्दाक्रान्ताख्यया प्रसिद्धम्.

विघूर्णितविलोचना पृथुविकीर्णहारा पुनः
प्रलम्बरसना स्खलल्ललितपादमन्दक्रमा ।
न मे प्रियमिदं जनस्य बहुमान........
मदेन विवशा विलम्बितगतिः कृता त्वं प्रिये ॥ ८३ ॥
पञ्चादौ [1]पञ्चदशमं द्वादशं सानुगं गुरु ।
चतुर्दशं तथा [2]पञ्च चित्रलेखा धृतौ स्मृता ॥ ८४ ॥

यथा—'नानारत्नाढ्यैर्बहुभिरधिकं भूषणैरङ्गसंस्थै-
र्नानागन्धाढ्यैर्मदनजनकैरङ्गरागैर्विचित्रैः ।
केशैः स्नानाढ्यैः कुसुमनिचितैर्वस्त्रवेषैश्च तैस्तैः
कान्ते संक्षेपः किमिति बहुना चित्रलेखेव भासि ॥ ८५ ॥'

अन्त्यं सप्तदशं चैव षोडशं च चतुर्दशम् ।
द्वादशे साग्रगं चैव षष्ठमष्टममेव च ॥ ८६ ॥
त्रीण्यादौ च गुरूणि स्युर्यस्मिंस्त्वेकोनविंशके ।
पादे लघूनि शेषाणि तच्छार्दूलविक्रीडितम् ॥ ८७ ॥

यथा—'नानाशस्त्रशतघ्नितोमरहताः प्रभ्रष्टसर्वायुधा
निर्भिन्नोदरपादहस्तवदना निर्वासिताः शत्रवः ।
धैर्योत्साहपराक्रमप्रभृतिभिस्तैस्तैर्विचित्रैर्गुणै-
र्वृत्तं ते रिपुघाति लाति समरे शार्दूलविक्रीडितम् ॥८८॥'

चत्वार्यादौ च षष्ठं च सप्तमं सचतुर्दशम् ।
तथा पञ्चदशं चैव षोडशं नैधनं तथा ॥ ८९ ॥
एतानि तु गुरूणि स्युः शेषाणि तु लघून्यथ ।
पादे यत्र कृतौ ज्ञेया नाम्ना [3]सुवदना तु सा ॥ ९० ॥

यथा—'नेत्रे लीलालसे ते कमल[दल]निभे भ्रूचापनिहिते
गण्डौष्ठं पीनमध्यं सममहितघनं स्निग्धाश्च दशनाः ।

---

१. 'अवसाने द्वे' इति पाठः साधुः. २. 'पञ्चदशं' इति पाठो युक्तः. ३. अत्र सप्तसु षट्सु च यतिः.

कर्णौ पार्श्वावलम्बौ चिबुकमपि नतं घोणा सुरुचिरा
सर्वस्मिन्मर्त्यलोके वरतनु विदितास्येका सुवदना ॥ ९१ ॥'
चत्वार्याद्यौ च षष्ठं च सप्तमं च चतुर्दशम् ।
अष्टादशं [सप्तदशं] तथा पञ्चदशं पुनः ॥ ९२ ॥
अन्त्योपान्त्ये गुरूण्यत्र लघून्यन्यानि सर्वदा ।
एकविंशतिके पादे स्रग्धरानाम सा यथा ॥ ९३ ॥
चूताशोकारविन्दैः कुरुबकतिलकैः कर्णिकारैः शिरीषैः
पुंनागैः पारिजातैर्बकुलकुवलयैः किंशुकैः सातिमुक्तैः ।
एतैर्नानाप्रकारैः कुसुमसुरभिभिर्विप्रकीर्णैश्च तैस्तै-
र्वासन्तैः पुष्पवृन्दैर्नरवर वसुधा स्रग्धरे[वाव]भाति ॥ ९४ ॥
चतुर्थमाद्यं षष्ठं च दशमं द्वादशं तथा ।
षोडशाष्टादशे चैव नैधनं च गुरूण्यथ ॥ ९५ ॥
द्वाविंशत्यक्षरे पादे शेषाणि च लघूनि तु ।
भवन्ति यत्र तु ज्ञेयं[1] मद्रकं नामतो यथा ॥ ९६ ॥
उ[2]न्नतमेकहस्तचरणं द्वितीयकररेचकं सविनतं
वंशमृदङ्गवाद्यमधुरं विचित्रकरणान्वितं बहुविधम् ।
मद्रकमेतदद्य सुभगैर्विदग्धगतिचेष्टितैः सललितै-
र्नृत्यसि वि[3]भ्रमाकुलपदं वरोरुललितक्रियं समरसम् ॥ ९७ ॥
[4]........................................ ।
अन्त्यमेकोनविंशं च पञ्चमं च गुरूण्यथ ॥ ९८ ॥
शेषाणि तु ल[5]घूनि स्युर्विकृतौ चरणेषु च ।
वृत्तं तदश्वललितं विज्ञेयं नामतो यथा ॥ ९९ ॥
विविधतुरङ्गनागरथयोधसंकुलमलं बलं समुदितं
शरशतशक्तिकुन्तपरिघासियष्टिविततं बहुप्रहरणम् ।

---

१. अत्र वृत्ते दशभिर्द्वादशभिश्च यतिः. २. 'उत्फुल्लं' क-ख. ३. 'सुविभ्रमाकुलपदं' क-ख. ४. त्रुटिचिह्नं पुस्तकद्वयेऽपि नास्ति, परं 'एकादशं सप्तदशं सप्तमं सत्रयोदशम्' इति प्रकृतवृत्तलक्षणपूर्तिकरं श्लोकार्धं कल्पनीयमेव. ५. 'गुरूणि' क-ख.

रिपुशतमुक्तशस्त्ररवभिन्नशङ्कितभटं भयाकुलमिदं
कृतमभिवीक्ष्य संयुगमुखे ममेप्सितगुणं तदश्वललितम् ॥ १०० ॥
षडादावष्टमं चैव ह्येकादशचतुर्दशे ।
विंशं सप्तदशं चैव त्रयोविंशं तथैव च ॥ १०१ ॥
एतानि च लघूनि स्युः शेषाणि च गुरूण्यथ ।
चतुर्विंशाक्षरे पादे मेघमालेति सा यथा ॥ १०२ ॥
पवनजवसमाहृता तीव्रगम्भीरनादा बलाकावलीमेखला
क्षितिधरसदृशोर्ध्वरूपा महाधूमपुञ्जायमानाम्बुगर्भोद्भवा ।
सुरपतिधनुरुज्ज्वलाबद्धशोभा तडिद्द्योतसंनाहबन्धोज्ज्वला
गगनतलविचारिणी प्रावृषि प्रोन्नता मेघमालाधिकं शोभते॥१०३॥
आद्यं चतुर्थं च [तथा] पञ्चमं षष्ठमेव च ।
नवमं दशमं चैव अन्त्यं चैव गुरूण्यथ ॥ १०४ ॥
लघून्यन्यानि शेषाणि पादे स्युः पञ्चविंशके ।
वृत्तज्ञैः सा तु विज्ञेया क्रौञ्चपादीति नामतः ॥ १०५ ॥

यथा—

'यः किल दास्यं विद्रुतसोमं क्रतुवरमनुपममपगतकलुषं
पातितयूपं क्षिप्तकपालं विवसनसममिव सपशुकसहितम् ।
कार्मुकमुक्तेनाशु चकार व्यपगतसुरगणपितृगणमिषुणा
नित्यमसौ ते दैत्यगणारिः प्रददतु(व्यथयतु)मखमिव रिपुगणमखिलम्'
अष्टावादौ गुरूणि स्युस्तथा चैकोनविंशतिम् ।
एकविंशं तथा चैव चतुर्विंशं सनैधनम् ॥ १०७ ॥
एतानि गुरुसंज्ञानि पादे षड्विंशकाक्षरे ।
यत्र नाम्ना तथा ज्ञेयं तद्भुजङ्गविजृम्भितम् ॥ १०८ ॥

---

१. अस्य वृत्तस्य 'क्रौञ्चपदा' इत्यपि नाम, तत्र पञ्चभिः पञ्चभिरष्टभिः सप्तभिश्च यतिरुच्यते. २. अत्राष्टभिरेकादशभिः सप्तभिश्च यतिः क्रियते.

यथा—

'रूपोपेतां देवैः स्पृष्टां समदगजविलसितगतिं निरीक्ष्य तिलोत्तमां

प्रादक्षिण्यं प्राप्तां द्रष्टुं बहुवदनमचलनयनं शिरःशतवाहरः ।

दीर्घं निःश्वस्यान्तर्गूढं स्तनवदनजघनकलितां निरीक्ष्य तथा पुनः

कण्ठे न्यस्तं देवेन्द्रेण प्रवरमणिकनकवलयं भुजङ्गविजृम्भितम् ॥१०९॥'

एतानि समवृत्तानि मयोक्तानि द्विजोत्तमाः ।
विषमार्धसमानं तु पुनर्वक्ष्यामि लक्षणम् ॥ ११० ॥
यत्र पादास्तु विषमा नानावृत्तसमुद्भवाः ।
ग्रथिताः पादयोगेन तद्वृत्तं विषमं स्मृतम् ॥ १११ ॥
द्वौ समौ द्वौ च विषमौ वृत्तेऽर्धविषमे तथा ।
सर्वपादैस्तु विषमैर्वृत्तं विषममुच्यते ॥ ११२ ॥
ह्रस्वाद्यमथ दीर्घाद्यं दीर्घं ह्रस्वमथापि वा ।
युग्मौजविषमैः पादैस्तद्वृत्तमसमं स्मृतम् ॥ ११३ ॥
पादे सिद्धे समं सिद्धं विषमं सार्वपादिकम् ।
द्वयोरर्धसमं विद्यादेष भेदस्तु पादशः ॥ ११४ ॥
छेदास्तु ये मया प्रोक्ताः समवृत्तविकल्पिताः ।
त्रिकैर्विषमवृत्तानां संप्रवक्ष्यामि लक्षणम् ॥ ११५ ॥
सौभागः प्रथमे पादे स्त्रौलौ यत्र तथापरे (?) ।
युग्मेऽर्धविषमौ पादौ ज्ञेया पथ्या तु सा त्रिकैः ॥ ११६ ॥

यथा—प्रियदैवतमित्रासि प्रियसंबन्धिबान्धवा ।
प्रियदानरता पथ्या दयिता त्वं प्रियासि मे ॥ ११७ ॥

[म्जौ गा]विति भवेत्पूर्वो [य्मौ ल्गा]विति तथापरः ।
भौ ल्गौ पादस्तृतीयः स्यात्तथा [ज्सौ ल्गौ] चतुर्थकः

यथा—नैवाचारो न ते मित्रं न संबन्धिगुणप्रिया ।
सर्वविषमा·········यथा न भवसि प्रिये ॥ ११९ ॥

अयुजोर्लक्षणं ह्येतद्विपरीतं तु यत्र तु ।
पथ्या हि विपरीता सा विज्ञे·····················॥ १२० ॥
··············································· ।
··············································· ॥ १२१ ॥
चतुर्थादक्षराद्यत्र त्रिलघुः स्यादयुक्ततः ।
अनुष्टुब्विपुला सा तु विज्ञेया नामतो यथा ॥ १२२ ॥
न खल्वस्याः प्रियतमः श्रोतव्यं व्याहृतं सखा ।
नारदस्य प्रतिकृतिः श्रूयते विपुला हि सा ॥ १२३ ॥
विपुला वा युजि ज्ञेया लघुत्वात्सप्तमस्य तु ।
सर्वत्र सप्तमस्यैव केषांचिद्विपुलैव तु ॥ १२४ ॥
यथा—संक्षिप्ता वज्रमध्ये हि हेमकुम्भनिभस्तनी ।
विपुलासि प्रिये कट्यां शरच्चन्द्रनिभानने ॥ १२५ ॥
गङ्गेव मेघापगमे आप्लावितवसुंधरा ।
कूलवृक्षानारुजती स्रवन्ती विपुलान्बलान् ॥ १२६ ॥
एवं विविधयोगैस्तु पथ्यापादा भवन्ति हि ।
युग्मौजविषमैः पादैः शेषैरन्यैस्त्रिकैस्तथा ॥ १२७ ॥
गुर्वन्त्रकसर्वलघुस्त्रिको नित्यं हि नेष्यते ।
प्रथमादक्षराद्यत्र चतुर्थात्प्राग्लघुः स्मृतः ॥ १२८ ॥
पथ्यापादं समास्थाप्य त्रीण्यन्ते तु गुरूण्यथ ।
भवन्ति पादे सततं यत्र तद्वक्त्रमिष्यते ॥ १२९ ॥
यथा—दन्तक्षताधरं सुभ्रु जागरग्लाननेत्रं च ।
रतिसंभोगखिन्नं ते दर्शनीयतरं वक्त्रम् ॥ १३० ॥
पादे षोडश मात्रास्तु गाथांशकविकल्पिताः ।
चतुर्भिरंशकैर्ज्ञेया वृत्तज्ञैर्वानवासिका ॥ १३१ ॥
यथा—असंस्थितपादा विह्वलाङ्गी मदस्खलितचेष्टितैर्मनोज्ञा ।
कयास्य(?) विंवरोरु सुरतकाले विषमा किं वा नवासिका त्वम् १३२

१. 'विवृतोरु' इति स्यात्.

म्जौ स्गौ च प्रथमे पादे [तथा] चैव तृतीयके ।
केतुमत्यां गणः प्रोक्तो भ्रौ न्गौ गश्च सदा बुधैः ॥ १३३ ॥

यथा—स्फुरितं····चलितनेत्रं रक्तकपोलमम्बुजदलाक्षम् ।
किमिदं रुषापहृतशोभं केतुमतीमुखाकृतिमुखं ते ॥ १३४ ॥

अपरवक्त्रस्यादौ तु नौ [म्लौ]गिति त्रिकत्रिकम् ।
नजौ जरौ द्वितीये तु चतुर्थे पुनरेव तु ॥ १३५ ॥

यथा—सुरतरुजलपरीतलोचनं जलादनिरुद्धमिवेन्दुमण्डलम् (?) ।
किमिदमपरवक्त्रमिव ते शशिवदनेऽद्य मुखं पराङ्मुखम् ॥ १३६ ॥

नौ र्यो तु प्रथमे पादे न जौ जो र्गस्तथापरे ।
पादौ तु पुष्पिताग्रायां यथैतावपरौ तथा ॥ १३७ ॥

यथा— पवनरयविधूतचारुशाखं
प्रमुदितकोकिलकण्ठनादरम्यम् ।
मधुकरपरिगीयमानकक्षं
वरतनु पश्य वनं सुपुष्पिताग्रम् ॥ १३८ ॥

स्जौ स्लौ चादौ यथा न्सौ ज्गौ भ्नौ ज्लौ गश्च तथा पुनः ।
स्जौ स्लौ गस्त्रिका ह्येत उद्गतायाः प्रकीर्तिताः ॥ १३९ ॥

यथा—तव रोमराजिरतिभाति सुतनु मदनस्य मञ्जरी ।
तानिकमवित्यतिना (?) भ्रमरावली च कुसुमात्समुद्गता ॥ १४० ॥

स्जौ·····························वेति तृतीयके ।
·················चतुर्थे पञ्चमे सुललिद्गता ॥ १४१ ॥

यथा—ललिताकुलभ्रमिचारुवसनकरपल्लवा हि मे ।
प्रविकसितकमलकान्तमुखी प्रतिभासि देवि सुरतश्रमातुरा॥१४२॥

एवमेतानि वृत्तानि समानि विषमाणि च ।
नाटकाद्येषु काव्येषु प्रयोक्तव्यानि सूरिभिः ॥ १४३ ॥

सन्त्यन्यान्यपि वृत्तानि यान्युक्तानीह पण्डितैः ।
न च तानि मयोक्तानि न शोभां जनयन्ति हि ॥ १४४ ॥

याऽन्यतः परमत्र स्युर्गीतकैस्तानि योजयेत् ।
ध्रुवाविधाने व्याख्यास्ये तेषां चैव विकल्पनम् ॥ १४५ ॥
वृत्तलक्षणमेतत्तु समासेन मयोदितम् ।
अत ऊर्ध्वं प्रवक्ष्यामि आर्याणामपि लक्षणम् ॥ १४६ ॥
पथ्या च विपुला चैव चपला मुखतोऽपरा ।
जघनचपला चैव आर्याः पञ्च प्रकीर्तिताः ॥ १४७ ॥
अर्धाष्टमगणार्धा च सर्वैवार्या प्रकीर्तिता ।
षष्ठश्च द्विविकल्पस्तु नैधने ह्येकसंस्थितः ॥ १४८ ॥
पश्चाद्वा यो गणः षष्ठ एकमात्रः स उच्यते ।
द्विविकल्पस्तु यः षष्ठो गुरुमध्यो भवेत्तु सः ॥ १४९ ॥
यथा सर्वलघुश्चैव यतिसंज्ञासमाश्रिता ।
सा द्वितीया द्विलघुका सप्तमे प्रथमे यतिः ॥ १५० ॥
गुरुमध्यविहीनस्तु चतुर्गणसमन्वितः ।
अयुग्गणो विधातव्यः प्रमाणश्चैव पञ्चमः ॥ १५१ ॥
प्रथमतृतीयौ पादौ द्वादशमात्रौ भवेत्तु सा पथ्या ।
रक्तमृदुपद्मनेत्रासितदीर्घबहुलमृदुकेशी ॥ १५२ ॥
कस्य तु पृथुमृदुजघना तनुबाहुंसोदरी पथ्या ।
विपुलान्या खलु गदिता पूर्वोदितलक्षणोपेता ॥ १५३ ॥
विपुलजघनवदनस्तननयनैस्ताम्राधरोष्ठकरचरणैः ।
आयतनासागण्डैर्ललाटकर्णैः शुभा कन्या ॥ १५४ ॥
द्वितीयश्च चतुर्थश्च गुरुमध्यगतो भवेत् ।
उभयोरर्धयोर्यत्र विज्ञेया चपला त(य)था ॥ १५५ ॥
उद्धटगमिनी परुषभाषिणी कामचिह्नकृतवेषा ।
जानाति मांसयुक्ता सुराप्रिया सर्वतश्चपला ॥ १५६ ॥

पूर्वार्धलक्षणं ह्येतद्यस्याः सा चपलामुखे ।
[1]........................................................ ॥ १५७ ॥

आर्यामुखे तु चपला तथापि चर्या न मे यतः सा तु ।
दक्षा गृहकृत्येषु तथा दुःखे भवति दुःखार्ता ॥ १५८ ॥

[2]........................................................ ।
यद्येतदन्यत्र भवेच्चपला जघन[3]........................ ॥ १५९ ॥

वरमृगनयने चपलासि वरोरु शशाङ्कदर्पणनिभास्ये ।
कामस्य सारभूतेन पूर्वमदचारुजघनेन ॥ १६० ॥

उभयोरर्धयोरेव यत्रैव लक्षणं भवेत् ।
महत्पूर्वानुवृत्तज्ञैर्विज्ञेया चपला तु सा ॥ १६१ ॥

चतुः पञ्चप्रकाराणां चतुष्काणां विशेषतः ।
प्रस्तारयोगमासाद्य बाहुल्यं संप्रदर्शयेत् ॥ १६२ ॥

पञ्चपञ्चाशदाद्या तु त्रिंशदाद्या तथैव च ।
आर्या त्वक्षरपिण्डेन विज्ञेयात्र प्रयोक्तृभिः ॥ १६३ ॥

त्रिंशतस्त्वथ वर्णेभ्यो लघुवर्णत्रयं भवेत् ।
शेषाणि गुरुसंज्ञानि एवं सर्वत्र निर्दिशेत् ॥ १६४ ॥

सर्वेषां यानि वृत्तानि पूर्वमुक्तरसंख्यया ।
विकल्पं गणयित्वा तु संख्यापिण्डेन दर्शयेत् ॥ १६५ ॥

आर्यागीतिरथार्ये च केवलस्त्वष्टभिर्गणैः ।
इतरार्धेऽपि षष्ठः स्या····विकल्पो भवेद्गणः ॥ १६६ ॥

एवं चतुर्विधैर्वृत्तैर्नानाछन्दःसमुद्भवैः ।
काव्यबन्धास्तु कर्तव्याः षट्त्रिंशल्लक्षणान्विताः ॥ १६७ ॥

इति श्रीभारतीये नाट्यशास्त्रे छन्दोवृत्तविधिर्नाम पञ्चदशोऽध्यायः ।

---

१.२.३. त्रुटिचिह्नं पुस्तकद्वितयेऽपि न दृश्यते.

षोडशोऽध्यायः ।

विभूषणं चाक्षरसंगतिश्च शोभाभिमानो गुणकीर्तनं च ।
प्रोत्साहनोदाहरणे[1] निरुक्तं गुणानुवादो[2]........श्च हेतुः ॥ १ ॥
सारूप्यमिथ्याध्यवसायसिद्धिपदोच्चयाक्रन्दमनोरथाश्च ।
आख्यानवादाः[3] प्रतिषेधपृच्छादृष्टाङ्गनिर्भासनसंशयाश्च ॥ २ ॥
आशीः प्रियं चै(वै)कपटं क्षमा च प्राप्तिश्च पश्चात्तपनं तथैव ।
अर्थायु(थानु)वृत्तिर्ह्युपवृ(प)त्तियुक्ती कार्या तु(नु) नीति(ती): परिदेवनं च ॥
षड्विंशदेतानि तु लक्षणानि प्रोक्तानि वै भूषणसंमितानि ।
काव्येषु भावार्थमतानि तज्ज्ञैः सम्यक्प्रयोज्यानि यथारसं तु ॥ ४ ॥
अलंकारैर्गुणैश्चैव बहुभिः समलंकृतम् ।
भूषणैरिव विन्यस्तैस्तद्भूषणमिति स्मृतम् ॥ ५ ॥
यत्रार्थैरक्षरैः क्लिष्टैर्विचित्रपुष्पवर्णितम् ।
तमप्यक्षरसंघातं विद्याल्लक्षणसंज्ञितम् ॥ ६ ॥
सिद्धैरर्थैः समं कृत्वा........................ ।[5]
यत्र श्लक्ष्णविचित्रार्था सा शोभेत्यभिधीयते ॥ ७ ॥
वार्यमाणस्तु बहुभिर्वचनैः कार्ययुक्तिभिः ।
न यः पर्यवतिष्ठेत सोऽभिमानस्तु संज्ञितः ॥ ८ ॥
कीर्त्यमानैर्गुणैर्यत्र विविधार्थसमुद्भवैः ।
लोके गुणातिरिक्तानां बहूनां यत्र नामभिः ॥ ९ ॥
एकोऽभिशब्द्यते यस्तु विज्ञेयं गुणकीर्तनम् ।
[6]...........................................॥ १० ॥
सिद्धान्बहून्प्रधानार्थां युक्त्या यत्र प्रयुज्यते ।
विशेषयुक्तं वचनं विज्ञेयं तद्विशेषणम् ॥ ११ ॥
यत्रैकस्यापि शब्दस्य दर्शनात्सुबहून्यपि ।
यान्ति सिद्धिमनुक्तादि तदुदाहरणं स्मृतम् ॥ १२ ॥

---

१. 'विशेषणोदाहरणे' इति भाति. २. 'अतिशयः' इत्युचितम्. ३. 'याच्ञा' इति समासगर्भितः पाठो युक्तः प्रतिभाति. ४. 'दृष्टान्त' इत्युचितम्. ५.६. त्रुटिचिह्नं पुस्तकद्वयेऽपि नास्ति.

२२

निरुक्तं विविधं प्रोक्तं तथ्यं वातथ्यमेव च ।
सिद्धिः प्रसाधितं तथ्यमतथ्यं च प्रसाधितम् ॥ १३ ॥
गुणानुवादो हीनानामुत्तमैरुपमाकृतः ।
उत्तमार्थविशेषो यः स चाप्यतिशयः स्मृतः ॥ १४ ॥
बहूनां भाष्यमाणानामनेकार्थविनिर्णयात् ।
सिद्धौ समानवचनं हेतुरित्यभिसंज्ञितः ॥ १५ ॥
अपदेशस्तु परोक्षो यस्मादुत्पद्यतेऽनुकरणेन ।
लक्षणसमानकरणात्सारूप्यं तत्तु निर्देश्यम् ॥ १६ ॥
अभूतपूर्वे यत्रार्थे तुल्यस्यार्थस्य निर्णयः ।
स मिथ्याध्यवसायस्तु प्रोच्यते काव्यलक्षणे ॥ १७ ॥
बहूनां तु प्रधानानां मध्ये यन्नाम कीर्त्यते ।
एकार्थसाधनकृतं सा सिद्धिरिति कीर्त्यते ॥ १८ ॥
गुणैर्बहुभिरेकार्थैः पदैर्यः संप्रशस्यते ।
[1]पदोद्धटां तु तद्विद्यान्नामार्थमथनात्मकम् ॥ १९ ॥
आत्मभावेष्वपत्यस्य परसादृश्ययुक्तिभिः ।
तीव्रार्थभाषणं यत्स्यादाक्रन्दः स तु कीर्तितः ॥ २० ॥
हृदयस्थस्य भावस्य सु[स्प]ष्टार्थप्रदर्शकम् ।
अन्यापदेशकथनं मनोरथ इति स्मृतः ॥ २१ ॥
अपृष्टैरथ वा पृष्टैर्निर्णयः क्रियते तु यः ।
आख्यानमिति तज्ज्ञेयं लक्षणं नाटकाश्रयम् ॥ २२ ॥
आदौ यत्क्रोधजननमन्ते हर्षप्रवर्धनम् ।
यत्तु प्रियं पुनर्वाक्यं सा याच्ञा परिकीर्तिता ॥ २३ ॥
कार्येषु विपरीतेषु यदि कश्चित्प्रवर्तते ।
यत्राकारोद्भवैर्वाक्यैरात्मानमथवा परम् ॥ २४ ॥
[2]........................................।
पृच्छत्यभिनयेनार्थं सा पृच्छेत्यभिसंज्ञिता ॥ २५ ॥

---

१. 'पदोच्चयस्तु तं' इत्युचितम्. २. पुस्तकद्वयेऽपि त्रुटिचिह्नं नास्ति, परं तु प्रतिषेधलक्षणात्मकं श्लोकार्धमधिकं वापेक्षते.

सिद्धं पूर्वोपलब्धौ यः समत्वमुपपादयेत् ।
निदर्शनकृतस्तज्ज्ञैः स दृष्टान्त इति स्मृतः ॥ २६ ॥
अनेकयुक्ति यद्वाक्यमनेकार्थप्रसाधकम् ।
अनेकवाक्यसंयुक्तं भासनं नाम तद्भवेत् ॥ २७ ॥
अपरिज्ञाततत्त्वार्थं यत्र वाक्यं समाप्यते ।
अनेकत्वाद्विचाराणां संशयः परिकीर्तितः ॥ २८ ॥
यथा शास्त्रार्थसंपन्नां मनोरथसमुद्भवाम् ।
अत्रार्थनीयामन्यां वा विदुस्तामाशिषं बुधाः ॥ २९ ॥
आदौ यत्क्रोधजननमन्ते हर्षप्रवर्धनम् ।
तत्प्रियं वचनं ज्ञेयमाशीर्वादसमन्वितम् ॥ ३० ॥
छलयुक्त्या त्वन्येषामभिसंधानाभिभावकण्टकम् ।
द्वित्रप्रयोगयुक्तौ विज्ञेयः कपटसंघातः ॥ ३१ ॥
दुर्जनोदाहृतै रूक्षैः सभामध्येऽतिताडितः ।
अक्रोधः क्रोधजननैर्वाक्यैर्यः सा क्षमा भवेत् ॥ ३२ ॥
दृष्टैर्वावयवं कश्चिद्भावो यत्रोपमीयते ।
प्राप्तिं तामपि जानीयाल्लक्षणं नाटकाश्रयम् ॥ ३३ ॥
अकार्यं सहसा कृत्वा कृत्वा कार्यमथापि वा ।
संतापो मनसो यस्तु पश्चात्तापः प्रकीर्तितः ॥ ३४ ॥
प्रश्रयेणार्थसंयुक्तं यत्परस्यानुवर्तनम् ।
स्नेहाद्दाक्षिण्ययोगाद्वा सानुवृत्तिस्तु संज्ञिता ॥ ३५ ॥
प्राप्तानां यत्र दोषाणां क्रियते शमनं पुनः ।
सा ज्ञेया ह्युपपत्तिस्तु लक्षणं नाटकाश्रयम् ॥ ३६ ॥
साध्यते योऽर्थसंबन्धो महद्भिः समवायतः ।
परस्परानुकूल्येन या(सा) युक्तिः परिकीर्तिता ॥ ३७ ॥
यत्रापसारयन्दोषं गुणमर्थेन योजयेत् ।
गुणातिवादो दोषाद्वा कार्यं तदिह कीर्तितम् ॥ ३८ ॥

अपूर्वक्रोधजनितमपराधं प्रमार्जयेत् ।
सेवार्थं मधुरं वाक्यमनुनीतिः प्रकीर्तिता ॥ ३९ ॥
यद्दोषैरन्यनामोक्तैः प्रसिद्धार्थैः प्रयोजयेत् ।
अन्यत्रार्थेन संबन्धो ज्ञेयं तत्परिदेवनम् ॥ ४० ॥
उपमा दीपकं चैव रूपकं यमकं तथा ।
काव्यस्यैते ह्यलंकाराश्चत्वारः परिकीर्तिताः ॥ ४१ ॥
यत्किंचित्काव्यबन्धेषु सादृश्येनोपमीयते ।
उपमा नाम सा ज्ञेया गुणाकृतिसमाश्रया ॥ ४२ ॥
एकस्यैकेन सा कार्यानेकेनाप्यथवा पुनः ।
अनेकस्य तथैकेन बहूनां बहुभिस्तथा ॥ ४३ ॥
तुल्यं ते शशिना वक्त्रमिति ह्येककृता भवेत् ।
एकस्य बहुभिः सा स्यादुपमा नाटकाश्रया ॥ ४४ ॥
शशाङ्कवत्प्रकाशन्ते ज्योतींषीति भवेत्तु या ।
एकस्यानेकविषया सोपमा परिकीर्तिता ॥ ४५ ॥
श्येनबर्हिणभासानां तुल्यार्थं इति या भवेत् ।
एकस्य बहुभिः साम्यादुपमा नाटकाश्रया ॥ ४६ ॥
तुल्यं ते शशिना वक्त्रमित्येकेऽनेकसंश्रया ।
बहूनां बहुभिर्ज्ञेया घना इव गजा इति ॥ ४७ ॥
प्रशंसा चैव नितम्बाकल्पिता सदृशी तथा ।
किंचिच्च सदृशी ज्ञेया ह्युपधा(मा) पञ्चधा पुनः ॥ ४८ ॥

प्रशंसाया यथा—

दृष्ट्वा तु तां विशालाक्षीं तुतोष मनुजाधिपः ।
मुनिभिः साधितां कृच्छ्रात्सिद्धिं मूर्तिमतीमिव ॥ ४९ ॥

निन्दा यथा—

सा तं सर्वगुणैर्हीनं सस्वजे कर्कशच्छविम् ।
वानकं नकिनं(?)वल्ली दवदाघमिव द्रुमम् ॥ ५० ॥

कल्पिता यथा—

क्षरन्तो दानसलिलं लीलामन्थरगामिनः ।
मतङ्गजा विराजन्ते जंगमा इव पर्वताः ॥ ५१ ॥

सदृशी यथा—

यत्त्वयाद्य कृतं कर्म परचित्तानुरोधिना ।
सदृशं न तथैव स्याददतिमानुषकर्मणः ॥ ५२ ॥

किंचित्सदृशी यथा—

संपूर्णचन्द्रवदना नीलोत्पलदलेक्षणा ।
मत्तमातङ्गगमना संप्राप्तेयं सखी मम ॥ ५३ ॥
उपमाया बुधैरेते भेदा ज्ञेयाः समासतः ।
ये शेषा लक्षणे नोक्तास्ते ग्राह्याः काव्यलोकतः ॥ ५४ ॥
नानाधिकरणार्थानां शब्दानां संप्रकीर्तितम् ।
एकवाक्येन संयोगात्तद्दीपकमिहोच्यते ॥ ५५ ॥

सरांसि हंसैः कुसुमैश्च वृक्षा मत्तैर्द्विरेफैश्च सरोरुहाणि ।
गोष्ठीभिरुद्यानवनानि चैव तस्मिन्नशून्यानि सदा क्रियन्ते ॥ ५६ ॥

स्वविकल्पैर्विरचितं तुल्यावयवलक्षणम् ।
किंचित्सादृश्यसंपन्नं यद्रूपं रूपकं तु तत् ॥ ५७ ॥

पद्माननास्ताः कुमुदप्रकाशा विकासिनीलोत्पलचारुनेत्राः ।
वापीस्त्रियो हंसकुलैर्नदद्भिर्विरेजुरन्योन्यमिवाह्वयन्त्यः[1] ॥ ५८ ॥

शब्दाभ्यासं तु यमकं पादादिषु विकल्पितम् ।
विशेषदर्शनं चास्य गदतो मे निबोधत ॥ ५९ ॥
पादान्तयमकं चैव काञ्चीयमकमेव च ।
समुद्गयमकं चैव विक्रान्तयमकं तथा ॥ ६० ॥
यमकं चक्रवालं च संदष्टयमकं[2] तथा ।
पादादियमकं चैव आम्रेडितमथापि च ॥ ६१ ॥

१. 'आह्वयन्तः' क. २. 'संदष्टं' क-ख.

चतुर्थ्यवसितं चैव मालायमकमेव च ।
एतद्दशविधं ज्ञेयं यमकं नाटकाश्रयम् ॥ ६२ ॥
चतुर्थं यत्र पादानामन्ते स्यात्सममक्षरम् ।
तद्वै पादान्तयमकं विज्ञेयं नामतो यथा ॥ ६३ ॥
दिनक्षयात्संवृतरश्मिमण्डलं दिवीव लग्नं तपनीयमण्डलम् ।
विभाति ताम्रं दिवि सूर्यमण्डलं यथा तरुण्याः स्तनभारमण्डलम् ॥६४॥
पादस्यादौ तथा चान्ते स्यातां यत्र समे पदे ।
तत्काञ्चीयमकं नाम विज्ञेयं सूरिभिर्यथा ॥ ६५ ॥
माया मायावद्द्रवतीनां..........[1]
व्यक्ताव्यक्तासारजनीनां रजनीनाम् ।
फुल्ले फुल्ले संभ्रर..............[2]
रामारामा विस्मयते च स्मयते च ॥ ६६ ॥
अर्धेनैकेन यद्वृत्तं सर्वमेव समाप्यते ।
समुद्गयमकं नाम तज्ज्ञेयं पण्डितैर्यथा ॥ ६७ ॥
केतकीमुकुलपाण्डुरदन्तः शोभते प्रवरकाननहस्ती ।
..........................................॥ ६८ ॥
एकैकं पादमुत्क्षिप्य द्वौ पादौ सदृशौ यदा ।
विक्रान्तयमकं नाम तज्ज्ञेयं नामतो यथा ॥ ६९ ॥
संपूर्णवारणो भूत्वा द्विशृङ्ग इव पर्वतः ।
..........................................॥ ७० ॥
पूर्वस्यान्तेन पादस्य परस्यादिर्यदा समः ।
चक्रवच्चक्रवालं तद्विज्ञेयं नामतो यथा ॥ ७१ ॥
शैला यथा शत्रुभिराहता हता हताश्च भूयोऽप्यनुपुङ्खगैः खगैः ।
खगैश्च सर्वैर्युधि संचिताश्चिताश्चिताधिरूढा निहताः फलैः फलैः॥७२॥
आविद्धे यत्र पादौ तु भवतामक्षरे समे ।
संदष्टयमकं नाम विज्ञेयं तत्तु वै यथा ॥ ७३ ॥

१.२. त्रुटिचिह्नं पुस्तकद्वयेऽपि नास्ति.

पश्य पश्य रमणस्य मे गुणान्येन येन वशगां करोति माम् ।
येन येन दिनमेति दर्शनं तेन तेन वशगां करोति माम् ॥ ७४ ॥

आदौ पादस्य यत्र स्यात्समावेशसमाक्षरः ।
पादादियमकं नाम तद्विज्ञेयं बुधैर्यथा ॥ ७५ ॥
विष्णुः सृजति भूतानि विष्णुः संहरते प्रजाः ।
विष्णुप्रसूतं त्रैलोक्यं विष्णुर्लोकादिदैवतम् ॥ ७६ ॥
पादस्यान्त्यं पदं यत्र द्विर्द्विरेकमिहोच्यते ।
पादान्ताम्रेडितं नाम विज्ञेयं निपुणैर्यथा ॥ ७७ ॥

विजृम्भितं निःश्वसितं मुहुर्मुहुः कथाभिधानं स्मरणं पदेपदे ।
यथा च ते ध्यानमिदं पुनः पुनस्तथागता ते रजनी विना विना ॥७८॥

सर्वे पादाः समा यत्र भवन्ति नियताक्षराः ।
चतुर्व्यवसितं नाम विज्ञेयं तद्बुधैर्यथा ॥ ७९ ॥

वारणानामयमेव कालो वारणानामयमेव कालः ।
वारणानामयमेव कालो वारणानामयमेव कालः ॥ ८० ॥

नानारूपैः स्वरैर्युक्तं यत्रैकं व्यञ्जनं भवेत् ।
तन्मालायमकं नाम विज्ञेयं पाठकैर्यथा ॥ ८१ ॥
हली बली लली माली शूली जाली लली जली ।
बलो बलोच्चलोलाक्षो मुसली त्वभिरक्षतु ॥ ८२ ॥
एभिरर्थक्रियापेक्षं काव्यं कार्यं तु लक्षणैः ।
अत ऊर्ध्वं प्रवक्ष्यामि काव्यदोषाः समासतः ॥ ८३ ॥

गूढार्थमर्थान्तरमर्थहीनं भिन्नार्थमेकार्थमभिप्लुतार्थम् ।
न्यायादपेतं विषमं विसंधि शब्दच्युतं वै दश काव्यदोषाः ॥ ८४ ॥

पर्यायशब्दाभिहितं गूढार्थमभिसंज्ञितम् ।
अवर्ण्यं वर्ण्यते यत्र तदर्थान्तरमिष्यते ॥ ८५ ॥
अर्थहीनं त्वसंबद्धं सा त्वशेषार्थमेव च ।
भिन्नार्थमभिविज्ञेयमसभ्यं ग्राम्यमेव च ॥ ८६ ॥

[वि]वक्षितोऽन्य एवार्थो यत्रान्यार्थेन भिद्यते ।
भिन्नार्थं तदपि प्राहुः काव्यं काव्यविलक्षणाः ॥ ८७ ॥
एकार्थस्याभिधानं यत्तदेकार्थमिति स्मृतम् ।
अभिप्लुतार्थं विज्ञेयं यत्पादेन समस्यते ॥ ८८ ॥
न्यायादपेतं विज्ञेयं प्रमाणपरिवर्जितम् ।
वृत्त[दोषो][1] भवेद्यत्र विषमं नाम तद्भवेत् ॥ ८९ ॥
अनुप्रतिष्ठाशब्दं यत्तद्विसंधीति काशितम् ।
शब्दहीनं च विज्ञेयमशब्दस्य च योजनात् ॥ ९० ॥
एते दोषास्तु विज्ञेयाः सूरिभिर्नाटकाश्रयाः ।
गुणा [विपर्य]यादेषां माधुर्यौदार्यलक्षणाः ॥ ९१ ॥
श्लेषः प्रसादः समता समाधिर्माधुर्यमोजः पदसौकुमार्यम् ।
अर्थस्य च व्यक्तिरुदारता च कान्तिश्च काव्यार्थगुणा दशैते ॥ ९२ ॥
ईप्सितेनार्थजातेन संबद्धानुपरस्परम् ।
श्लिष्टता या पदानां हि श्लेष इत्यभिधीयते ॥ ९३ ॥
विचारगहनं यत्स्यात्स्फुटं चैव स्वभावतः ।
स्वतः सुप्रतिबद्धं च श्लिष्टं तत्परिकीर्तितम् ॥ ९४ ॥
अथानुक्तो बुधैर्यत्र शब्दादर्थः प्रतीयते ।
सुखशब्दार्थसंयोगात्प्रसादः परिकीर्त्यते ॥ ९५ ॥
नातिचूर्णपदैर्युक्ता न च व्यर्थाभिधायिभिः ।
न दुर्बोधा तैश्च कृता समत्वात्समता मता ॥ ९६ ॥
अभियुक्तैर्विशेषस्तु योऽर्थस्यैवोपलभ्यते ।
तेन चार्थेन संपन्नः समाधिः परिकीर्त्यते ॥ ९७ ॥
बहुशो यत्कृतं काव्यमुक्तं वापि पुनः पुनः ।
नोद्वेजयति तस्माद्धि तन्माधुर्यमुदाहृतम् ॥ ९८ ॥
समासवद्भिर्विविधैर्विचित्रैश्च पदैर्युतम् ।
सा तु स्वरैरुदारैश्च तदोजः परिकीर्त्यते ॥ ९९ ॥

---

१. 'भेदः' क-ख.

[१]मुख्यप्रयोज्यैर्यच्छन्दैर्युक्तं प्र(सु)श्लिष्टसंधिभिः ।
सुकुमारार्थसंयुक्तं सुकुमारं तदुच्यते ॥ १०० ॥
सुप्रसिद्धा धातुना तु लोककर्मव्यवस्थिता ।
या क्रिया क्रियते काव्ये सार्थव्यक्तिः प्रकीर्त्यते ॥ १०१ ॥
दिव्यभावपरीतं यच्छृङ्गाराद्भुतयोजितम् ।
अनेकभावसंयुक्तमुदारं तत्प्रकीर्तितम् ॥ १०२ ॥
यन्मनःश्रोत्रविषयमाह्लादयति हीन्दुवत् ।
लीलाद्यर्थोपपन्नां वा तां कान्तिं कवयो विदुः ॥ १०३ ॥
एवमेते ह्यलंकारा गुणा दोषाश्च कीर्तिताः ।
प्रयोगमेषां च पुनर्वक्ष्यामि रससंश्रयम् ॥ १०४ ॥
गुर्वक्षरप्रायकृतं बीभत्से करुणे तथा ।
कदाचिद्वीररौद्राभ्यां यदा धर्षणजं भवेत् ॥ १०५ ॥
रूपदीपकसंयुक्तं नार्यावृत्तसमाश्रयम् ।
शृङ्गारे तु रसे कार्यं काव्यं स्यान्नाटकाश्रयम् ॥ १०६ ॥
उत्तरोत्तरसंयुक्तं वीरे काव्यं तु यद्भवेत् ।
जगत्यातिजगत्या वा संस्कृत्या त्रीणि योजयेत् ॥ १०७ ॥
[३]तथैव युद्धसंफेटौ प्रकृत्यां संप्रयोजितौ ।
करुणे शक्करी[२] चैव तथा चातिधृतिः स्मृता ॥ १०८ ॥
यद्वीरे कीर्त्यते छन्दस्तद्रौद्रे संप्रयोजयेत् ।
शेषाणामर्थयोगेन छन्दः कार्यं तथा रसः ॥ १०९ ॥
त्रिविधं ह्यक्षरं काव्ये विज्ञेयं नाटकाश्रयम् ।
ह्रस्वं दीर्घं प्लुतं चैव रसभावविभावकम् ॥ ११० ॥
एकमात्रं भवेद्ध्रस्वं द्विमात्रं दीर्घमिष्यते ।
प्लुतं चैव त्रिमात्रं स्यादक्षरं वर्णसंश्रयम् ॥ १११ ॥

---

१. 'मुख्यप्रयोज्यैश्छन्दोभिः' इत्युचितम्. २. 'शक्कर्या वापि' इत्युचितम्. ३. तथेत्यादिश्लोकद्वयं क-पुस्तके न दृश्यते.

स्मृते वासूचिते चैव तथा च परिदेविते ।
पठतां ब्राह्मणानां च प्लुतमक्षरमिष्यते ॥ ११२ ॥
आकारस्तु स्मृते कार्यं हुंकारं वाप्यसूचिते ।
परिदेविते च हुंकारमोंकारोऽध्ययने तथा ॥ ११३ ॥
ह्रस्वदीर्घप्लुतानीह यथाभावं यथारसम् ।
काव्ययोगेष्वक्षराणि यथाशोभं निवेशयेत् ॥ ११४ ॥
ये बन्धाः पूर्वमुद्दिष्टा विषमार्धसमासमाः ।
उदारमधुरैः शब्दैः कार्यास्ते स्यू रसानुगाः ॥ ११५ ॥
शब्दानुदारमधुरान्प्रमदाभिधेया
नाट्याश्रया सुगति····प्रयते च कर्तुम् ।
तैर्भूषिता बहु विभान्ति हि काव्यबन्धाः
पद्माकरा विकसिता इव राजहंसैः ॥ ११६ ॥
चेक्रीयितप्रभृतिभिर्विकृतैश्च शब्दै-[1]
र्युक्ता न भान्ति ललिता भरतप्रयोगाः ।
यज्ञक्रियेव शरवर्मधरैर्घृताक्तै-
र्वेश्या द्विजैरिव कमण्डलुदण्डहस्तैः ॥ ११७ ॥
मृदुललितपदाढ्यं गूढशब्दार्थहीनं
जनपदसुखबोध्यं युक्तिमन्नृत्ययोज्यम् ।
बहुकृतरसमार्गं संधिसंधानयुक्तं
स(?) भवति शुभकाव्यं नाटकप्रेक्षकाणाम् ॥ ११८ ॥

इति श्रीभारतीये नाट्यशास्त्रेऽलंकारलक्षणो नाम षोडशोऽध्यायः ॥

---

सप्तदशोऽध्यायः ।

एवं तु संस्कृतं पाठ्यं मया प्रोक्तं समासतः ।
प्राकृतस्य तु पाठ्यस्य संप्रवक्ष्यामि लक्षणम् ॥ १ ॥
एतदेव विपर्यस्तं संस्कारगुणवर्जितम् ।
विज्ञेयं प्राकृतं पाठ्यं नानावस्थान्तरात्मकम् ॥ २ ॥

---

१. 'चेक्रीयते' इति भवेत्.

त्रिविधं तच्च विज्ञेयं नाट्ययोगे समासतः ।
समानशब्दैर्विभ्रष्टं देशीमतमथापि वा ॥ ३ ॥
कमलामलरेणुतरङ्गलोलसलिलादिवाक्यसंपन्नम् ।
प्राकृतबन्धेष्वेवं संस्कृतमपि योगमुपयाति ॥ ४ ॥
ये वर्णाः संयुक्ताः स्वरवर्णाः·········स्तनतां चापि ।
गच्छन्ति पदन्यस्तास्ते विभ्रमा इति·····ज्ञेयाः ॥ ५ ॥

यथा—

एतु[1] आरपराइंज अंकारपरंभयापायणच्छिव ।
सायारमज्जिमाइय कवचग्रतवसराणि हणाइं ॥ ६ ॥
वच्चंति कगत दयवा लोवं अत्थंवसि स्वहत्तिसरा ।
खद्यथभद्यभाउणहतंतुवेत्ति अत्थं अ मुंघना ॥ ७ ॥(?)

उघरफुतरसासाहे हाफुल्लप्लवयापणच्छिमोत्तूणवंइदोद्दहपइजाइस्व ।
खयषधभाणहयानेमुहकहापहुसुरिच्छेसु कगतदजबाणविच्चांवोयंमिठि-उसरोहोइच्छे ॥ ८–९ ॥ (?)

इति [च] षकारो नित्यं बोद्धव्यः षट्पदादियोगे तु ।
किल[2]शब्दान्तो रेफो भवति तथाखुं निखिलशब्दः ॥ १० ॥
ड[3] इति च भवति डकारो नडककुटी·········तडागेषु ।
सत्वं[4] च भवति शषयोः सर्वत्र यथाहि विशशङ्का ॥ ११ ॥
अस्पष्टश्च दकारो भवत्यनादौ तकार इतराद्यः । (?)
वनवभोनागतुल्ये(?) भवति डकारोऽपि[5] च लकारः ॥ १२ ॥

---

१. 'एतु–' इत्यारभ्य '–कार्यः प्रयोगेऽस्मिन्' इत्यन्तो ग्रन्थोऽतीवाशुद्धो वर्तते, तथा च द्वित्रस्थले लेखकादिदोषवशेन काश्चनार्या अपि गद्यतामापन्नाः. २ 'किर' इति भवति. ३. 'ट' इति स्यात्, तथा च 'टो डः' इति सूत्रेण डत्वविधानं युज्यते, एवं सति 'नडभडकुडीतडागेषु' इति पठनीयम्. ४. 'शषोः सः' इति सूत्रानुसारेण 'षशयोः' इति पाठव्यत्यासे कृते 'विससङ्का' इति साधीयान्पाठो भवितुमर्हति. ५. 'डो लः' इत्यनेन स्वरात्परस्यासंयुक्तस्यानादेर्डस्य प्रायो लो भवति, तेन 'वलआमुहं गरुलो तलाअं' इत्यादयः सिध्यन्ति.

शठपाठपीठिआदिषु [1]कारवर्णोऽपि ठत्वमायाति ।
सर्वत्र प्रयोगे भवति [2]कारोऽपि च णकारः ॥ १३ ॥
आपाणं [3]आवाणं भवति पकारेण वत्वयुक्तेन ।
अयथातथादिकेषु तु थकारवर्णो व्रजति धत्वम् ॥ १४ ॥
परुषाणां फरुसंविद्यात्पकारवर्णोऽपि फत्वमुपयाति ।
यस्तु मृतः सोऽपि मओ ङियस्तु मृतसोऽपि मओ यस्तु मृगः सोऽपि तथैव ॥ १५ ॥(?)
ओ[4]कारत्वं गच्छत्यौकारश्चोपधादिषु नियुक्तः ।
प्रवलायिता वलादिषु भवति चकारोऽपि च यकारः ॥ १६ ॥
अपरस्परनिष्पन्ना ह्येवं प्रकृतसमाश्रया वर्णाः ।
संयुक्तानां तु पुनर्वक्ष्ये परीवृत्तिसंयोगम् ॥ १७ ॥
कृशश्वाच्छ इति तथा राज्ञैतु तकारयोगउपयातः ।
तच्चो अच्छरपक्षास्य च संसत्साह्यसवसत्सोष्टौज्वस्तेऽधः शेषो लक्ष्मक्ष्मोह्यक्ष्णः ॥ १८ ॥(?)
आश्चर्यं अच्छरियं निश्चयमिच्छन्ति णिच्छयन्ति तथा ।
[5]उत्सादो उत्साहो पथ्यं पथ्यं च विज्ञेयम् ॥ १९ ॥
तुभ्यं तुज्झं मह्यं [6]मज्जं विन्ध्यश्च भवति वि[7]ज्जेति ।
दृष्टो [8]दत्थोऽस्ति तथा हस्तोऽपि च भवति हत्थेति ॥ २० ॥
ग्रीष्मो गी[9]म्होति तथा श्लक्ष्णं [10]संहं सदा तु विज्ञेयम् ।
उष्णं [11]उंहं जक्षो जक्षौयोंह्लश्च भवति पल्लंको ॥ २१ ॥

---

१. 'ठकारवर्णः' इत्युचितम्, तथा च 'ठो ढः' इति सूत्रेण स्वरात्परस्यासंयुक्तस्यानादेष्ठस्य ढत्वे 'शठपाठपीठिकादिषु ठकारवर्णोऽपि ढत्वमायाति' इति पाठो युक्तः. २. 'नो णः' इत्यनुसारेण नकारस्य णत्वे 'नकारः' इति पाठो ज्यायान्. ३. 'पो वः इति रीत्या प्रायिको वो विधीयते तेनैतत्संगच्छते. ४. 'औत ओत्' इति सूत्रेण. ५. 'उत्थारो—उच्छाहो' इति वा स्यात् 'वोत्साहे थो ह्श्चरः' इति सूत्रेण तथाविधानात्. ६. 'मज्झं' इत्युचितम्. ७. 'विंज्झेति' इत्युचितम्. 'विज्जा' इति विध्यायाः प्राकृतम्. ८. 'दिट्ठेति' इति साधुः. ९. 'गिम्हो' इत्युचितम् 'पक्ष्मश्मष्मस्मह्मां म्हः' इति तद्विधायकं शास्त्रम्. १०. 'सण्हं' इत्युचितम्. ११. 'उण्हं' इति युक्तम्.

विपरीते हसयोगो ब्रह्मादौ स्याद्द्धस्य तौफत्वम् ।
यज्ञो भवति च जन्नो भीष्मो भिन्नोति[1] विज्ञेयः ॥ २२ ॥
उपरिगतो ह्रस्वाद्वा भवेत्कारादिकस्तु यो वर्णः ।
स हि संयोगविहीनः शुद्धः कार्यः प्रयोगेऽस्मिन्[2] ॥ २३ ॥
एवमेतत्तु विज्ञेयं प्राकृतं संस्कृतं तथा ।
अत ऊर्ध्वं प्रवक्ष्यामि देशभाषाविकल्पनम् ॥ २४ ॥
भाषा चतुर्विधा ज्ञेया दशरूपे प्रयोगतः ।
संस्कृतं प्राकृतं चैव यत्र पाठ्यं प्रयुज्यते ॥ २५ ॥
अतिभाषार्थभाषा च जातिभाषा तथैव च ।
तथा जात्यन्तरी चैव भाषा नाट्ये प्रकीर्तिता ॥ २६ ॥
अभिभाषा तु देवानामार्यभाषा तु भूभुजाम् ।
संस्कारपाठ्यसंयुक्ता सम्यग्ग्रामप्रतिष्ठिता ॥ २७ ॥
विविधा जातिभाषा च प्रयोगे समुदाहृता ।
म्लेच्छशब्दोपचारा च भारतं वर्षमाश्रितम् ॥ २८ ॥
अथ या जात्यन्तरी भाषा ग्रामारण्यपशूद्भवा ।
नानाविहंगजा चैव नाट्यधर्मी प्रयोगजा ॥ २९ ॥
[जा]तिभाषाश्रयं पाठ्यं द्विविधं समुदाहृतम् ।
प्राकृतं संस्कृतं चैव चातुर्वर्ण्यसमाश्रयम् ॥ ३० ॥
धीरोद्धते धी[र]ललिते धीरोदात्ते तथैव च ।
धीरप्रशान्ते च तथा पाठ्यं योज्यं तु संस्कृतम् ॥ ३१ ॥
एषामेव तु सर्वेषां नाट्यकानां प्रयोगजम् ।
कैरव्यपदेशेन प्राकृतं तु प्रयोजयेत् ॥ ३२ ॥
ऐश्वर्ये[ण] प्रमत्तस्य ऐश्वर्येण प्लुतस्य च ।
दारिद्र्येण प्रमत्तस्य दारिद्र्येण प्लुतस्य च ॥ ३३ ॥

---

१. 'भिम्ह' इति युक्तम्. २. इतः पूर्वं प्राकृतसिद्धान्तप्रख्यापिकाः प्रायः सर्वा आर्या अशुद्धाः सन्ति, तत्र कुत्रचिट्टिप्पणी दत्ता; परं पुस्तकान्तरमन्तरा साहसकरणमनुचितमिति प्राचीनपाठविलोपकादायासाद्विरम्यते.

उत्तमस्यापि ब्रुवतः [प्रा]कृतं संप्रयोजयेत् ।
व्याजलिङ्गं(ङ्ग)प्रतिष्ठानां श्रव(म)णानां तपस्विनाम् ॥ ३४ ॥
भिक्षुचक्रचरणानां प्राकृतं संप्रयोजयेत् ।
बाले [ग]दोपसृष्टे च स्त्रीणां च प्रकृतौ तथा ॥ ३५ ॥
नीचे मत्ते सलिङ्गे च प्राकृतं पाठ्यमिष्यते ।
परिभा(व्रा)ण्मुनिशान्तेषु वाक्येषु श्रोत्रियेषु च ॥ ३६ ॥
द्विजा ये चैव लिङ्गस्थाः संस्कृतं तेषु योजयेत् ।
राज्ञश्च गणिकायाश्च शिल्पकार्यास्तथैव च ॥ ३७ ॥
कालावस्थान्तरकृतं योज्यं पाठ्यं तु संस्कृतम् ।
संधिविग्रहसंबद्धं तथा चाप्यशुभं शुभम् ॥ ३८ ॥
ग्रहनक्षत्रचरितं खगानां रुतमेव च ।
सर्वमेतद्धि विज्ञेयं यस्माद्राजा शुभाशुभम् ॥ ३९ ॥
नृपपत्न्या भवेत्पाठ्यं संस्कृतं द्विजसत्तमाः ।
क्रीडार्थं सर्वलोकस्य प्रयोगस्य सुखाश्रयम् ॥ ४० ॥
कलाभ्यासाश्रयं चैव पाठ्यं वेश्यासु संस्कृतम् ।
कलोपचारज्ञानार्थं क्रीडार्थं पार्थिवस्य तु ॥ ४१ ॥
निर्दिष्टं शिल्पकार्यास्तु नाटके संस्कृतं वचः ।
आम्नायसिद्धं सर्वासां शुभमप्सरसां भवः ॥ ४२ ॥
संसर्गाद्देवतानां वै तद्धि लोकोऽनुवर्तते ।
छन्दस्तः प्राकृतं पाठ्यं स्मृतमप्सरसां भुवि ॥ ४३ ॥
मानुषीणां च कर्तव्यं कारणार्थव्यपेक्षया ।
न बर्बरकिरातान्ध्रद्रविडाद्यासु जातिषु ॥ ४४ ॥
नाट्ययोगे तु कर्तव्यं काव्यं भाषासमाश्रयम् ।
जातिष्वेतासु सर्वासु श्रद्धासु च द्विजोत्तमाः ॥ ४५ ॥
सौरसेनं समाश्रित्य भाषा कार्या तु नाटके ।
अथवा छन्दतः कार्या देशभाषा प्रयोक्तृभिः ॥ ४६ ॥

नानादेशसमुत्थं हि काव्यं भवति नाटके ।
.................................................|| ४७ ||
मागध्यवन्तिजा प्राच्या सूरसेन्यर्धमागधी ।
बाह्लीका दाक्षिणात्या च सप्त भाषाः प्रकीर्तिताः || ४८ ||
शबराभीरचण्डालसचरद्रविडोद्रजाः ।
हीना वनेचराणां च विभाषा नाटके स्मृता || ४९ ||
मागधी तु नरेन्द्राणामन्तःपुरनिवासिनाम् ।
चेटानां राजपुत्राणां श्रेष्ठिनां चार्धमागधी || ५० ||
प्राच्या विदूषकादीनां धूर्तानामप्यवन्तिजा ।
नायिकानां च सखीनां च सूरसेनाविरोधिनी || ५१ ||
योधनागरकादीनां दाक्षिणात्याथ दीव्यताम् ।
बाह्लीकभाषोदीच्यानां खसानां च स्वदेशजा || ५२ ||
शबराणां शकादीनां तत्स्वभावश्च यो गणः ।
सकारभाषा[1] योक्तव्या चण्डाली पुक्कसादिषु || ५३ ||
अङ्गारकारव्याधानां काष्ठयन्त्रोपजीविनाम् ।
योज्या शबरभाषा तु किंचिद्वानौकसी तथा || ५४ ||
गवाश्वाजाविकौष्ट्रादिघोषस्थाननिवासिनाम् ।
आभीरोक्तिः शाबरी वा द्राविडी द्रविडादिषु || ५५ ||
सुरङ्गा खनकादीनां सौण्डीकाराश्च[2] रक्षिणाम् ।
व्यसने नायकानां स्यादात्मरक्षासु मागधी || ५६ ||
न बर्बरकिरातान्ध्रद्रविडाद्यासु जातिषु ।
नाट्यप्रयोगे कर्तव्यं काव्यं भाषासमाश्रयम् || ५७ ||
गङ्गासागरमध्ये तु ये देशाः संप्रकीर्तिताः ।
एकारबहुलां तेषु भाषां तज्ज्ञः प्रयोजयेत् || ५८ ||
विन्ध्यसागरमध्ये तु ये देशाः श्रुतिमागताः ।
नकारबहुलां तेषु भाषां तज्ज्ञः प्रयोजयेत् || ५९ ||

---

१. 'शकारभाषा' इति युक्तम्. २. 'शौण्डिकानां च' इति स्यात्.

सुराष्ट्रावन्तिदेशेषु वेत्रवत्युत्तरेषु च ।
ये देशास्तेषु कुर्वीत चकारबहुलामिह ॥ ६० ॥
हिमवत्सिन्धुसौवीरान्ये च देशाः समाश्रिताः ।
उकारबहुलां तज्ज्ञस्तेषु भाषां प्रयोजयेत् ॥ ६१ ॥
चर्मण्वतीनदीपारे ये चार्बुदसमाश्रिताः ।
तकारबहुलां नित्यं तेषु भाषां प्रयोजयेत् ॥ ६२ ॥
एवं भाषाविधानं तु कर्तव्यं नाटकाश्रयम् ।
अत्र नोक्तं मया यच्च लोकाद्ग्राह्यं बुधैस्तु तत् ॥ ६३ ॥
एवं भाषाविधानं तु मया प्रोक्तं द्विजोत्तमाः ।
पुनर्वाक्यप्रचारं तु लौकिकं संनिबोधत ॥ ६४ ॥
उत्तमैर्मध्यमैर्हीनैर्ये संभाष्या यथा नराः ।
समानोत्कृष्टहीनास्तु नाटके तान्निबोधत ॥ ६५ ॥
देवानामपि ये देवा महात्मानो महर्षयः ।
भगवन्निति ते वाच्या यास्तेषां योषितस्तथा ॥ ६६ ॥
देवाश्च लिङ्गिनश्चैव नानाश्रुतधराश्च ये ।
भगवन्निति ते वाच्याः पुरुषैः स्त्रीभिरेव च ॥ ६७ ॥
आर्येति ब्राह्मणं ब्रूयान्महाराजेति पार्थिवम् ।
उपाध्यायेति चाचार्यं वृद्धं वा त्वति चैव हि ॥ ६८ ॥
छन्दतो नामभिर्वाच्या ब्राह्मणैस्तु नराधिपाः ।
तत्क्षाम्यं तु महीपालैर्यस्मात्पूज्या द्विजोत्तमाः ॥ ६९ ॥
ब्राह्मणैः सचिवो वाच्यो ह्यमात्यः सचिवेति वा ।
शेषैरन्यैर्जनैर्वाच्यो हीनैरार्येति नित्यशः ॥ ७० ॥
समं संभाषणं कार्यं येन नाम्ना तु संज्ञितः ।
हीनैः सपरिहारं तु नाम्ना संभाष्य उत्तमः ॥ ७१ ॥
नियोगाधिकृता ये तु पुरुषा योषितस्तथा ।
कारुकाः शिल्पिनश्चैव संभाष्यास्ते तथैव हि ॥ ७२ ॥

मर्षो भावेति वक्तव्यं किंचिदूनस्तु मर्षकः[1] ।
समानोऽथ वयस्येति हंहो हन्तेति चाधमैः ॥ ७३ ॥
आयुष्मन्निति वाच्यस्तु रथी सूतेन सर्वदा ।
तपस्वीव प्रशान्तः सन्साधो इति हि शब्द्यते ॥ ७४ ॥
स्वामी तु युवराजस्तु कुमारो भर्तृदारकः ।
सौम्य भद्रमुखेत्येवं हेपूर्वं चाधमं वदेत् ॥ ७५ ॥
यद्यस्य कर्म [शि]ल्पं [वा] विद्या वा जातिरेव वा ।
स तेन नाम्ना संभाष्यो नाटकादौ प्रयोक्तृभिः ॥ ७६ ॥
वत्स पुत्रक तातेति नाम्ना गोत्रेण वा पुनः ।
वाच्यः शिष्यः सुतो वापि पित्रा वा गुरुणापि वा ॥ ७७ ॥
संभाष्याः शाक्यनिग्रन्था[2](?) भदन्तेति प्रयोक्तृभिः ।
आमन्त्रणेषु पाखण्डाः शेषाः स्वयमुपागतैः ॥ ७८ ॥
देवेति नृपतिर्वाच्यो भृत्यैः प्रकृतिभिस्तथा ।
भेदेति सार्वभौमस्तु नित्यं प्रजनने नहि ॥ ७९ ॥
राजन्नित्यृषिभिर्वाच्यो ह्यपत्यं[3] पत्ययेन वा ।
वयस्य राजन्निति वा भवेद्वाच्यो महीपतिः ॥ ८० ॥
विदूषकेण राज्ञी च वेही च भवतीत्यपि ।
नाम्ना च यस्येत्यपि वा राज्ञा वाच्यो विदूषकः ॥ ८१ ॥
सर्वस्त्रीभिः पतिः[4]........................ ।
आर्येति पूर्वजो भ्राता वाच्यः पुत्र इवानुजः ॥ ८२ ॥
पुरुषाभाषणं ह्येवं नाट्ये कार्यं प्रयोक्तृभिः ।
पुनः स्त्रीणां प्रवक्ष्यामि संभाषं नाटकाश्रयम् ॥ ८३ ॥
तपस्विभ्यो[5] देवताश्च वाच्यास्तु भगवन्निह ।
गुरुरार्येति वक्तव्या स्थानीया भवतीति च ॥ ८४ ॥

---

१. अल्पार्थे कन्. २. 'शाक्यमुनयः' इति स्यात्. ३. 'अपत्यप्रत्ययेन' इति युक्तम्. ४. त्रुटिचिह्नं पुस्तकद्वयेऽपि न वर्तते. ५. 'तपस्विनः' इति युक्तम्.

गम्या भद्रेति वक्तव्या वृद्धाम्बेति च नाटके ।
राजपत्न्यस्तु संभाष्याः सर्वाः परिजनेन तु ॥ ८५ ॥
भट्टिनी स्वामिनी देवी इत्येवं नाटके बुधैः ।
देवीति महिषी वाच्या राज्ञा परिजनेन तु ॥ ८६ ॥
भोगिन्य इति शेषास्तु स्वामिन्य इति वा पुनः ।
स्वसेति भगिनी वाच्या ज्येष्ठा वत्सेति चानुजा ॥ ८७ ॥
ब्राह्मण्यार्येति वक्तव्या लिङ्गस्थान्तितिनीत्रपा[1] ।
पत्नी चार्येति संभाष्या पितुर्नाम्ना सुतस्य वा ॥ ८८ ॥
समानाभिस्तथा सख्यो हलाभाष्याः परस्परम् ।
प्रेष्या हञ्जेति वक्तव्या स्त्रियो यातूत्तमा भवेत् ॥ ८९ ॥
अजकेति[2] भवेद्वाच्या वेश्या परिजनेन तु ।
या त्वत्र वृद्धा सात्वातु[3] भाष्या परिजनेन तु ॥ ९० ॥
प्रियेति भार्या शृङ्गारे वाच्या राज्ञेतरेण वा ।
पुरोधाः सार्थवाहानां भार्या त्वार्येति सर्वदा ॥ ९१ ॥
तल्लिङ्गार्थानि नामानि कार्याणि कविभिर्द्विजाः ।
उत्पत्तिकानि यानि स्युर्न प्रख्यातानि नाटके ॥ ९२ ॥
ब्रह्मक्षत्रस्य नामानि गोत्रकर्मानुरूपतः ।
काव्ये कार्याणि कविभिः शर्मवर्मकृतानि च ॥ ९३ ॥
दत्तप्रायाणि नामानि वणिजां तु प्रयोजयेत् ।
शौर्योदात्तानि नामानि तथा शूरेषु योजयेत् ॥ ९४ ॥
विजयार्थानि नामानि राजस्त्रीणां च कारयेत् ।
दत्ता मित्रा वासना[4] च वेश्यामित्राणि कारयेत् ॥ ९५ ॥
नानाकुसुमनामानः प्रेष्याः कार्यास्तु नाटके ।
मङ्गलार्थानि नामानि चेटानामपि कारयेत् ॥ ९६ ॥

१. 'नानतित्रपा' इति स्यात्. २. 'अज्जका' इत्युचितम्. ३. 'साम्बा तु' इति युक्तम्. ४. '—अथ सेनेति वेश्यानामानि' इति युक्तम्. यथा—वसन्तसेनादि.

गम्भीरार्थानि नामानि स्त्रीणां चोक्तानि योजयेत् ।
कस्मान्नाम्नामसदृशं कर्म तेषां भविष्यति ॥ ९७ ॥
जातिचेष्टानुरूपाणि शेषाणामपि कारयेत् ।
नामानि पुरुषाणां तु स्त्रीणां चोक्तानि तत्त्वतः ॥ ९८ ॥
एवं नाम[वि]धानं तु कर्तव्यं कविभिः सदा ।
एवं भाषाविधानादि ज्ञात्वा सर्वमशेषतः ॥
ततः पाठ्यं प्रयुञ्जीत षडलंकारसंयुतम् ॥ ९९ ॥

पाठ्यगुणानिदानीं वक्ष्यामः । तद्यथा—सप्त स्वराः, त्रीणि स्थानानि, चत्वारो वर्णाः, द्विविधा काकुः, षडलंकाराः, षडङ्गानि, इति । तत्र सप्त स्वराः—षड्जर्षभगान्धारमध्य[म]पञ्च[म]धैवतनिषादाः । त एते रसेषूपपाद्याः । यथा—

हास्यशृङ्गारयोः कार्यौ स्वरौ मध्यमपञ्चमौ ।
षड्जर्षभौ तथा चैव वीररौद्राद्भुतेषु च ॥ १०० ॥
गान्धारश्च निषादश्च कर्तव्यो करुणे रसे ।
धैवतश्चैव कर्तव्यो बीभत्से सभयानके ॥ १०१ ॥

त्रीणि स्थानानि—उरः कण्ठः शिर इति भवति[1] । अपि च—

शारीर्यामथ वीणायां त्रिभ्यः स्थानेभ्य एव तु ।
उरसः शिरसः कण्ठात्स्वरः काकुः प्रवर्तते ॥ १०२ ॥
आभाषणं च दूरस्थं शिरसा संप्रयोजयेत् ।
नातिदूरे च कण्ठे च ह्युरसा च समीपतः ॥ १०३ ॥
उरसोदाहृतं वाक्यं शिरसोद्दीपयेद्बुधः ।
कण्ठेन शमनं कुर्याद्वाच्ययोगेषु सर्वदा ॥ १०४ ॥
उदात्तश्चानुदात्तश्च स्वरितः कम्पितस्तथा ।
वर्णाश्चत्वार एव स्युः पाठ्ययोगे तपोधनाः ॥ १०५ ॥

तत्र हास्यशृङ्गारयोः स्वरितोदात्तैर्वीररौद्राद्भुतैरुदात्तकम्पितैः करुणवात्सल्यभयानकेष्वनुदात्तस्वरितकम्पितैर्वर्णैः पाठ्यमुपपादयति । द्विविधा

१. 'भवत्यपि च' इति समस्तं पदं दृश्यते, ततः कदाचिच्छ्लोकखण्डं भवेत्. २. 'अद्भुतेषु' इत्युचितम्.

काकुः। साकाङ्क्षा निराकाङ्क्षेति । वाक्यस्य साकाङ्क्षेति। अत्र साकाङ्क्षं मन्द्रादितारान्तम्, साकाङ्क्षत्वात्।

अनियुक्तार्थकं वाक्यं साकाङ्क्षमिति संज्ञितम्।
नियुक्तार्थं तु यद्वाक्यं निराकाङ्क्षं तदुच्यते॥ १०६॥

अत्र साकाङ्क्षं मन्द्रादितारान्तम्, अनियुक्तार्थमनिर्यातितवर्णालंकारं कण्ठोरःस्थानगतम् । निराकाङ्क्षं नाम नियुक्तार्थं निर्यातितवर्णालंकारं शिरःस्थानगतं मन्द्रादितारान्तमिति।

उच्चो दीप्तश्च [मन्द्रश्च] नीचो[1] [ह्रस्व]विलम्बितौ।
पाठ्यस्यैते ह्यलंकारा लक्षणं च निबोधत॥ १०७॥

उच्चो नाम शिरःस्थानगतस्तारः स्वरः, स च दूरस्थाभाषणविस्मयोत्तरोत्तरसंजल्पदूराह्वानत्रासनार्थं वाद्येषु। दीप्तो नाम शिरःस्थानगतस्तारतरः, स चाक्षेपकलहविवादामर्षाकष्टाधर्षणाक्रोधशौर्यदर्पतीक्ष्णरूक्षाभिधाननिर्भर्त्सनाक्रन्दितादिषु। मन्द्रो नाम उरःस्थानगतो निर्वेदग्लानिचिन्तौत्सुक्यदैन्यावेशव्याधिगाढशस्त्रक्षतमूर्छामदादिषु। नीचो नाम उरःस्थानस्थामन्द्रतरः स्वभावाभाषणव्याधितपःशान्तत्रस्तपतितमूर्छितादिषु। ह्रस्वो नाम कण्ठगतस्त्वरितलज्जितमन्मथभयशीतज्वरार्तत्रस्ताकार्यवेदनादिषु। विलम्बितो नाम कण्ठस्थानस्थो मन्द्रः शृङ्गारवितर्कविचारामर्षासूयिताव्यक्तार्थप्रवादलज्जाचिन्ताविस्मिततर्जनदोषानुकीर्तनेन दीर्घरोगनिपीडनादिषु। अत्रानुवंश्याः श्लोका भवन्ति—

उत्तरोत्तरसंजल्पे पुरुषाक्षेपणे तथा।
तीक्ष्णरूक्षाभिनयन आवेगे क्रन्दिते तथा॥ १०८॥
परोक्षस्य समाह्वाने तर्जने त्रासने तथा।
दूरस्थाभाषणे चैव तथा निर्भर्त्सनेषु च॥ १०९॥
सर्वेष्वेतेषु नित्यं हि नानारससमाश्रया।
उच्चा दीप्ता द्रुता चैव काकुः कार्या प्रयोक्तृभिः॥ ११०॥
लज्जो च मन्मने चैव भयार्ते शीतविप्लुते।

1. 'नीचोदाहृत' क-ख.

मन्द्राहृता च कर्तव्या काकुर्नाट्ये प्रयोक्तृभिः ॥ १११ ॥
हृष्टा नष्टानुसारेण इष्टानष्टश्रुतौ तथा ।
हृष्टार्थख्यापने चैव चिन्ताग्रस्ते तथैव च ॥ ११२ ॥
उन्मादेऽसूयने चैव उपालम्भे तथैव च ।
विस्मयामर्षयोश्चैव हर्षे च परिदेविते ॥ ११३ ॥
विलम्बिता च दीप्ता च काकुमन्द्रा च वै भवेत् ।
यानि सौम्यार्थयुक्तानि सुस्वभावकृतानि च ॥ ११४ ॥
मन्द्राविलम्बिता चैव तत्र काकुर्विधीयते ।
यानि स्युस्तीक्ष्णरूपाणि दीप्ता वोच्चा च तेष्वपि ॥ ११५ ॥
एवं नानाश्रयोपेतं पाठ्यं योज्यं प्रयोक्तृभिः ।
हास्यशृङ्गारकरुणेष्विष्टा काकुर्विलम्बिता ॥ ११६ ॥
वीररौद्राद्भुतेषूच्चा दीप्ता वापि प्रशस्यते ।
भयानके सबीभत्से हृता नीचा च कीर्तिता ॥ ११७ ॥
एवं भावरसोपेता काकुः कार्या प्रयोक्तृभिः ।

अथाङ्गानि—विच्छेदोपसर्पणे विसर्गोऽनुबन्धो दीपनं प्रशमनमिति षडङ्गानि । तत्र विच्छेदो नाम विरामकृतः । अर्पणं नाम लीलायमानमधुरवर्णस्थानलयेन पूरयद्भिरिव रङ्गं यत्पठ्यते तदर्पणम् । विसर्गो नाम वाक्यन्यासः । पदान्तरेष्वपि विच्छेदोऽनुच्छूननं वा । दीपनं नाम त्रिस्थानाशाभिर्वर्धमानस्वरं च । प्रशमनं नाम तारगतानां स्वराणां नवैश्वर्येणावरोहणमिति । एषां रसगतः प्रयोगतः । तत्र हास्यशृङ्गारयोरर्पणविच्छेददीपनप्रशमनयुक्तं पाठ्यं कार्यम् । करुणवीररौद्राद्भुते श्रुत्वाकाङ्क्षिणविच्छेदप्रशमनापर्णदीपनानुबन्धबहुलं पाठ्यं प्रयोज्यम् । बीभत्सभयानकयोर्विसर्गविच्छेदाकाङ्क्षिणप्रायमिति । सर्वेषां चैतेषां मन्द्रमध्यतारव्यवस्थया त्रिस्थानगतः प्रयोगतः तत्र दूरस्थाभाषणे तारं शिरसा नातिदूरे मध्यकण्ठेन पार्श्वतो मन्द्रमुरसा प्रयोजयेत्पाठ्यमिति । मन्द्रतारङ्गच्छेशाराद्वामन्द्रमिति(?)। एषां चन्द्रतनमध्यविलम्बितासु ये वर्णा रसेषूपपाद्याः तत्र हा-

स्यशृङ्गारयोर्मध्यलयः, करुणे विलम्बितो वीररौद्राद्भुतबीभत्सभयानकेष्वद्भुत इति । अथ विरामः—अर्थसमाप्तौ कार्यवशाद्दृश्यते हि एकद्वित्रिचतुरक्षरा विरामाः । यथा—

किं गच्छ मा विश सुदुर्जन वारितोऽसि
कार्यं त्वया न मम सर्वजनोपयुक्तः ।
शोकं शुचं कुरु गते च तथोपचारे
स्वल्पाक्षराणि हि पदानि भवन्ति कार्ये ॥ ११८ ॥

एवं विरामे प्रयत्नोऽनुष्ठेयः । कस्मात् । विराम इहार्थानुदर्शको भवति । अपि च—

विरामेषु प्रयत्नस्तु नित्यं कार्यः प्रयोक्तृभिः ।
कस्मादभिनयो ह्यर्थे अर्थापेक्षी यतः स्थितः ॥ ११९ ॥
यत्र व्यक्तावुभौ हस्तौ तत्र दृष्टिः समन्वितः ।
वाचिकाभिनयः कार्यो विरामैरर्थदर्शकैः ॥ १२० ॥
प्रायो वीरे च रौद्रे च करौ प्रहरणाकुलौ ।
बीभत्से कुत्सितत्वाच्च भवतः कुञ्चितौ करौ ॥ १२१ ॥
हास्ये चोद्देशमात्रेण करुणे च प्रलम्बितौ ।
अद्भुते विस्मयाविष्टे स्तब्धौ कार्यौ भयानके ॥ १२२ ॥
एवमादिषु चान्येषु प्रविचारेषु हस्तयोः ।
अलंकारविरामाभ्यां साध्यते ह्यर्थनिश्चयः ॥ १२३ ॥
ये विरामाः स्मृतावृत्ते तेष्वलंकार इष्यते ।
समाप्तेऽर्थे वापि तथा प्राणवशेन······वा ॥ १२४ ॥
पदवर्णसमासे च द्रुते बह्वर्थसंकटे ।
कार्यो विरामः पादान्ते तया प्राणवशे न वा ॥
शेषमर्थवशेनैव विरामं संप्रयोजयेत् ॥ १२५ ॥

अथ भावगतानि रसजातानि च कृष्याण्यक्षराणि बोद्धव्यानि । तद्यथा—

एकारैकारसंयुक्तमोकारौकारसंयुतम् ।

व्यञ्जनं यद्भवेद्दीर्घं कृष्यं तत्तु भवेदिह ॥ १२६ ॥
विषादे च वितर्के च प्रश्ने चामर्षणे तथा ।
कालाकालप्रमाणेन पाठ्यं कार्यं प्रयोक्तृभिः ॥ १२७ ॥
शेषाण्यर्थवियोगेन विरामे विरमेदिह ।
एकद्वित्रिचतुष्पञ्चषट्कलं च विलम्बितम् ॥ १२८ ॥
विलम्बिते विरामेऽपि यदा गुर्वक्षरं भवेत् ।
षण्णां कलानां परतो लम्बनं न विधीयते ॥ १२९ ॥
अथवा कारणोपेतं प्रयोगं कार्यमेव च ।
समीक्ष्य वृत्ते कर्तव्यो विरामो रसभावतः ॥ १३० ॥
ये विरामाः स्मृताः काव्ये दक्षपादसमुद्भवाः ।
उत्क्रम्यापि क्रमं तज्ज्ञैः कार्यास्तेऽर्थवशाश्रयाः ॥ १३१ ॥
त एव सर्वे कर्तव्याः स्त्रीणां पाठ्ये तु संस्कृतम् ।
एवमेतत्स्वरकृतं कलाकाललयान्वितम् ॥ १३२ ॥
दशरूपविधाने तु पाठ्यं योज्यं प्रयोक्तृभिः ।
यथा काकुविधानं तु यथावदनुपूर्वशः ॥
अत ऊर्ध्वं प्रवक्ष्यामि दशरूपविकल्पनम् ॥ १३३ ॥

इति श्रीभारतीये नाट्यशास्त्रे वागभिनये काकुस्वरविधानं नाम सप्तदशोऽध्यायः ।

## अष्टादशोऽध्यायः ।

कथयिष्याम्यहं विप्रा दशरूपविकल्पनम् ।
नामतः कर्मतश्चैव तथा चैव प्रयोगतः ॥ १ ॥
नाटकं सप्रकरणमङ्को व्यायोग एव च ।
भाणः समवकारश्च वीथी प्रहसनं डिमः ॥ २ ॥
ईहामृगश्च विज्ञेयो दशमो[1] नाट्यलक्षणे ।
एतेषां लक्षणमहं व्याख्यास्याम्यनुपूर्वशः ॥ ३ ॥
सर्वेषामेव काव्यानां[2] मातृका वृत्तयः स्मृताः ।
आभ्यो विनिःसृतं ह्येतद्दशरूपं प्रयोगतः ॥ ४ ॥

---

१. 'दशमे' डॉक्टर हॉलमुद्रितः पाठः. २. काम्यानां' मुद्रितपाठः.

एतेषां जातिभिश्चैव[1] स्वरा ग्रामत्वमागताः ।
यथा तथा वृत्तिभेदैः[2] काव्यबन्धा भवन्ति हि ॥ ५ ॥
ग्रामौ पूर्णस्वरौ द्वौ तु यथा वै षड्जमध्यमौ ।
सर्ववृत्तिविनिष्पन्नौ[3] काव्यबन्धौ तथा त्विमौ ॥ ६ ॥
ज्ञेयं प्रकरणं चैव तथा नाटकमेव च ।
पूर्ववृत्तविनिष्पन्नं नानाबन्धसमाश्रयम्[4] ॥ ७ ॥
भाणः समवकारश्च तथेहामृग एव च ।
उत्सृष्टकाङ्को व्यायोगो वीथी प्रहसनं डिमः ॥ ८ ॥
कैशिकीवृत्तिहीनानि रूपाण्येतानि कारयेत् ।
अत ऊर्ध्वं प्रवक्ष्यामि काव्यबन्धविकल्पनम् ॥ ९ ॥
प्रख्यातवस्तुविषये[5] प्रख्यातोदात्तनायकं[6] चैव ।
राजर्षिवंशचरितं तथैव[7] दिव्याश्रयोपेतम् ॥ १० ॥
नानाविभूतिसंयुतमृद्धिविलासादिभिर्गुणैश्चैव[8] ।
अङ्कप्रवेशकाढ्यं भवति हि तन्नाटकं[9] नाम ॥ ११ ॥
नृपतीनां यच्चरितं नानारसभावसंभृतं[10] बहुधा ।
सुखदुःखोत्पत्तिकृतं भवति हि तन्नाटकं नाम ॥ १२ ॥
अङ्कावस्थोपेतं कार्यं प्रसमीक्ष्य बिन्दुविस्तारात्[11] ।
कर्तव्योऽङ्कस्तज्ज्ञैः[12] स तु सम्यङ् नाटके विधिवत् ॥ १३ ॥
अङ्क इति रूढिशब्दो भावैश्च रसैश्च रोहयत्यर्थान् ।
नानाविधानयुक्तो यस्मात्तस्माद्भवेदङ्कः ॥ १४ ॥
यत्रार्थस्य समाप्तिर्यत्र च बीजस्य भवति संहारः ।
किंचिदवलग्नबिन्दुः सोऽङ्क इति सदावगन्तव्यः ॥ १५ ॥

---

१. 'जातिभिः श्रुतिभिः' मु. २. 'भेदाः' मु. ३. 'सर्ववृत्ति' मु. ४. 'नानावस्थान्तराश्रयम्' मु. ५. मुद्रितपुस्तके आर्येयमनुष्टुभि परिणामिता, तथापि चतुर्थे पादे छन्दोभङ्गान्न मुच्यते. ६. 'नायकम्' मु. ७. 'तथा' मु. ८. 'युक्तं वृद्धिविलासादिभिश्चैव' मु. ९. 'तोटकम्' मु. १०. 'संश्रितम्' मु. ११. 'बिम्बप्रस्तारात्' मु. १२. 'कर्तव्योहः' मु.

ये नायका निगदितास्तेषां प्रत्यक्षचरितसंयोगः ।
नानावस्थान्तरितः कार्यस्त्वङ्को विकृष्टस्तु ॥ १६ ॥
नायकदेवीपरिजनपुरोहितामात्यसार्थवाहानाम् ।
नैकरसान्तरविहितो ह्यङ्क इति स वेदितव्यस्तु ॥ १७ ॥
क्रोधप्रमादशोकाः शापोत्सर्गोऽध्वविद्रवोद्वाहौ ।
अद्भुतसंश्रयदर्शनमङ्के प्रत्यक्षजानि स्युः ॥ १८ ॥
युद्धं राज्यभ्रंशो मरणं नगरोपरोधनं चैव ।
प्रत्यक्षाणि तु नाङ्के प्रवेशकैः संविधेयानि ॥ १९ ॥
अङ्के प्रवेशकैर्वा प्रकरणमाश्रित्य नाटके वापि ।
न वधः कर्तव्यः स्याद्यस्तत्र स नायकः ख्यातः ॥ २० ॥
अवतरणमेव कार्यं संधिर्वा ग्रहणमेव वा नित्यम् ।
बहुभिः कार्यविशेषैः प्रवेशकैः सूचयेद्वापि ॥ २१ ॥
एकदिवसप्रवृत्तः कार्यस्त्वङ्कोऽथ बीजमाश्रित्य ।
आवश्यककार्याणामविरोधेन प्रयोगेषु ॥ २२ ॥
एकाङ्केन कदाचिद्बहूनि कार्याणि योजयेद्धीमान् ।
आवश्यकावरोधे न तत्र कार्याणि कार्याणि ॥ २३ ॥
रङ्गं तु ये प्रविष्टाः सर्वेषां भवति तत्र निष्क्रामः ।
बीजार्थयुक्तिमुक्तं कृत्वा कार्यं यथार्थरसम् ॥ २४ ॥
ज्ञात्वा दिवसावस्थां क्षणयाममुहूर्तलक्षणोपेताम् ।
विभजेत्सर्वमशेषं पृथक्पृथक्कार्यमङ्केषु ॥ २५ ॥
दिवसावसानकार्यं यद्यङ्के नोपपद्यते सर्वम् ।
अङ्कच्छेदं कृत्वा प्रवेशकैस्तद्विधेयं हि ॥ २६ ॥

१. 'यथार्थरसः' मु. २. 'नैकरसाम्बर–' मु. ३. 'हाङ्क' मु. ४. 'विदितव्यस्तु' मु. ५. 'प्रसाद' मु. ६. 'राज्यस्य' मु. ७. 'समरस्य रोधनम्' मु. ८. 'प्रत्यक्षराणि' मु. ९. 'नवाङ्के' मु. १०. 'प्रवेशके' मु. ११. 'नाटकम्' मु. १२. 'भवतः' मु. १३. 'अवसरण–' मु. १४. 'सद्भिः' मु. १५. 'अधिकृत्य' क. १६. 'रङ्गे' मु. १७. 'लक्षणोपेतम्' मु. १८. 'नोत्पद्यते' मु. १९. 'विधातव्यम्' क-ख.

[1]संनिहितनायकोऽङ्कः कर्तव्यो नाटके प्रकरणे वा।
परिजनकथानुबन्धः प्रवेशको नाम विज्ञेयः॥ २७॥
[2]प्रकरणविषये पञ्चाद्या·······दशपरास्तथा चैव।
अङ्काः कर्तव्याः स्युर्नानारसभावसंयुक्ताः॥ २८॥
अनयोरन्तरविहितः प्रवेशको यत्क्रियां समभिवीक्ष्य।
संक्षेपार्थः संधिस्त्वर्थानां संविधातव्यः॥ २९॥
अनयोश्च बन्धयोगादन्यो भेदः प्रयोक्तृभिः कार्यः।
प्रख्यातस्त्वितरो वा नारीसंज्ञाश्रिते काव्ये॥ ३०॥
अङ्कच्छेदं कृत्वा [3]मासकृतं वर्षसंचितं वापि।
तत्सर्वं कर्तव्यं वर्षादूर्ध्वं च न तु क्वचित्॥ ३१॥
यः कश्चित्कार्यवशाद्गच्छति पुरुषः प्रकृष्टमध्वानम्।
तत्राप्यङ्कच्छेदः कर्तव्यः पूर्ववत्तज्ज्ञैः॥ ३२॥
अङ्कान्तरानुसारी संक्षेपार्थमधिकृत्य बिन्दूनाम्।
प्रकरणनाटकविषयप्रवेशकः संविधातव्यः॥ ३३॥
नोत्तममध्यमपुरुषैराचरितो नाप्युदात्तवचनकृतः।
प्राकृतभाषाचारः [4]प्रवेशको नाम विज्ञेयः॥ ३४॥
कालोत्थानगतिरसौ व्याख्यासंरम्भकार्यविषयाणाम्।
··································· ॥ ३५॥
[8]टठडढणा मूर्धन्या अन्तःस्था यरलवाश्चेति।
विसर्जनीयः··························· ॥ ३७॥
यस्मिन्स्थाने तु समो विज्ञेयः सवर्णसंज्ञोऽसौ।
शब्दप्रयोगविषये स्वरांस्तु भूयः प्रवक्ष्यामि॥ ३८॥

---

१. 'सविरहितनायकैकम्' मु. २. एतदारभ्य तिस्र आर्या मुद्रितपुस्तके न वर्तन्ते. ३. 'नाम' मु. ४. 'विहितोऽयम्' मु. ५. 'विषयोपदेशको नाम विज्ञेयः' मु. ६. 'प्रयोगमासाद्य कर्तव्यः' क-ख. ७. '–रसवत्यासारसकाम–' मु. ८. 'टठड–' इत्यारभ्य 'पञ्चमात्रः स इष्यते' इति पर्यन्तमष्टचत्वारिंशच्छ्लोका मुद्रितपुस्तके त्रुटिताः, अथैतेषामपि मध्ये क्वचित्क्वचित्त्रुटिर्वर्तत इति निपुणं विभावनीयम्.

य इमे स्वराश्चतुर्दश निर्दिष्टास्तत्र वै दश समानाः ।
पूर्वो ह्रस्वस्तेषां परश्च दीर्घो विधातव्यः ॥ ३९ ॥
....................................................... ।
ए ऐ कण्ठताल्व्यौ ओ औ तु कण्ठौष्ठ्याविति च ॥ ४० ॥
इत्थं व्यञ्जनयोगैः स्वरैश्च साख्यातनामपदविहितैः ।
काव्यनिबन्धाश्च स्युर्धातुनिपातोपसर्गैस्तु ॥ ४१ ॥
उद्दिष्टं शब्दानां लक्षणमेतत्समासयोगेन ।
प्रकरणवशाद्धि तदहं विस्तरतः संप्रवक्ष्यामि ॥ ४२ ॥
तत्प्राहुः सप्तविधं षट्कारकसंयुतं प्रथितसाध्यम् ।
वचनं नामसमेतं पुरुषविभक्तं तथा ख्यातम् ॥ ४३ ॥
प्रातिपदिकार्थयुक्ता धात्वर्थानुपसृजन्ति ये स्वार्थे ।
उपसर्गा ह्युद्दिष्टास्तस्मात्संस्कारतस्तस्मिन् ॥ ४४ ॥
प्रातिपदिकार्थयोगाद्धानुच्छन्दोनिरुक्तयुक्त्या च ।
यस्मिन्निपतति पादे तस्मात्प्रोक्ता निपातास्तु ॥ ४५ ॥
लोके प्रकृतिप्रत्ययविभागसंयोगतत्त्ववचनैस्तु ।
ते ते पूर्यन्तेऽर्थास्तेषु हि तत्तद्धितस्तस्मात् ॥ ४६ ॥
एकस्य बहूनां वा धातोर्लिङ्गस्य वा पदानां वा ।
यस्माद्विभजन्त्यर्थान्विभक्तयः कीर्तितास्तस्मात् ॥ ४७ ॥
विशिष्टास्तु स्वरा यत्र व्यञ्जनं वापि योगतः ।
संधीयते पदे यस्मात्तस्मात्संधिः प्रकीर्तितः ॥ ४८ ॥
एभिः शब्दविधानैर्विस्तारव्यञ्जनार्थसंयुक्तैः ।
पदबन्धाः कर्तव्या निबद्धबन्धास्तु चूर्णा वा ॥ ४९ ॥
विभक्त्यन्तं पदं ज्ञेयं निबद्धं चूर्णमेव च ।
तत्र चूर्णपदस्येह संनिबोधत लक्षणम् ॥ ५० ॥
अनिबद्धपदच्छन्दस्तथा चानियताक्षरम् ।
अर्थापेक्षाक्षरस्यूतं ज्ञेयं चूर्णपदं बुधैः ॥ ५१ ॥

निबद्धाक्षरसंयुक्तं यतिच्छेदसमन्वितम् ।
निबद्धं तु पदं ज्ञेयं प्रमाणनियतात्मकम् ॥ ९२ ॥
एवं नानार्थसंयुक्तैः पदैर्वर्णविभूषितैः ।
चतुर्भिस्तु भवेद्युक्तं छन्दोवृत्ताभिधानवत् ॥ ९३ ॥
षड्विंशतिः शतान्येभिः पादैश्छन्दांसि संज्ञया ।
सममर्धसमं चैव तथा विषममेव च ॥ ९४ ॥
छन्दो ज्ञेयं समासेन त्रिविधं वृत्तमिष्यते ।
नानावृत्तविनिष्पन्ना शब्दस्यैषा तनुः स्मृता ॥ ९५ ॥
छन्दोहीनो न शब्दोऽस्ति न छन्दः शब्दवर्जितम् ।
एवं तूभयसंयोगो नाद्यास्याद्योनकस्मृतः(?) ॥ ९६ ॥
एकाक्षरं भवेदुक्तमत्युक्तं द्व्यक्षरं भवेत् ।
मध्यं त्र्यक्षरमित्याहुः प्रतिष्ठा चतुरक्षरा ॥ ९७ ॥
सुप्रतिष्ठा भवेत्पञ्च षड्गायत्री भवेदिह ।
सप्ताक्षरा भवेदुष्णिगष्टौ वानुष्टुबिष्यते ॥ ९८ ॥
नवाक्षरा तु बृहती पङ्क्तिश्चैव दशाक्षरा ।
[1]एकादशाक्षरा त्रिष्टुब्जगती द्वादशाक्षरा ॥ ९९ ॥
त्रयोदशातिजगती शक्करीति चतुर्दश ।
अतिशक्करी पञ्चदश षोडशाष्टिः प्रकीर्त्यते ॥ ६० ॥
अत्यष्टिः स्यात्सप्तदश धृतिरष्टादशाक्षरा ।
एकोनविंशतिरति(धृतिः) कृतिर्विंशतिरेव च ॥ ६१ ॥
प्रकृतिरेकविंशत्या द्वाविंशत्याकृतिस्तथा ।
त्रयोविंशतिर्विकृतिरधिकैका तु संकृतिः ॥ ६२ ॥
एकाधिका चातिकृतिः षड्विंशत्यक्षरोत्कृतिः ।
अत ऊर्ध्वाक्षरं छन्दो मालावृत्तमिति स्मृतम् ॥ ६३ ॥
छन्दसां तु यथान्येषां भेदाः प्रस्तारयोगतः ।
असंख्येयपरीमाणा वृत्तसंख्या समाश्रिता ॥ ६४ ॥

१. 'एकादश—' इत्यारभ्य '—अष्टादशाक्षरा' इति पर्यन्तं पाठः क-पुस्तके नास्ति.

गायत्री प्रकृतिश्चैषां प्रमाणं संप्रचक्ष्यते ।
प्रयोगजानि पूर्वाणि प्रायशो न भवन्ति हि ॥ ६५ ॥
तिस्रः कोट्यो दश तथा सहस्राणां शतानि तु ।
चत्वारिंशत्तथा द्वे च सहस्राणि दशैव तु ॥ ६६ ॥
सप्तभिः सहितान्येव सप्त चैव शतानि च ।
षड्विंशतिर(रिहा)न्यानि व्याख्यातानि समासतः ॥ ६७ ॥
सर्वेषां छन्दसामेव त्रिकैर्वृत्तं प्रयोजयेत् ।
ज्ञेया अष्टौ त्रिकास्तत्र संज्ञाभिः स्थानमक्षरम् ॥ ६८ ॥
वर्णाक्षरो विधिर्वृत्तमिति च्छन्दोगतो विधिः ।
नैवातिरिक्तं हीनं वा यत्र संपद्यते स्वरम् ॥ ६९ ॥
विधाने छन्दसामेषा संपदेताभिसंज्ञिता ।
यत्रार्थस्य समाप्तिः स्यात्स विराम इति स्मृतः ॥ ७० ॥
पादस्य पद्यतेर्धातोश्चतुर्भागः प्रकीर्तितः ।
अग्न्यादिदैवतं प्रोक्तं स्थानं द्विविधमुच्यते ॥ ७१ ॥
शरीराश्रयसंभूतं दिगाश्रयमथापि च ।
ह्रस्वं दीर्घं प्लुतं चैव त्रिविधं चाक्षरं स्मृतम् ॥ ७२ ॥
श्वेतादयस्तथा वर्णा विज्ञेयाश्छन्दसामिह ।
तारश्चैव हि मन्द्रश्च मध्यश्च त्रिविधः स्वरः ॥ ७३ ॥
ध्रुवाभिधाने चैवास्य संप्रवक्ष्यामि लक्षणम् ।
विधिर्गणकृतश्चैव तथा पद्यकृतोऽपि च ॥ ७४ ॥
वृत्तमर्धसमं चैव विषमं सममेव च ।
सर्वेषामेव वृत्तानां तज्ज्ञैर्ज्ञेया गणास्त्रिकाः ॥ ७५ ॥
दिव्यो दिव्येतरश्चैव दिव्यमानुष एव च ।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥ ७६ ॥
त्रिष्टुप् च जगति चैव दिव्योऽयं प्रथमो गणः ।
तथातिजगती चैव शक्वरी ह्यतिशक्वरी ॥ ७७ ॥

अष्टिरत्यष्टिरितरो धृतिश्चातिधृतिर्गणः ।
कृतिश्च प्रकृतिश्चैव ह्याकृतिर्विकृतिस्तथा ॥ ७८ ॥
संकृत्यतिकृती चैव [ह्युत्कृति]र्दिव्यमानुषः ।
एतेषां छन्दसां भूयः प्रस्तारविधिसंश्रयम् ॥ ७९ ॥
लक्षणं संप्रवक्ष्यामि नष्टमुद्दिष्टमेव च ।
प्रस्तारोऽक्षरमुद्दिष्टो मात्रोक्तश्च तथैव हि ॥ ८० ॥
द्विकौ ग्लौ विनिपर्णोक्ता मिश्रौ चेत्यपि मात्रिकौ ।
गुर्वधस्ताल्लघुं न्यस्य ततो द्विर्द्विर्यथोचितम् ॥ ८१ ॥
न्यस्येत्प्रस्तारमार्गोऽयमक्षरोक्तस्तु नित्यशः ।
मात्रासंख्या विनिर्दिष्टा गणो मात्राविकल्पितः ॥ ८२ ॥
मिश्रौ ग्लाविति विज्ञेयौ पृथग्लक्ष्यविभागतः ।
मात्रागणो गुरूण्येव लघुनीयैधुकैक च(?) ॥ ८३ ॥
आर्याणां स चतुर्मात्रा प्रस्तारः परिकीर्तितः ।
गीतकप्रभृतीनां च पञ्चमात्रः स इष्यते ॥ ८४ ॥
वेताली........................................ ।
.............................................. ॥ ८५ ॥
.............................................. ।
[1]अर्थाभिधानयुक्तः प्रवेशकः स्यादनेकार्थः ॥ ८६ ॥
बह्वाश्रयमपि [2]कार्यं [3]प्रवेशकैः संक्षिपेत्तु संधिषु च ।
बहुचूर्ण[4]पादवृत्तं जनयति खेदं प्रयोगस्य ॥ ८७ ॥
यत्रार्थस्य समाप्तिर्न भवत्यङ्के प्रयोगबाहुल्यात् ।
[5]वृत्तान्तः स्वल्पकथैः प्रवेशकैः सोऽभिधातव्यः ॥ ८८ ॥
[6]न महाजनपरिवारं कर्तव्यं नाटकं प्रकरणं वा ।
ये[7]नात्र कार्यपुरुषाश्चत्वारः [8]पञ्च वा ते स्युः ॥ ८९ ॥

---

१. 'आर्याभिधानसूतः' मु. २. 'अर्थे' मु. ३. 'संक्षिप्तेऽर्थे तु' मु. ४. '–पदैर्युक्तं' क-ख. ५. 'विष्कम्भः स्वल्पकथः' मु. ६. एतत्पूर्वम् 'शुद्धः संकीर्णो वा द्विविधो विष्कम्भकोऽपि विज्ञेयः । मध्यमपात्रः शुद्धः संकीर्णो नीचमध्यकृतः ॥' इत्यार्या मुद्रितपुस्तकेऽधिका. ७. 'यत्तत्र' मु. ८. 'पञ्चधा' मु.

कार्यं[1] गोपुच्छाग्रं कर्तव्यं बन्धमासाद्य ।
ये चोदात्ता भावास्ते सर्वे पृष्ठतः कार्याः ॥ ९० ॥
सर्वेषां काव्यानां नानारसभावयुक्तियुक्तानाम् ।
निर्वहणे[2] कर्तव्यो नित्यं हि रसोऽद्भुतस्तज्ज्ञैः ॥ ९१ ॥
नाटकलक्षणमेतन्मया समासेन कीर्तितं[3] विधिर्वत्[4] ।
प्रकरणमतःपरमहं लक्षणयुक्त्या प्रवक्ष्यामि ॥ ९२ ॥
यत्र कविरात्मबुद्ध्या वस्तु शरीरं च नायकं चैव ।
औत्पात्तिकं प्रकुरुते प्रकरणमिति तद्बुधैर्ज्ञेयम्[5] ॥ ९३ ॥
यदनर्थमपाहार्यं[6] काव्यं कुरुते प्रभूतगुणयुक्तम् ।
उत्पन्नबीजवस्तुप्रकरणमिति तदपि विज्ञेयम् ॥ ९४ ॥
यन्नाटके मयोक्तं वस्तु शरीरं च[7] वृत्तिभेदाश्च ।
तत्प्रकरणेऽपि कार्यं[8] केवलमुत्पाद्यवस्तु स्यात् ॥ ९५ ॥
विप्रवणिक्सचिवानां पुरोहितामात्यसार्थवाहानाम् ।
चरितं यत्रैकविधं[9] ज्ञेयं तत्प्रकरणं नाम ॥ ९६ ॥
नोदात्तनायककृतं न दिव्यचरितं न राजसंभोगः ।
बाह्यजनसंप्रयुक्तं ज्ञेयं[10] तत्प्रकरणं नाम ॥ ९७ ॥
दासविटश्रेष्ठियुतं वेशस्त्र्युपचारकरणोपेतम् ।
मन्दकुलस्त्रीचरितं काव्यं कार्यं प्रयोगे तु ॥ ९८ ॥
सचिवश्रेष्ठिब्राह्मणपुरोहितामात्यसर्ववाहानाम ।
गृहवार्ता यत्र भवेन्न तत्र वेश्याङ्गना कार्या ॥ ९९ ॥
यदि वेशयुवतियुक्तं न कुलस्त्रीसङ्गमर्हति ततः[11] ।
अत्र कुलजनप्रयुक्तं न वेशयुवतिर्भवेत्तत्र ॥ १०० ॥

---

१. एतत्पूर्वम् 'व्यायोगेहामृगसमवकारडिमसंचितानि कार्याणि । दशभिर्द्वादशभिर्वा षोडशभिर्वापि पुरुषैः स्युः ॥' इत्यार्या मुद्रितपुस्तकेऽधिका. 'गोपुच्छाग्रं काव्यं' मु. २. 'निर्वहणं कर्तव्यं' मु. ३. 'प्रकीर्तितम्' मु. ४. 'विविधं' मु. ५. 'तज्ज्ञेयं प्रकरणं नाम' मु. ६. 'यदनायकहार्यकार्यं प्रकरोत्यद्भुतगुणयुक्तम् । प्रकरणमिति तद्विद्याद्बीजं बीजार्थसंयुक्तम् ॥' मु. ७. 'समाश्रयोपेतम्' मु. ८. 'योज्यं तल्लक्षणं सर्वसंधिषु तु' क-ख. ९. 'यन्नैकाविधं' मु. १०. 'तज्ज्ञेयं प्रकरणं तज्ज्ञैः' क-ख. ११. 'तत्राप्यकुल' मुं.

यदि वा[1] प्रकरणयुक्त्या वेशकुलस्त्रीकृतोपचारं स्यात् ।
अविकृतभाषाचारं तत्र तु पाठ्यं प्रयोक्तव्यम् ॥ १०१ ॥
प्रकरणनाटकविषये पञ्चाद्या दश परास्तथा चैव ।
अङ्काः कर्तव्याः स्युर्नानारसभावसंयुक्ताः ॥ १०२ ॥
मध्यमपुरुषैर्नित्यं योज्यो विष्कम्भकोऽपि तत्त्वज्ञैः ।
संस्कृतवचनानुगतः संक्षिप्तार्थः प्रवेशकवत् ॥ १०३ ॥
शुद्धः संकीर्णो वा द्विविधो विष्कम्भकोऽपि विज्ञेयः[2] ।
मध्यमपात्रैः शुद्धः संकीर्णो नीचमध्यकृतः ॥ १०४ ॥
अङ्कान्तरालविहितः प्रवेशकार्थक्रियां[3] समभिवीक्ष्य ।
संक्षेपात्संधीनामर्थानां चैव कर्तव्यः ॥ १०५ ॥
अनयोश्च बन्धयोगादन्यो भेदः प्रयोक्तृभिः[4] कार्यः ।
प्रख्यातस्त्वितरो वा नाटीसंज्ञाश्रिते काव्ये ॥ १०६ ॥
स्त्रीप्राया[5] चतुरङ्का ललिताभिनयात्मिका सुविहिताङ्गी ।
बहुगीतनृत्यवाद्यरतिसंभोगात्मिका चैव ॥ १०७ ॥
राजोपचारयुक्ता प्रसादनक्रोधदम्भसंयुक्ता ।
प्रकरणनाटकनाटीलक्षणमुक्तं समासेन[6] ॥ १०८ ॥
वक्ष्याम्यतःपरमहं[7] लक्षणयुक्त्या समवकारम् ।
देवासुरबीजकृतः प्रख्यातोदात्तनायकश्चैव ॥ १०९ ॥
अङ्कस्तथा त्रिकपटः त्रिविद्रवः स्यात्त्रिश्रृङ्गारः ।
द्वादशनायकबहुलो ह्यष्टादशनाडिकाप्रमाणश्च[8] ॥ ११० ॥
वक्ष्याम्यस्याङ्कविधिं यावत्यो नाडिका[9] यत्र ।
अङ्कस्तु सप्रसहनः सविद्रवः सकपटः सवीथीकः ॥ १११ ॥
द्वादशनाडीविहितः प्रथमः कार्यैः[10] क्रियोपेतः ।
कार्यस्तथा द्वितीयः समाश्रितो नाडिकाश्चतस्रश्च ॥ ११२ ॥

---

१. 'क्राकरण' मु. २. 'कर्तव्यः' मु. ३. 'प्रवेशकोऽर्थक्रियामभिवीक्ष्य' मु. ४. 'प्रयोग' मु. ५. युत्तया श्रृङ्गाराभिनयभावनाटिका ज्ञेया' मु. ६. 'मया समासेन' मु. ७. 'परं लक्षण' मु. ८. '–नायिकासमाप्यश्च' मु. ९. 'नाटिका' मु. १०. 'कार्यकृतोपेतः' मु.

वस्तुसमापनविहितो द्विनाडिकः स्यात्तृतीयस्तु ।
[1]नाडीसंज्ञा ज्ञेया मानं कालस्य यन्मुहूर्तार्धम् ॥ ११३ ॥
तन्नाडिकाप्रमाणं यथोक्तमङ्केषु संयोज्यम् ।
[2]अङ्कोऽङ्कस्त्वन्यार्थः कर्तव्यो बन्धमासाद्य ॥ ११४ ॥
...................................................... ।
अर्थं हि समवकारे [3]ह्यप्रतिसंबन्धमिच्छन्ति ॥ ११५ ॥
युद्धजलसंभवो वा ह्यग्निगजेन्द्र[4]संभ्रमकृतो वापि ।
नगरोपरोधजो वा विज्ञेयो विद्रवस्त्रिविधः ॥ ११६ ॥
वस्तुगतिक्रमविहितो दैववशाद्वा परप्रयुक्तो वा ।
सुखदुःखोत्पत्तिकृतस्त्रिविधः कपटाश्रयो ज्ञेयः ॥ ११७ ॥
त्रिविधश्चात्र विधिज्ञैः पृथक्पृथक्[5]कार्ययोगविहितार्थः ।
[6]शृङ्गारः कर्तव्यो धर्मे चार्थे च कामे च ॥ ११८ ॥
यत्र तु धर्मसमापकमात्महितं भवति साधनं बहुधा ।
व्रतनियमतपोयुक्तो ज्ञेयोऽसौ धर्मशृङ्गारः ॥११९ ॥
अर्थस्येच्छायोगाद्बहुधा चैवार्थतोऽर्थशृङ्गारः ।
[7]स्त्रीसंप्रयोगविषयेष्वयथार्थमपीष्यते हि रतिः ॥ १२० ॥
कन्याविलो[8]भनकृतं प्राप्तौ स्त्रीपुंसयोस्तु [9]रम्यं वा ।
नि[10]भृतं सावेगं वा यस्य [11]भवेद्वा कामशृङ्गारः ॥ १२१ ॥
[12]उष्णिग्वानुष्टुभ्वा वृत्तानि च यानि बन्धकुटिलानि ।
[13]तान्यत्र समवकारे कवि[14]भिः सम्यक्प्रयोज्यानि ॥ १२२ ॥
एवं का[15]र्यं तज्ज्ञैर्नानारससंश्रयं समवका[16]रम् ।
[17]वक्ष्याम्यतः परमहं लक्षणमीहामृगस्यापि ॥ १२३ ॥

---

१. 'नाडी–' इत्यादिः 'संयोज्यम्' इत्यन्तः पाठः क-ख-पुस्तकयोर्नास्ति. २. 'अङ्कान्ते संबन्धः कर्तव्ये काव्य–' मु. ३. 'ह्यप्रतिबन्ध' मु. ४. 'संभवो' मु. ५. 'काव्य–' मु.६. 'त्रिविधकृतश्शृङ्गारो ज्ञेयो धर्मार्थकामेषु' मु. ७. 'सम्यक्प्रयोगविषयेष्वर्थार्थिकान्यानि च चारयति यत्र' मु. ८. 'भनं वै प्राप्य' मु. ९. 'रहः' मु. १०. 'रम्यं वा निभृतं वा' मु. ११. 'विज्ञेयः' मु. १२. 'उष्णिग्गायत्र्या वा छन्दःसु' क-ख. १३. 'वृत्तानि' मु. १४. 'भिस्तानि प्र' मु. १५. 'कार्यस्तज्ज्ञैः' क-ख-मु. १६. 'कारे' मु. १५. 'अत ऊर्ध्वं व्याख्यास्ये' मु.

दिव्यपुरुषाश्रय[[1]कृतो दिव्यस्त्रीकारणोपगतयुक्तः ।
सुविहितवस्तुप्रहितो विप्रत्ययकारक]श्चैव ॥ १२४ ॥
उद्धतपुरुषप्रायः स्त्रीरोषग्रथितकाव्यबन्धश्च ।
संक्षोभविद्रवकृतः संफेटकृत[2]स्तथा चैव ॥ १२५ ॥
स्त्रीभेदनाप[3]हरणामर्दनप्राप्तवस्तुशृङ्गारः ।
ईहामृगस्तु [4]कार्यश्चतुरङ्कविभूषितश्चैव ॥ १२६ ॥
यद्व्यायोगे कार्यं ये पुरुषा वृत्तयो रसाश्चैव ।
[5]ईहामृगेऽपि तत्स्यात्केवलमत्र स्त्रिया योगः ॥ १२७ ॥
यत्र तु [6]बन्धे नानावधो हि उद्यो भवेद्धि पुरुषाणाम् ।
किंचिद्व्याजं कृत्वा तेषां युद्धं शमयितव्यम् ॥ १२८ ॥
ईहामृगस्य [7]लक्षणमुक्तं विप्राः समासयोगेन ।
[8]अथ वै डिमस्य लक्षणमतः परं प्रवक्ष्यामि ॥ १२९ ॥
प्रख्यातवस्तुविषयः प्रख्यातोदात्तनायकश्चैव ।
[9]षट्त्रिंशल्लक्षण[10]युक्चतुरङ्को वै डिमः कार्यः १३० ॥
शृङ्गारहास्य[11]वर्जं शेषैरन्यै रसैः समायुक्तः ।
दीप्तरसकाव्ययोनिर्[12]नानाभावोपसंपन्नः ॥ १३१ ॥
[13]निर्घातोल्कापातैरुप[14]रागेणेन्दुसूर्ययोर्युक्तः ।
[15]युद्धनियुद्धधर्षणसंफेटककृतश्च कर्तव्यः ॥ १३२ ॥
[16]मायेन्द्रजालबहुजो(लो) बहुपुरुषोत्थान[17]युक्तश्च ।
देवभुजगेन्द्रराक्षसयक्षपिशाचावकीर्णश्च ॥ १३३ ॥

---

१. त्रुटितश्चायं पाठः क-ख-पुस्तकयोः. २. 'तथैव' मु. ३. 'हरणे प्रमदेनाप्राप्तस्तु' मु. ४. 'कार्यं सुसमाहितः काव्यबन्धश्च' क-ख. ५. 'ईहागेऽपि ते स्युः केवलनेत्रस्त्रयोगः' मु. ६. 'वधेप्सितानां बन्धो' मु. ७. 'लक्षणमित्युक्तं चतुरस्रमिदं समासयोगेन' मु. ८. 'डिमलक्षणं तु भूयो लक्षणयुक्त्या प्रवक्ष्यामि' मु. ९. 'षड्जकलक्षण' क-ख. १०. 'युक्तः' मु. ११. 'वर्जितः' मु. १२. 'नानाचित्रो डिमः कार्यः' मु. १३. 'निर्घातचन्द्रसूर्योपरागसोल्कावपातसंयुक्तः' मु. १४. 'रागेणेह सूर्ययो' क-ख. १५. 'युद्धनियुद्धनिबद्धसंफेटस्तत्र कर्तव्यः' मु. १६. 'माहेन्द्रजाल' क-ख. १७. 'भेदसंयुक्तः' मु.

षोडशनायकबहुलः सात्त्वत्यारभटिवृत्तिसंपन्नः[1] ।
कार्यो डिमः प्रयत्नान्नानाश्रयभावसंपन्नः[2] ॥ १३४ ॥
व्यायोगस्तु[3] विधिज्ञैः कार्यः प्रख्यातनायकशरीरः ।
अल्पस्त्रीजनयुक्तस्त्वेकाव्यङ्क(?)स्तथा चैव[4] ॥ १३५ ॥
बहवश्च[5] तत्र पुरुषा व्यायच्छन्ते यथा समवकारे ।
न च तत्प्रमाणयुक्ताः[6] कार्या एकाङ्क एवायम् ॥ १३६ ॥
नवदिव्यनायककृतः[7] कार्यो राजर्षिनायकनिर्बद्धः[8] ।
युद्धनियुद्धाकर्षणसंहर्षकृतश्च[9] कर्तव्यः ॥ १३७ ॥
एवंविधस्तु कार्यो व्यायोगो दीप्तकाव्यरसयोनिः ।
वक्ष्याम्यतः परमहं लक्षणमुत्सृष्टिकाङ्कस्य ॥ १३८ ॥
प्रख्यातवस्तुविषयस्त्वप्रख्यातः[10] कदाचिदेव स्यात् ।
दिव्यपुरुषैर्वियुक्तः शेषैरन्यैर्भवेत्पुंभिः ॥ १३९ ॥
करुणरसप्रायकृतो निवृत्तयुद्धोद्धतप्रहारश्च[11][12] ।
स्त्रीपरिदेवितबहुलो[13] निर्वेदितभाषितश्चैव[14] ॥ १४० ॥
नानाव्याकुलचेष्टः[15] सात्त्वत्यारभटिकैशिकीहीनः ।
कार्यः काव्यविधिज्ञैः सततं ह्युत्सृष्टिकाङ्कस्तु[16] ॥ १४१ ॥
यद्दिव्यनायककृतं[17] काव्यं[18] संग्रामयुद्धवधयुक्तम् ।
तद्भारते तु वर्षे कर्तव्यं काव्यबन्धेषु ॥ १४२ ॥
कस्माद्भारतमिष्टं वर्षेष्वन्येषु देवविहितेषु[19] ।
हृद्या सर्वा भूमिः शुभगन्धा काञ्चनी यस्मात्[20] ॥ १४३ ॥

---

१. 'संयुक्तः' मु. २. 'त्तज्ज्ञैर्नानाश्रयविशेषः' मु. ३. 'व्यायोगः सुविधि' मु. ४. 'स्त्रीजनयुक्तस्तु डिमस्त्वेकाहकृतस्तथा चैव' मु. ५. 'बहवस्तत्र तु पुरुषा न्यायकृतो' मु. ६. 'तत्प्रवणस्त्वेकाङ्कः संविधातव्यः' मु. ७. 'नरदिव्य' मु. ८. 'निबद्धम्' मु. ९. 'धर्षणसंफेट' मु. १०. 'विषयोऽप्र' मु. ११. 'बद्धो' मु. १२. 'स्तु' मु. १३. 'देवन' मु. १४. 'वाक्यभाषश्च' मु. १५. 'नातिव्यायतवेश्म' मु. १६. 'चोत्कृष्टिकाङ्कस्तु' मु. १७. 'क्षमम्' मु. १८. 'कार्यम्' मु. १९. 'नित्यकष्टं हि' मु. २०. 'चैव' मु.

उपवनगमनक्रीडाविहारनारीरतिप्रमोदाः स्युः ।
तेषु हि वर्षेषु सदा न[1] तत्र दुःखं न वा शोकः ॥ १४४ ॥
ये[2] तेषामपि वासाः पुराणवादेषु पर्वताः[3] प्रोक्ताः ।
संभोगस्तेषु भवेत्कर्मारम्भो[4] भवेदस्मिन् ॥ १४५ ॥
प्रहसनमपि[5] विज्ञेयं द्विविधं शुद्धं तथा च संकीर्णम् ।
वक्ष्यामि[6] तयोर्युक्त्या पृथक्पृथग्लक्षणविशेषम्[7] ॥ १४६ ॥
भगवत्तापसविप्रैरन्यैरपि हास्यवादसंबद्धम् ।
कापुरुषसंप्रयुक्तं[9] परिहासाभाषणप्रायम् ॥ १४७ ॥
अविकृतभाषाचारं विशेषभावोपपन्नरचितपदम्[8] ।
नियतगतिवस्तुविषयं शुद्धं ज्ञेयं प्रहसनं तु ॥ १४८ ॥
वेश्याचेटनपुंसकविटधूर्ता[11] बन्धकी च यत्र स्युः ।
अनिभृतवेषपरिच्छदचेष्टितकरणैस्तु[12][13][14] संकीर्णम् ॥ १४९ ॥
लोकोपचारयुक्ता या वार्ता यश्च दम्भसंयोगः ।
तत्प्रहसनेषु[15] योज्यं धूर्तोक्तविवादसंयुक्तम् ॥ १५० ॥
वीथ्यङ्गैः[16] संयुक्तं कर्तव्यं प्रहसनं यथायोगम् ।
भाणस्यापि[17] तु लक्षणमतः परं संप्रवक्ष्यामि ॥ १५१ ॥
आत्मानुभूतशंसी परसंश्रयवर्णनाविशेषेषु[18][19] ।
द्विविधाश्रयो हि भाणो विज्ञेयस्त्वेकहार्यश्च[20][21] ॥ १५२ ॥
परवचनमात्मसंस्थं प्रतिवचनैरुत्तरोत्तरग्रथिते[22] ।
आकाशपुरुषकथितैरङ्गविकारैरभिनयै[श्चापि][23] ॥ १५३ ॥

---

१. 'नो दुःखं नापि वा शोकः' मु. २. 'यत्तेषामधिवासाः' मु. ३. 'सर्वतः कथिताः' मु. ४. 'कर्मारम्भास्तथा ह्यस्मिन्' मु. ५. 'मिति' मु. ६. 'तस्य व्याख्यास्याम्यहं पृथ' मु. ७. 'विशेषान्' मु. ८.'संपन्नम्' मु. ९. 'नीचजनसंयुक्तं' मु.१०.'पहास' मु. ११. 'वेश्यानपुंसकविटैर्वाणिकदासीजनेन वा कीर्णम्' मु. १२. 'अनिवृत्त' मु. १३.'य च परिच्छदाचटितकरणै' क-ख.१४.'संपन्नम्' मु. १५.'स प्रहसने न योज्यो धूर्तजनविवादसंयुक्तः' मु. १६. 'उद्धात्यकादिभिरिदं वीथ्यङ्गैर्मिश्रितं भवति मिश्रम्' मु. १७. 'भाणस्य विधानमतो लक्षणयुक्त्या प्रवक्ष्यामि' मु. १८. 'संस्तव' मु. १९. 'विशेषश्च' मु. २०. 'प्रियो हि' मु. २१.'पात्रश्च' मु.२२.'प्रतिवचनैः सोत्तरैर्ग्रथितवाक्यम्' मु.२३. इदमार्यार्धं मुद्रिते नास्ति॰

धूर्तविटसंप्रयोज्यो नानावस्थान्तरात्मकश्चैव ।
[1]एकाङ्को बहुचेष्टः सततं कार्यो बुधैर्भाणः ॥ १९४ ॥
[2]सर्वरसलक्षणाढ्या युक्ता ह्यङ्गैस्त्रयोदशभिः ।
वीथी स्यादेकाङ्का [3]तथैकहार्या द्विहार्या वा ॥ १९५ ॥
[4]उद्धात्यकावलिततावस्यन्दितनाल्पसत्प्रलापाश्च ।
वाक्केल्यथ प्रपञ्चो मृदवाधिबले छलत्रिगते ॥ १९६ ॥
व्याहारो गण्डश्च त्रयोदशाङ्गान्युदाहृतान्यस्याः ।
[5]अथ वीथी संप्रोक्ता लक्षणमेषां प्रवक्ष्यामि ॥ १९७ ॥
पदानि [6]त्वगतार्थानि यत्तरां(त्तराः) पुनरादरात् ।
योजयन्ति पदैरन्यैस्तदुद्धात्यकमुच्यते ॥ १९८ ॥
यत्रान्यस्मिन्समावेश्य कार्यमन्यत्प्रसाध्यते ।
[7]तच्चावलिततं नाम विज्ञेयं नाट्ययोक्तृभिः ॥ १९९ ॥
[8]आक्षिप्तार्थे तु कस्मिंश्चिच्छुभाशुभसमुत्थितम् ।
कौ[9]शलारू(दु)च्यतेऽन्यार्थे तदवस्यन्दितं भवेत् ॥ १६० ॥
हा[10]स्येनोपगतार्था प्रहेलिका नालिकेति विज्ञेया ।
मूर्खजनसंनिकर्षे हितमपि यत्र प्रभाषते विद्वान् ॥ १६१ ॥
न च गृह्यतेऽस्य वचनं विज्ञेयोऽसत्प्रलापोऽसौ ।
एकद्विप्रतिवच[11]नौ वाक्केली स्यात्प्रयोगेऽस्मिन् ॥ १६२ ॥

---

१. 'वस्तुसमाङ्कः कार्यः सततं काव्ये बुधैर्भाणः' मु. २. इदमार्यार्धं मुद्रिते नास्ति. ३. 'द्विपात्रहार्या तथैकहार्या वा' मु. ४. इतः प्राक् 'अधमोत्तममध्याभिर्युक्ता स्यात्प्रकृतिभिस्तिसृभिः ॥ सर्वरसभावयुक्ता विज्ञेया वीथिका ह्यथैतस्याः । अङ्गानां वक्ष्येऽहं लक्षणमधुना यथोद्देशम् ॥' इति सार्धार्या मुद्रितपुस्तकेऽधिका. 'उद्धात्यकावलगिते अवस्यन्दितकं तथा । असत्प्रलापश्च तथा प्रपञ्चो नालिकापि या ॥ वाक्केल्यधिबलं चैव छलं व्याहार एव च । मृदवं त्रिगतं चैव ज्ञेयं गण्डमथापि वा ॥' इत्येवं मु. ५. आर्यार्धमिदं मुद्रितपुस्तके नास्ति. ६. 'च गतार्थानि तदर्थगतये नराः' मु. ७. 'परानुरोधात्तज्ज्ञेयं नाम्नावलगितं बुधैः' मु. ८. 'आक्षिप्य कंचिदेवार्थं शुभाशुभ' मु. ९. 'यद्वादबुद्धिनैपुण्यात्' मु. १०. इतः प्राक् 'असंबद्धं तु यद्वाक्यमसंबद्धं यदुत्तरम् । असत्प्रलापस्तं चैव वीथ्यां सम्यक्प्रयोजयेत् ॥' इत्यधिकं मु. ११. 'नां तां केलीं नाम जानीयुः' मु.

य[1]दतो संभृतवचनं सं[2]श्रवयुक्तं द्वयोः प[3]रस्परं यत्।
एकस्य चार्ष(र्थे)हेतोः स हास्यजननः प्र[4]पञ्चः स्यात् ॥ १६३ ॥
य[5]त्कारणाद्गुणानां दोषीकरणं भवेद्विवादकृतम्।
दोषगुणीकरणं वा तन्मृ[6]दवं नामापि विज्ञेयम् ॥ १६४ ॥
परवचनमात्मनश्चोत्तरोत्तरसमुद्भवं द्वयोर्यत्र।
अ[7]न्योन्यार्थविशेषकमधिबलमिति तद्बहु[8]धैर्ज्ञेयम् ॥ १६५ ॥
अन्यार्थमेव वाक्यं छलम[9]भिसंधानहास्यरो[10]षकरम्।
[11]श्रुतिसारूप्यार्थात्मनि बहवोऽर्था युक्तिभिर्नियुज्यन्ते ॥ १६६ ॥
एतद्धास्यमहास्यं वा त्रिगतं नामापि विज्ञेयम्।
प्रत्यक्षवृत्ति[12]रुक्तो व्याहारो हास्यलेशार्थः ॥ १६७ ॥
संरम्भसंभ्रमयुतं विवादयुक्तं तथापवादकृतम्।
बहुवचनाक्षेपकृतं [13]गण्डं प्रवदन्ति तत्त्वज्ञाः ॥ १६८ ॥
([14]अन्यान्यपि लास्यविधावङ्गानि तु नाटकोपयोगानि।
[15]अस्माद्विनिःसृतानि तु भाण इवैकप्रयोज्यानि ॥ १६९ ॥
गेयं[16]पदं स्थितपाठ्यमासीनं पुष्पगण्डिका।
प्रच्छेदकत्रि[17]मूढाख्यं सै[18]न्धवं च द्विमूढकम् ॥ १७० ॥
उत्तमोत्तमकं चैव उक्तप्रत्युक्तमेव च।
लास्ये दशविधं ह्येतदङ्गनिर्देशलक्षणम् ॥ १७१ ॥
आसनेषूपविष्टैर्यत्तन्त्रीभाण्डोपबृंहितम्।
गायनैर्गीयते शुष्कं तद्गेयपदमु[19]च्यते ॥ १७२ ॥

---

१. 'यदसस्तंभूतं वचनं' मु. २. 'संस्तव' मु. ३. 'परस्परतः' मु. ४. 'प्रपञ्चस्तु' मु. ५. 'यद्गुणदोषीकरणं दोषगुणीकरणमेव च । यैर्हेतुभिरुपपन्नार्थैस्तन्मृ' मु. ६. 'मृदवच्चामपि' क-ख. ७. 'अन्यार्थ' मु. ८. 'बहुविधै' मु. ९. 'मिति' मु. १०. 'शेष' क-ख. ११. 'यथानुदात्तवचनं त्रिधा विभक्तं भवेत्प्रयोगे तु। हास्यरससंप्रयुक्तं तत्त्रिगतं नाम विज्ञेयम् ॥' मु. १२. 'कथितो' मु. १३. 'गण्डमिति वदन्ति' मु. १४. धनुश्चिह्नान्तर्गतपाठः केवलं मुद्रितपुस्तकानुसारेण लिखितः, लिखितादर्शपुस्तकयोस्तूत्तराध्याये क्रियानुपलभ्यते. १५. 'तस्मात्' क-ख. १६. 'गेयं पदं स्थितं पाठ्य' क-ख. १७. 'त्रिरूढाख्यं' क-ख. १८. 'सैन्धवाख्यं द्विरूढकम्' क-ख. १९. 'मुत्तमम्' क-ख.

[1]बहुचारीसमायुक्तं पञ्चपाणिकलानुगम् ।
वत्सपुच्छेन वा युक्तं स्थितपाठ्यं विधीयते ॥ १७३ ॥
आसीनमा[2]सनस्थस्य सर्वतोद्यविवर्जितम् ।
अप्रसारितगात्रं च चिन्ताशोका[3]न्वितं च यत् ॥ १७४ ॥
[4]नृत्तं तु द्विविधं यत्र गीतमातोद्यमेव च ।
स्त्रियः पुंवच्च चेष्टन्ते सा ज्ञेया पुष्पगण्डिका ॥ १७५ ॥
प्रच्छेदकः स विज्ञेयो यत्र चन्द्रातपाहता ।
स्त्रियः प्रियेषु सज्जन्ते ह्यपि विप्रियकारिषु ॥ १७६ ॥
अनिष्ठुरश्लक्ष्णपदं समवृत्तैरलंकृतम् ।
नाट्यं पुरुषभावाढ्यं त्रिमूढकमु[5]दाहृतम् ॥ १७७ ॥
[6]रूपवाद्यादिसंयुक्तमव्यक्तकरणाश्रयम् ।
पाठ्यहीनं स्वभावोक्त्या विदुः सैन्धवकं बुधाः ॥ १७८ ॥
मुखप्रतिमुखोपेतं चतुरस्रपदक्रमम् ।
स्पष्टभावरसोपेतं ना[7]नार्थं च द्वि[8]मूढकम् ॥ १७९ ॥
उत्तमोत्तमकं विद्यादनेकक[9]रणान्वितम् ।
विचित्रैः श्लोकबन्धैश्च [10]लीलाभावविभूषितम् ॥ १८० ॥
कोपप्रसादजननर्म[11]धिक्षेप(प्य)जनाश्रयम् ।
उक्तप्रत्युक्तमेवं स्याच्चित्रगीतार्थयोजितम् ॥ १८१ ॥
[12]भोणामुक्तितिलास्यं (?) विज्ञेयं त्वेकपात्रि ह्यर्थत्वात् ।
प्रकरणवदुग्रकाव्यं संस्तवयुक्तं द्विविधभावात् ॥ १८२ ॥

---

१. 'प्राकृतं यद्वियुक्तं तु पठेदान्तरसंस्थिता । मदनानलतप्ताङ्गी स्थितपाठ्यं' **क-ख**. २. 'मास्यते यत्र' **क-ख**. ३. 'शोकसमन्वितम्' **क-ख**. ४. 'वृत्तानि विविधानि स्युर्गेयं गाने च संस्तम् । चेष्टाभिश्चाश्रयः पुंसां यत्र सा पुष्पगण्डिका ॥' **क-ख**. ५. 'मिति स्मृतम्' **क-ख**. ६. 'पात्रं विभ्रष्टसंकेतं सुव्यक्तकरणान्वितम् । प्राकृतैर्वचनैर्युक्तं विदुः सैन्धवकं बुधाः ॥' **क-ख**. ७. 'श्लिष्टार्थं' **क-ख**. ८. 'विमूढकम्' **मु**. ९. 'रससंश्रयम्' **क-ख**. १०. 'हेलाहावविचित्रितम्' **क-ख**. ११. 'सविक्षेपपदाश्रयम्' **क-ख**. १२. 'यत्राप्रयोक्तृतं (?) दृष्ट्वा विनोदयति मानसम् । मदनानलतप्ताङ्गी तच्चित्रपदमुच्यते ॥ दृष्ट्वा स्वप्ने प्रियं यत्तु मदनानलतापिता । करोति विविधान्भावांस्तत्क्द्भाविकमुच्यते ॥' **क-ख**.

एतेषां लास्यविधौ लक्षणमुक्तं मया तु विस्तरतः ।
तदिहैव तु यन्नोक्तं प्रसङ्गविनिवृत्तिहेतोस्तु ॥ १८३ ॥)
इति दशरूपविधानं सर्वं प्रोक्तं मया हि लक्षणतः ।
पुनरस्य शरीरगतं संधिविधौ लक्षणं वक्ष्ये ॥ १८४ ॥

इति भारतीये नाट्यशास्त्रे दशरूपलक्षणं नामाध्यायो[1]ऽष्टादशः ॥

---

एकोनविंशोऽध्यायः ।

इतिवृत्तं हि[2] नाट्यस्य शरीरं परिकीर्तितम् ।
पञ्चभिः संधिभिस्तस्य विभागः संप्रक[3]ल्पितः ॥ १ ॥
इतिवृत्तं द्विधा[4] चैव बुधस्तु परिकल्पयेत् ।
आधिकारिकमेवं स्यात्प्रासङ्गिकमथापरम् ॥ २ ॥
([5]यत्कार्यं हि फलप्राप्त्या समर्थं परिकल्प्यते ।
तदाधिकारिकं ज्ञेयमन्यत्प्रासङ्गिकं विदुः ॥ ३ ॥
कवेः प्रयत्नान्नेतॄणां युक्तानां विध्यपाश्रयात् ।
कल्प्यते हि फलप्राप्तिः समुत्कर्षात्फलस्य च[6] ॥ ४ ॥)
कारणात्फलयोगस्य वृत्तं स्यादाधिकारिकम् ।
तस्योपकरणार्थं तु कीर्त्यते ह्यानुषङ्गिकम् ॥ ५ ॥
[7]संसाध्ये फ[8]लयोगे तु व्यापारः क[9]रणस्य यः ।
तस्यानुपू[10]र्व्या विज्ञेयाः पञ्चावस्थाः प्रयोक्तृभिः ॥ ६ ॥
प्रारम्भश्च प्रयत्नश्च तथा प्राप्तेश्च संभवः ।
नियता च फलप्राप्तिः फलयोगश्च पञ्चमः ॥ ७ ॥

---

१ मुद्रितपुस्तकस्थं लिखितम्, लिखितादर्शयोस्तु 'नामाध्याय एकोनविंशः' इत्येवोपलभ्यते. २. 'तु' क-ख. ३. 'लक्षितः' मु. ४. 'द्विजा' मु. ५. धनुश्चिह्नान्तर्गतपाठो लिखितपुस्तके नास्ति. ६. 'तु' मु. ७. लिखितादर्शे त्वितः पूर्वम् 'कल्प्यते हि फलप्राप्तिः समुत्कर्षः फलस्य च । कम्पे प्रयत्नोन्नेतॄणां युक्तानां विद्ध्यपाश्रयात् ॥' इत्युपलभ्यते. ८. 'फलसाध्ये' मु. ९. 'कारकस्य' मु. १०. 'पूर्व्याद्' मु.

औत्सुक्यमात्रं[1] बन्धस्य यो बीजस्य निबध्यते ।
महतः फलयोगस्य सोऽत्र[2] प्रारम्भ इष्यते ॥ ८ ॥
अपश्यतः फलप्राप्तिं यो व्यापारः फलं प्रति ।
परं चौत्सुक्यगमनं प्रयत्नः परिकीर्तितः[3] ॥ ९ ॥
ईषत्प्राप्तिर्यदा[4] काचित्फलस्य परिकल्प्यते ।
भावमात्रेण सं(तं) प्राहुर्विधिज्ञाः प्राप्तिसंभवम् ॥ १० ॥
नियतां[5] तु फलप्राप्तिं यदा भावेन पश्यति ।
नियतां तां फलप्राप्तिं सगुणाः[6] परिचक्षते ॥ ११ ॥
अभिप्रेतं समग्रं च प्रतिरूपं क्रियाफलम् ।
इतिवृत्ते[7] भवेद्यस्मिन्[8]फलयोगः प्रकीर्तितः ॥ १२ ॥
सर्वस्यैव[9] हि कार्यस्य प्रारब्धस्य फलार्थिभिः ।
एता[10] अनुक्रमेणैव पञ्चावस्था भवन्ति हि ॥ १३ ॥
तासां स्वभावभिन्नानां परस्परसमागमात् ।
विन्यास[11] एकभावेन फलहेतुः प्रकीर्तितः ॥ १४ ॥
[12]इतिवृत्तं समाख्यातं प्रत्यगेवाधिकारिकम् ।
तदारम्भादि कर्तव्यं फलान्तं[13] च यथा[14] भवेत् ॥ १५ ॥
[15]पूर्णसंधि तु तत्कार्यं हीनसंध्यपि वा पुनः ।
नियमात्पञ्चसंधि स्याद्धीनसंध्यथ कारणात् ॥ १६ ॥
चतुर्थस्यैकलोपे[16] तु द्विलोपे त्रिचतुर्थयोः ।
द्वितीयत्रिचतुर्थानां त्रिलोपे लोप इष्यते ॥ १७ ॥
प्रासङ्गिके परार्थत्वान्नह्येष नियमो भवेत् ।
यद्वृत्तं [17]संभवेत्तत्र तद्योज्यमविरोधतः ॥ १८ ॥

---

१. 'औत्सुक्यं बन्धमात्रस्य' मु. २. 'स खल्वारम्भ' मु. ३. 'संप्रकीर्तितः' मु. ४. 'यदौचित्यं फलस्य' मु. ५. 'रूपक्रियाफलप्राप्तिर्यदा' मु. ६. 'सगुणां' मु. ७. 'इति योगे' मु. ८. 'भवेद्यत्र फल' मु. ९. 'इतिवृत्तादिकार्यस्य' मु. १०. 'यथानुक्रमते तास्तु' मु. ११. 'विन्यास्स' मु. १२. 'यद्वृत्तं हि समारब्धं पुरस्तादाधिकारिकम्' मु. १३. 'कलान्तं' मु. १४. 'यदा' मु. १५. 'स्वर्ण' क-ख. १६. 'लोपेन' मु. १७. 'संभवेत्किंचित्' मु.

इतिवृत्ते [1]यथावस्थाः पञ्चारम्भादिकाः स्मृताः ।
अर्थप्रकृतयः पञ्च [2]तथा बीजादिका अपि ॥ १९ ॥
[3]बीजं बिन्दुः पताका च प्रकरी कार्यमेव च ।
[4]अर्थप्रकृतयः पञ्च ज्ञात्वा योज्या यथाविधि ॥ २० ॥
स्वल्पमात्रं समुत्सृष्टं बहुधा यद्विसर्पति ।
फलावसानं [5]तच्चैव बीजं तदिह कीर्तितम् ॥ २१ ॥
प्रयोजनानां विच्छेदे यदविच्छेदकारणम् ।
यावत्समाप्तिर्बन्धस्य स [6]बिन्दुः परिकीर्तितः ॥ २२ ॥
यद्वृत्तं हि [7]परार्थं स्यात्[8]प्रधानस्योपकारकम् ।
प्रधानवच्च कल्प्येत सा पताकेति कीर्तिता ॥ २३ ॥
[9]फलं प्रकल्प्यते यस्याः परार्थं केवलं बुधैः ।
अनुबन्ध[10]विहीनं स्यात्प्रकरीमिति निर्दिशेत् ॥ २४ ॥
यदाधिकारिकं [11]वृत्तं सम्यक्प्राज्ञैः प्रयुज्यते ।
तदर्थो यः समारम्भस्तत्कार्यं परिकीर्तितम् ॥ २५ ॥
एतेषां यस्य येनार्थो यतश्च गुण इष्यते ।
तत्प्रधानं तु कर्तव्यं गुणभूतान्यतः परम् ॥ २६ ॥
एकोऽनेकोऽपि वा संधिः पताकायां तु यो भवेत् ।
प्रधानार्थानुयायित्वादनुसंधिः प्रकीर्त्यते ॥ २७ ॥
[12]अंगर्भादविमर्शाशा पताका विनिवर्तते ।
कस्माद्यस्मान्निबन्धोऽस्याः परार्थः परिकीर्त्यते ॥ २८ ॥
यत्रा[13]न्यस्मिन्युज्यमाने तल्लिङ्गेभ्यः(ङ्गोऽन्यः) प्रयुज्यते ।
आगन्तुकेन भावेन पताकास्थानकं तु तत् ॥ २९ ॥

---

१. 'यथाधस्तात्' मु. २. 'तदा' मु. ३. इतः प्राक् 'अर्थप्रकृतयः पञ्च ससंधिषु प्रकीर्तिताः' इत्यधिकं मु. ४. इदमर्धं मुद्रिते नास्ति. ५. 'यच्चैवं' मु. ६. 'बिन्दुरिति कीर्तितः' मु. ७. 'फलार्थं' मु. ८. 'प्रधानस्याप' मु. ९. 'फलं ब्रूहि फलार्थं स्यात्प्रधानस्यापकारकम् । प्रधानवच्च कल्प्येत पारार्थ्यं' मु. १०. 'विहीनानां यथावदिति निर्दिशेत्' मु. ११. 'कार्यं पूर्वमेव प्रकीर्तितम् । यदर्थो यः' मु. १२. 'आगर्भादाविमर्शाद्वा' मु. १३. 'न्यस्मिंश्चिन्त्यमाने तल्लीनोऽन्यः' मु.

सहसैवार्थसंपत्तिर्गुणवत्युपकारतः ।
पताका[1]स्थानकमिदं प्रथमं परिकीर्तितम् ॥ ३० ॥
[2]वचः सातिशयं श्लिष्टं काव्यबन्धसमाश्रयम् ।
पताकास्थानकमिदं द्वितीयं [3]परिकीर्तितम् ॥ ३१ ॥
अर्थोपक्षेपणं [4]यत्र लीनं [5]सविनयं भवेत् ।
श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमिष्यते ॥ ३२ ॥
द्व्यर्थो वचनविन्यासः [6]सुश्लिष्टः काव्ययोजितः ।
[7]उपन्याससंयुतश्च तच्चतुर्थमुदाहृतम् ॥ ३३ ॥
चतुःपताकापरमं नाटके काव्यमिष्यते ।
पञ्चभिः संधिभिर्युक्तं [8]तांश्च वक्ष्याम्यतः पुनः ॥ ३४ ॥
मुखं [9]प्रतिमुखं गर्भो विमर्शश्च तथैव हि ।
तथा निवर्हणं [10]चेति नाटके पञ्च संधयः ॥ ३५ ॥
[11]पञ्चभिः संधिभिर्युक्तं प्रधानमनुकीर्त्यते ।
शेषाः प्रधानसंधीनामनुग्राह्यास्तु संधयः ॥ ३६ ॥
[12]यत्र बीजसमुत्पत्तिर्नानार्थरससंभवा ।
काव्ये शरीरानुगता तन्मुखं परिकीर्तितम् ॥ ३७ ॥
बीजस्योद्घाटनं यत्तु दृष्टनष्टमिव क्वचित् ।
[13]मुखन्यस्तस्य सर्वत्र तद्वै प्रतिमुखं स्मृतम् ॥ ३८ ॥
उद्भेदस्तस्य बीजस्य प्राप्तिरप्राप्तिरेव [14]वा ।
पुनश्चान्वेषणं यत्र स गर्भ इति संज्ञितः ॥ ३९ ॥
गर्भान्निर्भिन्नबीजार्थो [15]विलोभनकृतोऽपि वा ।
क्रोधव्यसनजो वापि स विमर्श इति स्मृतः ॥ ४० ॥

---

१. 'स्थानमित्याद्यमलंकारार्थसंयुतम्' मु. २. 'यवसाति' क-ख. ३. 'परिकल्पितम्' मु. ४. 'यथा' क-ख. ५. 'साविनयं' क-ख. ६. 'संश्लिष्टः' मु. ७. 'उपपत्त्या युतं यत्तच्चतुर्थं समु' मु. ८. 'तत्प्रवक्ष्याम्यतः परम्' मु. ९. 'प्रतिमुखं चैव गर्भो विमर्श एव च' मु. १०. 'चैव' मु. ११. अयं श्लोको लिखितादर्शे नोपलभ्यते. १२. 'तत्र' क-ख. १३. 'मुखान्यस्तस्य' क-ख. १४. 'च' मु. १५. 'विकल्पनकृतोऽपि वा' मु.

समानयनमर्थानां [1]मुखाद्यानां सबीजिनाम्।
नानाभावोऽन्तराणां यद्भवेन्निर्वहणं तु तत्॥ ४१॥
एते [3]तु संधयो ज्ञेया नाटकस्य प्रयोक्तृभिः।
तथा प्रकरणस्यापि शेषाणां विनिबोधत॥ ४२॥
डिमः समवकारश्च चतुःसंधी प्रकीर्तितौ।
[4]न तयोरविमर्शस्तु कर्तव्यः कविभिः सदा॥ ४३॥
व्यायोगेहामृगौ चापि सदा कार्यौ त्रिसंधिकौ।
[5]गर्भाविम[6]र्शौ न स्यातां तयोर्वृ[8]त्तिश्च कैशिकी॥ ४४॥
द्विसंधि तु प्रहसनं वीथ्यङ्कौ भाण एव च।
मुखनिर्वहणे [9]तत्र कर्तव्ये कविभिः सदा॥ ४५॥
एवं [7]हि संधयः कार्या द[10]शरूपे प्रयोक्तृभिः।
पुनरेषां तु संधीनामङ्गक[11]ल्पं निबोधत॥ ४६॥
संधीनां यानि वृत्तानि [12]प्रदेशश्चानुपूर्वतः।
[13]स्वसंपद्गुणयुक्तानि तान्यङ्गान्युपधारयेत्॥ ४७॥
इष्टस्यार्थस्य रचना वृत्तान्तस्यानुपक्षयः।
रागप्राप्तिः [14]प्रयोगस्य गुह्यानां चैव गूहनम्॥ ४८॥
आश्चर्यवदविख्यातं प्रकाश्यानां प्रकाशनम्।
[15]अङ्गहीनो नरो यद्वन्नैवारम्भक्षमो भवेत्॥ ४९॥
अङ्गहीनं [16]तथा काव्यं न प्रयोगक्षमं भवेत्।
काव्यं यदपि हीनार्थं सम्यगङ्गैः [17]समर्पितम्॥ ५०॥
दीप्तत्वात्तु प्रयोगस्य शोभामेति न संशयः।
उदात्तमपि यत्काव्यं स्यादङ्गैः परिवर्जितम्॥ ५१॥

---

१. 'व्याख्यानां तु' मु. २. 'भावोत्तराणां च भवेन्निवर्हणं च' मु. ३. 'च' मु. ४. 'न तयोर्विमर्शस्तु स्यान्न च वृत्तिस्तु कैशिकी' मु. ५. 'गर्भापमर्शौ' क-ख. ६. अत्र पूर्वश्लोके च 'अविमर्श' इति दर्शनेन 'संधीनां नामसु लक्षणेषु च, अविमर्श' इत्येव वर्तते, 'विमर्श' इति वा 'अवमर्श' इति वा, इति संदिग्धम्. ७. 'तेषां' मु. ८. 'कैशिकीं विना' मु. ९. 'तु' मु. १०. 'दशरूप' मु. ११. 'कल्पान्' मु. १२. 'प्रदेशमनुपूर्वशः' मु. १३. 'संपद्गुणप्रयुक्तानि तान्यङ्गान्यवबोधयेत्' मु. १४. 'प्रयोगश्च' मु. १५. अयमर्धश्लोको मुद्रितपुस्तके त्रुटितः. १६. 'तु तत्' क-ख. १७. 'समन्वितम्' मु.

हीनत्वाद्धि[1]प्रयोगस्य न सतां रञ्जयेन्मनः ।
[[2]तस्मात्संधिप्रदेशेषु यथायोगं यथारसम् ॥ ५२ ॥
कविताङ्गानि कार्याणि प्रदेशांस्तु निबोधत ।]
[3]उपक्षेपः परिकरः परिन्यासो विलोभनम् ॥ ५३ ॥
युक्तिः प्राप्तिः [[4]समाधानं विधानं परिभावना ।
उद्भेदः करणं भेदो द्वादशाङ्गानि वै मुखे ॥ ५४ ॥
तथा प्रतिमुखे चैव वक्ष्याम्यङ्गानि नामतः ।]
विलासः परिसर्पश्च विधूतं [5]तापनं तथा ॥ ५५ ॥
नर्म नर्म[6]द्युतिश्चैव [7]तथा प्रगपणं पुनः ।
निरोधश्चैव विज्ञेयः पर्युपासनमेव च ॥ ५६ ॥
पुष्पं वज्रमुपन्यासो वर्णसंहार एव च ।
[8]एतानि वै प्रतिमुखे [9]गर्भेऽङ्गानि निबोधत ॥ ५७ ॥
अभूताहरणं मार्गो रूपोदाहरणे क्रमः ।
संग्रहश्चानुमानं च प्रार्थना [10]क्षिप्तिरेव च ॥ ५८ ॥
तोटकाधिबले चैव ह्युद्वेगो विद्रवस्तथा ।
एतान्यङ्गानि वै गर्भे [11]ह्यवमर्शे निबोधत ॥ ५९ ॥
अपवादश्च संफेटोऽभि[12]द्रवः शक्तिरेव च ।
प्रसङ्गो व्यवसायश्च निरो[13]धश्च प्रकीर्तितः ॥ ६० ॥

---

१. 'विप्रयोगस्य नैव तद्' मु. २. धनुश्चिह्नान्तर्गतपाठो लिखितादर्शयोर्नोपलभ्यते. ३. इतः प्राक् मुद्रितपुस्तके 'साम भेदः प्रदानं च दण्डश्च वध एव च। प्रत्युत्पन्नमतित्वं च गोत्रस्खलितमेव च ॥ साहसं च भयं चैव ह्रीर्माया क्रोध एव च । ओजःसंवरणं भ्रान्तिस्तथा हेत्ववधारणम् ॥ दूतो लेखस्तथा स्वप्नश्चित्रं मन्द इति द्विधा । संध्यन्तराणि संधीनां प्रदेशास्त्वेकविंशतिः ॥ एते विशेषाः संधिजाः स्युः संधेर्यस्त्वर्थयोगतः । पाठ्याङ्गान्यथ योगेन सन्ति तानि निबोधत ॥ इति पाठ्य उपक्षेपः परिन्यासो' इत्यधिकमुपलभ्यते. ४. धनुश्चिह्नान्तर्गतपाठो लिखितपुस्तके त्रुटितः. ५. 'शमनं' मु. ६. 'च्युति' क-ख. ७. 'तथा च प्रगणं' मु. ८. 'एवमङ्गानि बीजस्य संप्रसिद्धिकराणि च ।' इत्यधिकमितः प्राक् मु. ९. गर्भे चैव' मु. १०. 'त्किमि' क-ख; 'क्षिप्रमेव' मु. ११. 'ऽथ विमर्शे' मु. १२. 'हि द्रवः' मु. १३. 'विरोध' मु.

प्ररोचना विचलनमादानं छे[1]दनं तथा।
व्या[2]हारश्च द्युतिश्चैव विमर्[3]शाङ्गान्यमूनि च॥ ६१॥
संधिर्नि[4]रोधो ग्रथनं निर्णयः परिभाषणम्।
धृ[5]तिः प्रसाद आनन्दः समयश्चोपगूहनम्॥ ६२॥
भा[6]षणं पूर्ववाक्यं च काव्यसंहार एव च।
प्रशस्तिरिति संहारे ज्ञेया[7]न्यङ्गानि नामतः॥ ६३॥
च[8]तुःषष्टिर्बुधैर्ज्ञेयान्येतान्यङ्गानि संधिषु।
एतेषां तु पुनर्वक्ष्ये लक्षणानि यथाक्रमम्॥ ६४॥
का[9]व्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः।
यदुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरस्तु सः॥ ६५॥
[10]तन्निवृत्तिः परिन्यासो विज्ञेयः कविभिः सदा।
गुणनिर्वर्णनं चैवं[11] विलोभनमिति स्मृतम्॥ ६६॥
संप्रधारणमर्थानां युक्तिरित्यभिधीयते।
सु[12]खार्थस्याभिगमनं प्राप्तिरित्यभिधीयते॥ ६७॥
बीजार्थस्योपगमनं तत्समाधानमुच्यते।
सुखदुःखकृतो योऽर्थस्तद्विधानमिति स्मृतम्॥ ६८॥
कुतूहलोत्तरावेशो विज्ञेया परिभावना।
बीजार्थस्य प्ररोहो यः स उद्भेद इति स्मृतः॥ ६९॥
प्रकृतार्थसमारम्भः करणं नाम तद्भवेत्।
[13]संघातभेदनार्थो यः स भेद इति कीर्तितः॥ ७०॥
स[14]मीहा रतिभोगार्थो विलास इति कीर्तितः।
दृष्टनष्टानुसरणं परिसर्प इति स्मृतः॥ ७१॥

---

१. 'छलनं' मु. २. 'व्यवहारश्च युद्धश्च' क-ख; 'व्याहारश्चापि द्युतिश्च' मु. ३. 'विमर्शे' मु. ४. 'विबोधो' मु. ५. 'कृतिः प्रसादानन्दौ च' मु. ६. 'आभाषणं पूर्वभावः' मु. ७. संध्यङ्गानि चतुर्दश' मु. ८. 'संधौ निवर्हणाख्ये तु कर्तव्यानि प्रयोक्तृभिः। एतेषां त्वर्थसंबद्धं पुनर्वक्ष्यामि लक्षणम्॥' मु. ९. 'काव्यस्यार्थसमुत्पत्ति' मु. १०. 'भविष्यद्वस्तुकथनं परिन्यासं प्रचक्षते' मु. ११. 'तज्ज्ञैर्वि' मु. १२. 'सुखार्थस्योपगमनं' मु. १३. 'संघार्थे' मु. १४. 'संभोगो रतिसंपन्नो' मु.

कृतस्यानुनयस्यादौ विधूतमपरिग्रहः[1] ।
अपायदर्शनं यत्तत्तापनं नाम तद्भवेत्[2] ॥ ७२ ॥
क्रीडार्थं विहितं यत्र हास्यं नर्मेति तत्स्मृतम्[3] ।
दोषप्रच्छादनार्थं तु नर्मद्युति[रिति] स्मृतम्[4] ॥ ७३ ॥
अधरोत्तरवाक्यं[5] तु भवेत्प्रगयणं[6] पुनः ।
या तु व्यसनसंप्राप्तिर्निरोधः स तु[7] कीर्तितः ॥ ७४ ॥
क्रुद्धस्यानुनयो यस्तु भवेत्तत्पर्युपासनम्[8] ।
विशेषवचनं यत्तु तत्पुष्पमिति संज्ञितम् ॥ ७५ ॥
विरूक्षवचनप्रायं वज्रमित्यभिधीयते ।
उपपत्तिकृतो योऽर्थ उपन्यासश्च[9] स स्मृतः ॥ ७६ ॥
चातुर्वर्ण्याभिगमनं वर्णसंहार इष्यते ।
[एतत्प्रतिमुखेऽङ्गानि[10] अथ गर्भस्थलक्षणम् ॥ ७७ ॥]
कपटाद्याश्रयं[11] वाक्यमभूताहरणं विदुः ।
तत्त्वार्थवचनं चैव मार्ग इत्यभिधीयते ॥ ७८ ॥
चित्रार्थसमवायो यस्तद्रूपमिति कीर्तितम् ।
यत्सातिशयवद्वाक्यं[12] तदुदाहरणं स्मृतम् ॥ ७९ ॥
भावतत्त्वोपलब्धिस्तु[13] क्रम इत्यभिधीयते ।
सामदानार्थसंयुक्तः संग्रहः परिकीर्तितः ॥ ८० ॥
रूपानुरूपगमनमनुमानमिति स्मृतम् ।
रतिहर्षोत्सवार्थानां[14] प्रार्थना प्रार्थना भवेत् ॥ ८१ ॥
गर्भस्योद्भेदनं[15] यत्स्यात्क्षिप्तिरित्यभिधीयते ।
संरम्भवचनप्रायं तोटकं त्विति[16] संज्ञितम् ॥ ८२ ॥

१. 'विधूतं ह्यपरिग्रहः' मु. २. 'तस्योपशमनं यत्तु शमनं नाम तद्भवेत्' मु. ३. 'क्रीडाविलोभनार्थं तु हास्यं नर्म इति स्मृतम्' मु. ४. अयमर्धश्लोको मुद्रिते नास्ति. ५. 'उत्तरोत्तर' मु. ६. 'प्रगणनं' मु. ७. 'च' मु. ८. 'प्रत्यक्षरूपं यद्वाक्यं' क-ख. ९. 'तु' मु. १०. अयमर्धो लिखितादर्शे नास्ति. ११. 'कपटाश्रयं यद्वाक्यं' मु. १२. 'यत्तु सातिशयं वाक्यं' मु. १३. 'तत्त्वोपलब्धिर्वाक्यस्य' मु. १४. 'कार्यानुनयपूर्वस्तु नियोगः' मु. १५. 'गर्भस्योद्भेदनं यत्तु तदुपस्थितमुच्यते' मु. १६. 'त्विह' मु.

कपटेनाभिसंधानं [1]ब्रुवतेऽधिबलं बुधाः ।
भयं नृपारिदस्यूत्थमुद्वेगः परिकीर्तितः ॥ ८३ ॥
शङ्काभयत्रासकृतो [2]विद्रवः समुदाहृतः ।
[3]दोषप्रख्यापनं यत्स्यादपवादस्तु स स्मृतः ॥ ८४ ॥
रोषग्रथितवाक्यं तु संफेटः परिकीर्तितः ।
गुरुव्यतिक्रमो यस्तु विज्ञेयोऽभि[4]द्रवस्तु सः ॥ ८५ ॥
विरोधप्रशमो यस्तु सा शक्तिः परिकीर्तिता ।
प्रसङ्गश्चैव विज्ञेयो [5]वाक्यैरामर्षयोजितैः ॥ ८६ ॥
व्यवसायश्च[6] विज्ञेयः प्रतिज्ञाहेतु[7]संभवः ।
उत्तरोत्तरवाक्यं तु [8]निरोध इति संज्ञितः ॥ ८७ ॥
प्ररोचना च विज्ञेया [9]या कार्यार्थप्रदर्शिनी ।
अनुमानार्थसंयुक्तं विद्याद्विचलनं तथा ॥ ८८ ॥
[10]बीजकार्योपगमनमादानमिति संज्ञितम् ।
[11]अपमानकृतं वाक्यं कार्यार्थे छादनं भवेत् ॥ ८९ ॥
प्रत्यक्षकथनं यत्तु स व्याहार इति स्मृतः ।
[12]वाक्यमाधर्षसंयुक्तं द्युतिस्तज्ज्ञैरुदाहृतः ॥ ९० ॥
[13]लक्षणं विमर्शाङ्गानां संहारे तु निबोधत ।
मुखबीजोपगमनं संधिरित्यभिधीयते ॥ ९१ ॥
कार्यस्यान्वेषणं [14]युक्त्या निरोध इति कीर्तितः ।
उपक्षेपस्तु कार्याणां ग्रथनं [15]परिकीर्तितम् ॥ ९२ ॥

---

१. 'ज्ञेयं चाधिबलं बुधैः' मु. २. 'द्रव एव हि विद्रवः' मु. ३. इतः प्राक् 'गर्भाङ्गलक्षणं प्रोक्तं विमर्शेऽथ निबोधत' इत्यधिकं मु. ४. 'हि द्रवस्तु' मु. ५. गुरूणां परिकीर्तितः' क-ख; 'वाक्यैराधर्षयोजितैः' मु. ६. 'तु कर्तव्यः' मु. ७. 'संश्रयः' मु. ८. 'विरोध' मु. ९. 'संहारार्थप्रदर्शिनी' मु. १०. इतः प्राक् 'गुरूणां परिकीर्तितः' इत्युत्तरं 'वाक्यमाधर्षसंयुक्तं द्युतिस्तज्ज्ञैरुदाहृतम् । मनःश्रेष्ठार्थमुत्पन्नः श्रमस्तोद उदाहृतः ॥ ईप्सितप्रतीघातः प्रतिषेधः प्रकीर्तितः । कार्यात्ययोपगमनं विरोधनमिति स्मृतम् ॥' इत्यप्युपलभ्यते क-ख. ११. 'अपमानादिजनितःसंमोहच्छलनं' मु. १२. 'साधिक्षेपं वचो यत्र तद्द्युतिरिति संज्ञितम्' मु. १३. अयमर्धो लिखितादर्शे नोपलभ्यते. १४. 'यत्तु विबोध इति स स्मृतः' मु. १५. 'नाम तद्भवेत्' मु.

अनुभूतार्थकथनं निर्णयः समुदाहृतः ।
परिवादकृतं यत्स्यात्तदाहुः परिभाषणम् ॥ ९३ ॥
लब्धस्यार्थस्य शमनं धृतिमाचक्षते[1] पुनः ।
शुश्रूषाद्युपसंपन्ना[2] प्रसादः प्रीतिरुच्यते ॥ ९४ ॥
समागमस्तु[3] योऽर्थानामानन्दः परिकीर्तितः[4] ।
दुःखस्यापगमश्चैव[5] समयोऽर्थे[6] निगद्यते ॥ ९५ ॥
अद्भुतस्य[7] तु संप्राप्तिरुपगूहनमिष्यते ।
सामदानादिसंपन्नं[8] भाषणं समुदाहृतम् ॥ ९६ ॥
पूर्ववाक्यं[9] तु विज्ञेयं यथार्थोक्तार्थदर्शनम् ।
वरप्रसादसंप्राप्तिः काव्यसंहार इष्यते ॥ ९७ ॥
नृपदेवप्रशस्तिश्च[10] प्रशस्तिरभिधीयते ।
यथासंधि तु कर्तव्यान्येतान्यङ्गानि नाटके[11] ॥ ९८ ॥
कविभिः काव्यकुशलै रसभावमपेक्ष्य तु ।
[12]संमिश्राणि कदाचित्तु द्वित्रियोगेन वा पुनः ॥ ९९ ॥
[13]ज्ञात्वा कार्यमवस्थां च कार्याण्यङ्गानि संधिषु ।
एतेषामेव चाङ्गानां संबद्धान्यर्थयुक्तितः[14] ॥ १०० ॥
[15]संध्यन्तराणि वक्ष्यामि त्वर्थोपक्षेपकाणि च ।
साम भेदस्तथा[16] दण्डः प्रदानं वध एव च ॥ १०१ ॥
प्रत्युत्पन्नमतित्वं च गोत्रस्खलितमेव च ।
साहसं च भयं चैव [17]ह्रीर्माया क्रोध एव च ॥ १०२ ॥

---

१. 'कृतिरित्यभिधीयते' मु. २. 'संपन्नः प्रसाद इति भण्यते' क-ख. ३. 'स्तथार्थानां' क-ख. ४ 'स तु कीर्तितः' मु. ५ 'दुःखापनयनं चैव' मु. ६ 'स' मु. ७. 'अन्वग्भूतस्य संप्राप्तिर्भवेत्तदुपगूहनम्' मु. ८. 'दानमानविनिष्पन्नमाभाषणमुदाहृतम्' मु. ९. 'पूर्वभावस्तु विज्ञेयः सद्भिः कार्योपदेशकः' मु. १०. 'देवद्विजनृपादीनां प्रशस्तिः स्यात्प्रसाधनम्' मु. ११. 'रूपके' मु. १२. 'यन्मिश्राणि' क-ख. १३. 'कार्यं कालमवस्थां च ज्ञात्वा कार्याणि संधिषु' मु. १४. 'योगतः' मु. १५. 'संध्यन्तराणि संधीनां विशेषास्त्वेकविंशतिः' क-ख. १६. 'भेदप्रदानं च दण्डश्च वध' मु. १७. 'ज्ञेया सा' क-ख.

[1]ओजः संवरणं भ्रान्तिस्तथा हेत्ववधारणम् ।
[2]दूतो लेखस्तथा स्वप्नश्चि[3]त्तं मद इति स्मृतम् ॥ १०३ ॥
[[4]संध्यन्तराणि संधीनां विशेषास्त्वेकविंशतिः ।
विष्कम्भश्चूलिका चैव तथा चैव प्रवेशकः ।
अङ्कावताराङ्कमुखमर्थोपक्षेपपञ्चकम् ॥ १०४ ॥
मध्यमपुरुषनियोज्यो नाटकमुखसंधिमात्रसंचारः ।
विष्कम्भकस्तु संस्कृतपुरोहितामात्यकञ्चुकिभिः ॥ १०५ ॥
शुद्धः संकीर्णो वा द्विविधो विष्कम्भकस्तु विज्ञेयः ।
मध्यमपात्रैः शुद्धः संकीर्णो नीचमध्यकृतः ॥ १०६ ॥
अन्तर्जवनिकासंस्थैः शून्यादिभिरनेकधा ।
अर्थोपक्षेपणं यत्तु क्रियते सा हि चूलिका ॥ १०७ ॥
अङ्कान्तरानुसारी संक्षेपार्थमधिकृत्य बिन्दूनाम् ।
प्रकरणनाटकविषये प्रवेशको नाम विज्ञेयः ॥ १०८ ॥
नोत्तममध्यमपुरुषैराचरितो नाप्युदात्तवचनकृतः ।
प्राकृतभाषाचारः प्रवेशको नाम विज्ञेयः ॥ १०९ ॥
अङ्कान्तरेऽथवाङ्के निपतति यस्मिन्प्रयोगमासाद्य ।
बीजार्थयुक्तियुक्तो ज्ञेयो ह्यङ्कावतारोऽसौ ॥ ११० ॥
विश्लिष्टमुखमङ्कस्य स्त्रिया वा पुरुषेण वा ।
यदुपक्षिप्यते पूर्वं तदङ्कमुखमुच्यते ॥ १११ ॥
वृत्तिवृत्त्यङ्गसंपन्नपदार्थप्रकृतिक्षमम् ।
पञ्चावस्थाभिनिष्पन्नैः पञ्चभिः संधिभिर्युतम् ॥ ११२ ॥
[5]संध्यन्तरैकविंशत्या चतुःषष्ट्यङ्गसंयुतम् ।
षट्त्रिंशल्लक्षणोपेतं गुणालंकारभूषितम् ॥ ११३ ॥
महारसं महाभोगमुदात्तवचनान्वितम् ।
महापुरुषसंचारं साध्याचारं जनप्रियम् ॥ ११४ ॥

---

१. 'तेजः' क-ख. २. 'भ्रान्ता' क-ख. ३. 'श्चित्रं मद इति द्विजाः' मु. ४. धनुश्चिन्हान्तर्गतपाठो लिखितादर्शयोर्नोपलभ्यते. ५. 'पञ्चसंधि चतुर्वृत्ति' क-ख.

सुश्लिष्ट[1]संधिसंयोगं सुप्रयोगं सुखाश्रयम् ।
मृदुशब्दाभिधानं च कविः कुर्यात्तु नाटकम् ॥ ११५ ॥
अवस्था या हि लोकस्य सुखदुःखसमुद्भवा ।
नानापुरुषसंचारा नाटके [2]साभिधीयते ॥ ११६ ॥
न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला ।
न तत्[3]कर्म न वा योगो नाटके यन्न दृश्यते ॥ ११७ ॥
योऽयं स्वभावो लोकस्य [4]नानावस्थानयात्मकः ।
[5]सोऽङ्गाद्यभिनयैर्युक्तो नाट्यकं त्वभिधीयते ॥ ११८ ॥
देवतानामृषीणां च राज्ञां चो[6]त्कृष्टनैधनम् ।
पूर्ववृत्तानुचरितं [7]नाट्यकं नाम तद्भवेत् ॥ ११९ ॥
यस्मात्[8]स्वभावः संहृत्य साङ्गोपाङ्गगतिक्रमैः ।
प्रयुज्यते ज्ञायते च [9]तस्माद्वै नाटकं स्मृतम् ॥ १२० ॥
सर्वभावैः सर्वरसैः सर्वकर्मप्रवृत्तिभिः ।
नानावस्थान्तरोपेतं नाटकं संविधीयते ॥ १२१ ॥
[10]यान्येकशिल्पजातानि एकरूपकृतानि च ।
तानि शेषाणि रूपाणि प्रयोज्यानि प्रयोक्तृभिः ॥ १२२ ॥
लोक[11]स्वभावं संप्रेक्ष्य नराणां च बलाबलम् ।
संभोगं चैव युक्तिं च ततः [12]कुर्यात्तु नाटकम् ॥ १२३ ॥
[13]भविष्यति युगे प्रायो भविष्यन्त्यबुधा नराः ।
ये चापि हि भविष्यन्ति तेऽप्यल्पश्रुतबुद्धयः ॥ १२४ ॥
बुद्धयः कर्म शल्यानि(शास्त्राणि) वैचक्षण्यं बलानि च ।
सर्वाण्येतानि [14]नश्यन्ति यदा लोकः प्रणश्यति ॥ १२५ ॥

---

१. 'संधियोगं यत्' क-ख. २. 'सा भवेदिह' मु. ३. 'कर्म समायोगो' मु. ४. 'नानावस्थान्तरात्मकः' मु. ५. 'साङ्गाभिनयसंयुक्तो नाटके संविधीयते' मु. ६. 'लोकस्य चैव हि' मु. ७. 'नाटकं' मु. ८. 'स्वभावं संहृत्य साङ्गोपाङ्गमतिक्रमैः' मु. ९. 'यस्मात्तत्' मु. १०. अयं श्लोको लिखितादर्शयोर्नास्ति. ११. 'लोकस्य भावं' मु. १२. 'कार्यं तु' मु. १३. 'श्लोके प्रणश्यति प्रायो भवन्त्यविबुधा' मु. १४. 'यदा लोकः विना नाट्यं प्रणश्यति' मु.

तदेवं लोकभावानां प्रसमीक्ष्य बलाबलम् ।
मृदुशब्दं सुखार्थं च कविः कुर्यात्तु नाटकम् ॥ १२६ ॥
चेक्रीडिताद्यैः शब्दैस्तु काव्यबन्धा भवन्ति ये ।
वेश्या इव न भान्ति च कमण्डलुधरैर्द्विजैः ॥ १२७ ॥
दशरूपविधानं हि मया प्रोक्तं द्विजोत्तमाः ।
अतःपरं प्रवक्ष्यामि वृत्तीनामिह लक्षणम् ॥ १२८ ॥

इति भारतीये नाट्यशास्त्रे संधिनिरूपणं नामैकोनविंशतितमोऽध्यायः ।

---

## विंशतितमोऽध्यायः ।

समुत्थानं तु वृत्तीनां व्याख्यास्याम्यनुपूर्वशः ।
यथा वस्तूद्भवं चैव काष्ठानां च विकल्पनम् ॥ १ ॥
एकार्णवं जगत्कृत्वा भगवानच्युतो यदा ।
शेते स नागपर्यङ्के लोकान्संक्षिप्य मायया ॥ २ ॥
अथ वीर्यबलोन्मत्तावसुरौ मधुकैटभौ ।
तर्जयामासतुर्देवं तरसा युद्धकाङ्क्षया ॥ ३ ॥
निजबाहुविसृष्टौ तौ भूतभावनमक्षयम् ।
जानुभिर्मुष्टिभिश्चैव योधयामासतुः प्रभुम् ॥ ४ ॥
बहुभिः परुषैर्वाक्यैरन्योन्यस्पर्धयान्वितौ ।
नामविक्षेपवचनैः कम्पयन्ताविवोदधिम् ॥ ५ ॥
तयोर्नानाप्रकाराणि श्रुत्वा वाक्यानि तर्जनाम् ।
किंचिदाकम्पितमना द्रुहिणो वाक्यमब्रवीत् ॥ ६ ॥
किमियं भारती वृत्तिर्वाग्भिरेव प्रवर्तिता ।
उत्तरोत्तरसंबद्धा नन्विमौ निधनं नय ॥ ७ ॥

---

१. 'यथाक्रमम्' मु. २. 'यथार्थं च तज्ज्ञैः कार्यं तु लक्षणम्' मु. ३. अयं श्लोको लिखितादर्शे नोपलभ्यते. ४. 'अङ्गविकल्पो' मु. ५. मुद्रितादर्शानुसारेण, लिखितादर्शयोस्तु 'विंशोऽध्यायः' इति दृश्यते. ६. 'काम्यानां' मु. ७. 'काङ्क्षिणौ' मु. ८. 'विबुद्धं तौ' क-ख. ९. 'नाना' मु. १०. 'तयोरनेकरूपाणि वचांसि वदतोस्तदा । श्रुत्वा आकम्पितमना' मु. ११. 'संबन्धान्नन्विमौ' मु.

पितामहवचः श्रुत्वा प्रोवाच मधुसूदनः ।
कार्यहेतोर्मया ब्रह्मन्भारतीयं विनिर्मिता ॥ ८ ॥
वदतां वा[1]क्प्रभूयिष्ठा भारतीयं भविष्यति ।
अहमेतौ निहन्म्यद्य इत्युक्त्वा वचनं हरिः ॥ ९ ॥
शुद्धैरविकृतैरङ्गैः साङ्गहारैस्तदा भृशम् ।
योधयामास तौ दैत्यौ [2]युद्धमार्गविशारदौ ॥ १० ॥
भूमिसंस्थानसंयोगैः पदन्यासैर्हरे[3]स्ततः ।
अतिभारोऽभवद्भूमेर्भारती [4]तत्र निर्मिता ॥ ११ ॥
[5]वल्गितैः शार्ङ्गध[6]नुषस्तीव्रैर्दीप्तिकरैरथ ।
सत्त्वाधिकैरसंभ्रान्तैः सात्त्वती [7]तत्र निर्मिता ॥ १२ ॥
वि[8]चित्रैरङ्गहारैस्तु देवो लीलासमुद्भवैः ।
बबन्ध यच्छिखापाशं कैशिकी तत्र निर्मिता ॥ १३ ॥
संरम्भावेगबहुलैर्ना[9]नाचारसमुद्भवैः ।
नियुद्धकरणैश्चित्रैरु[10]त्पन्नारभटी ततः ॥ १४ ॥
यां यां देवः समाचष्टे क्रियां [11]वृत्तिषु संस्थिताम् ।
तां तदर्थानुगै[12]र्जल्पैर्द्रुहिणः प्रत्यपूजयत् ॥ १५ ॥
यदा हतौ तावसुरौ हरिणा मधुकैटभौ ।
ततोऽब्रवीत्पद्मयोनिर्नारायणमरिंदमम् ॥ १६ ॥
अहो विचित्रैर्ललितैः स्फुटैः सुविशदैरपि ।
अङ्गहारैः कृतं देव त्वया दानवनाशनम् ॥ १७ ॥
तस्मादयं हि[13] लोकस्य नियुद्धसमयक्रमः ।
सर्वशस्त्रविमोक्षेषु न्यायसंज्ञो भविष्यति ॥ १८ ॥
[14]न्यायाश्रितैरङ्गहारैर्न्यायैश्चैव समुत्थितैः ।
यस्माद्युद्धान्यवर्तन्त तस्मान्न्यायाः प्रकीर्तिताः ॥ १९ ॥

---

१. 'वर भूयिष्ठा' मु. २ 'बाहुयुद्धविशारदौ' मु. ३. 'स्तदा' मु. ४. 'तेन' मु. ५. 'वर्जितै' क-ख. ६. 'धनुषा तीव्रदीप्ततरैरथ' मु. ७. 'च विनिर्मिता' मु. ८. 'विविधै' मु. ९. 'नानाचारी समन्वितैः' मु. १०. 'रङ्गै' मु. ११. 'वृत्तिसमुद्भवाम्' मु. १२. 'जल्पै' मु. १३. 'सर्वलोके नियुद्धः समयः शुभः' मु. १४. 'न्याससमुत्थितैश्चित्रैरङ्गहारैर्विभूषितम् । यस्माद्युद्धं कृतं ह्येतत्तस्मान्न्यायाः' मु.

ततो[1] वेदेषु निक्षिप्ता द्रुहिणेन महात्मना।
पुनरिष्टसुजातेन नानाचारीसमाकुले ॥ २० ॥
पुनर्नाट्यप्रयोगेण नानाभावसमन्विताः।
वृत्तिसंज्ञा वृता ह्येताः का[2]व्यसंज्ञाः समाश्रिताः ॥ २१ ॥
च[3]रितैः स्वस्य दैवस्य जप्यं यद्यादृशं कृतम्।
ऋषिभिस्तादृशी वृत्तिः कृता या[4](जा)प्याभिसंयुता ॥ २२ ॥
नाट्यवेदसमुत्पन्ना वाचां याभिनयान्विता।
मया काव्यक्रियाहेतोः प्रक्षिप्ता द्रुहिणाज्ञया ॥ २३ ॥
ऋ[5]ग्वेदाद्भारती वृत्तिर्य[6]जुर्वेदात्तु सात्त्विकी।
कैशिकी सा[7]मवेदाच्च शेषा चाथर्व[8]णात्तथा ॥ २४ ॥
या वाक्प्रधाना पु[9]रुषप्रयोज्या स्त्रीवर्जिता संस्कृतवा[10]क्ययुक्ता।
स्व[11]नामधेयैर्भरतैः प्रयुक्ता सा[12] भारती नाम भवेत्तु वृत्तिः ॥ २५ ॥
भेदास्तस्यास्तु विज्ञेयाश्चत्वारोऽङ्ग[13]त्वमागताः।
प्ररोचना मुखं चैव वीथी प्रहसनं तथा ॥ २६ ॥
ज[14]यन्त्युदयिनी चैव मङ्गल्या विजयावहा।
सर्वपापप्रशमनी पूर्वर[15]ङ्गे प्ररोचना ॥ २७ ॥
नटी विदूषको वापि पारिपार्श्वक एव वा।
सूत्रधारेण सहिताः संलापं य[16]त्तु कुर्वते ॥ २८ ॥
चित्रैर्वाक्यैः स्वकार्योत्थैर्वीथ्यङ्गै[17]रन्यथापि वा।
आ[18]मुखाङ्गान्यतो वक्ष्ये यथावदनुपूर्वशः ॥ २९ ॥
उद्धात्यकः कथोद्धातः प्रयोगातिशयस्तथा।
प्रवृत्तिकावलगि[19]तैरामुखाङ्गानि पञ्च वै ॥ ३० ॥

---

१. इदं श्लोकद्वयं लिखितादर्शे नोपलभ्यते. २. 'काव्यबन्धसमाश्रिताः' मु. ३. 'वल्गितैस्तस्य' मु. ४. 'याप्यङ्गसंभवा' मु. ५. 'ऋग्वेदे' मु. ६. 'यजुर्वेदे च' मु. ७. 'सामवेदे च' मु. ८. 'वणी तथा' मु. ९. 'नृवरप्रयोज्या' मु. १०. 'पाठ्य' मु. ११. 'भवनैः' मु. १२. 'तां भारतीं वृत्तिमुदाहरन्ति' मु. १३. 'द्रवमागताः' मु. १४. 'व्रजाभ्युद' मु. १५. 'रङ्गप्ररोचिनी' मु. १६. 'यत्र' मु. १७. 'रनपायि' मु. १८. अयमर्धश्लोको मुद्रितपुस्तके नोपलभ्यते. १९. 'लगिते आमु' मु.

[1]उद्घात्यकावलगितयोर्लक्षणं कथितं मया ।
शेषाणां लक्षणमहं व्याख्यास्याम्यनुपूर्वशः ॥ ३१ ॥
सूत्रधारस्य वाक्यं वा यत्र वाक्यार्थमेव वा ।
गृहीत्वा प्रविशेत्पात्रं कथोद्घातः स[2] कीर्तितः ॥ ३२ ॥
[3]प्रयोगे तु प्रयोगं तु सूत्रधारः प्रयोजयेत् ।
ततश्च प्रविशेत्पात्रं प्रयोगातिशयो हि सः ॥ ३३ ॥
[4]प्रवृत्तं कार्यमाश्रित्य सूत्रभृद्यत्र वर्णयेत् ।
[5]तदाश्रयाच्च पात्रस्य प्रवेशस्तत्प्रवृत्तिकम् ॥ ३४ ॥
एषामन्यतमं श्लिष्टं योजयित्वा[6]थ युक्तिभिः ।
पात्रग्रन्थैरसंबाधं प्रकुर्यादामुखं बुधः ॥ ३५ ॥
एवमेतद्बुधैर्ज्ञेयमामुखं वि[7]बुधाश्रयम् ।
लक्षणं पूर्वमुक्तं तु वीथ्याः प्रहसनस्य च ॥ ३६ ॥
[[8]इत्यष्टार्थविकल्पा वृत्तिरियं भारती मया प्रोक्ता ।
सात्त्वत्यास्तु विधानं लक्षणयुक्त्या प्रवक्ष्यामि ॥ ३७ ॥
या सात्त्वतेनेह गुणेन युक्ता न्यायेन वृत्तेन समन्विता च ।
हर्षोत्कटा संहृतशोकभावा सा सात्त्वती नाम भवेत्तु वृत्तिः ॥ ३८ ॥]
वागङ्गाभिनयवती सत्त्वोत्थानवचनप्रकरणेषु ।
सत्त्वाधिकारयुक्ता विज्ञेया सात्त्वती वृत्तिः ॥ ३९ ॥
[9]वीराद्भुतरौद्ररसा निरस्तशृङ्गारकरुणनिर्वेदा । (?)
उद्धतपुरुषप्राया [10]परस्पराधर्षणकृता च ॥ ४० ॥
उत्थापकश्च[11] परिवर्तकश्च संलापकः ससंघातः ।
[12]चत्वारोऽस्या भेदा विज्ञेया नाट्यतत्वज्ञैः ॥ ४१ ॥

---

१. 'उद्घात्यकावलगिते वीथ्यङ्गे तु मयोदिते' मु. २. 'प्रकीर्तितः' मु. ३. 'प्रयोगेऽत्र प्रयोगं तु सूत्रभृद्यत्र योजयेत्' मु. ४. 'कालं प्रवृत्तमाश्रित्य' मु. ५. 'तदाश्रयस्य' मु. ६. 'अर्थयुक्तिभिः' मु. ७. 'विविधा' मु. ८. धनुश्चिह्नान्तर्गतपाठो लिखितादर्शयोर्नोपलभ्यते. ९. 'वीराद्भुतरौद्ररसा विज्ञेया ह्यल्पकरुणशृङ्गारा' मु. १०. 'परस्पराधर्षणा चैव' मु. ११. 'उपरिवर्तकश्च संलापकश्च संघात्यः' मु. १२. 'चत्वारश्चैव' मु.

[1]अहमप्युत्थास्यामि त्वं तावद्दर्शयात्मनः शक्तिम्।
इति संघर्षसमाश्रयमुत्थितमुत्थापको ज्ञेयः ॥ ४२ ॥

उत्थानस[2]मारब्धानर्थानुत्सृज्य योऽर्थयोगवशात्।
अन्यानर्थान्भजते स चापि परिवर्तको ज्ञेयः ॥ ४३ ॥

[3]साधर्षजो निराधर्षजोऽपि वा विविधवचनसंयुक्तः।
[4]साधिक्षेपालापो ज्ञेयः संलापकः सोऽपि ॥ ४४ ॥

मि[5]त्रार्थवाक्ययुक्त्या दैववशादात्मदोषयोगाद्वा।
संघातभेदजननस्तज्ज्ञैः संघातको ज्ञेयः ॥ ४५ ॥

इत्यष्टार्धविकल्पा वृत्तिरियं सात्त्वती [6]मयाभिहिता।
कैशिक्यास्त्वि[7]ह लक्षणमतःपरं संप्रवक्ष्यामि ॥ ४६ ॥

या श्लक्ष्णनेपथ्यविशेषचित्रा [8]स्त्रीसंयुता या बहुनृत्तगीता।
कामोपभोगप्रभवोपचारा तां कैशिकीं वृत्तिमुदाहरन्ति ॥ ४७ ॥

नर्म च[9] नर्मस्पुञ्जो नर्मस्फोटोऽथ नर्मगर्भश्च।
कैशिक्याश्चत्वारो भेदा ह्येते समाख्याताः ॥ ४८ ॥

आस्थापितशृङ्गारं विशुद्धकरणं निवृत्तवीररसम्।
हास्यप्रवचनबहुलं नर्म त्रिविधं विजानीयात् ॥ ४९ ॥

[10]ईर्ष्याक्रोधप्रयासोपालम्भवचनाविरुद्धं च (?)।
[11]आत्मोपक्षेपकृतं सविप्रलम्भं स्मृतं नर्म ॥ ५० ॥

नवसंगमसंभोगो रतिसमुदयवेषवाक्यसंयुक्तः।
ज्ञेयो नर्मस्पुञ्जो [12]ह्यवमानभयात्मकश्चैव ॥ ५१ ॥

विविधानां भावानां लवैर्लवैर्भूषितो बहुविशेषैः।
असमग्राक्षिप्तरसो नर्मस्फोटस्तु विज्ञेयः ॥ ५२ ॥

---

१. 'अहमुत्थस्याप्येवं' मु. २. 'समारोल्लानया' मु. ३. मुद्रितपुस्तके नोपलभ्यते. ४. 'सामबीजानिरामर्षोऽपि लापो सल्लापको नाम मु. ५. 'मन्त्रार्थकार्यशक्त्यां' मु. ६. 'मया प्रोक्ता' मु. ७. 'स्त्वथ' मु. ८. 'स्त्रीपुंसयुक्ता' मु. ९. 'सनर्म' मु. १०. 'ईर्ष्योक्तोद्धतप्रायं सोपालम्भवचनानुविद्धं च' मु. ११. 'आक्षेपोपक्षेपकृतं सवि' मु. १२. 'ह्यवसान' मु.

विज्ञान[1]रूपसंभावनादिभिर्नायको गुणैर्यत्र ।
प्रच्छन्नैर्व्यवहरते कार्यवशान्नर्मगर्भोऽसौ ॥ ५३ ॥
इत्यष्टार्धविकल्पा वृत्तिरियं कैशिकी मया[2]भिहिता ।
अत ऊर्ध्वमुद्धतरसामारभटीं संप्रवक्ष्यामि ॥ ५४ ॥
आरभटप्रायगुणा तथैव बहुकपटवञ्चनोपेता ।
दम्भानृतवचनवती त्वारभटी नाम विज्ञेया ॥ ५५ ॥

प्रस्तावपातप्लुत[3]लङ्घितानि छेद्यानि मायाकृतमिन्द्रजालम् ।
चित्राणि युद्धानि च यत्र नित्यं तां तादृशीमारभटीं वदन्ति ॥५६॥

संक्षिप्तकावपातौ वस्तूत्थापनमथापि संफेटः ।
एते ह्यस्या भेदा लक्षणमेषां प्रवक्ष्यामि ॥ ५७ ॥
अन्वर्थशिल्पयुक्तो बहुपुस्तो[4]त्थानवाच(?)संयुक्तः ।
संक्षिप्तवस्तुविषयः[5] सोऽपि हि संक्षिप्तको ज्ञेयः ॥ ५८ ॥
भयहर्षसमुत्थानं विद्रवविनिपातसंभ्रमावरणम् ।
क्षिप्रप्रवेशनिर्गममवपातमिमं विजानीयात् ॥ ५९ ॥
नैक[6]रसलेशयुक्तं सविद्रवं वाप्यविद्रवं वापि ।
कार्यं विभाव्यते यत्तद्वस्तूत्थापनं ज्ञेयम् ॥ ६० ॥
संरम्भसंप्रयुक्तो बाहु[नि]युद्धातियुद्धकपटनिर्भेदः ।
शस्त्रप्रहारब[ह]लः संस्फोटो नाम विज्ञेयः ॥ ६१ ॥
एवमेता बुधैर्ज्ञेया वृत्तयो[7] नाट्यमातरः ।
[8]रसप्रयोगमासां च कीर्त्यमानं निबोधत ॥ ६२ ॥
हास्यशृङ्गार[9]करुणैर्वृत्तिः स्यात्कैशिकी रसैः ।
सात्वती या[10]पि च ज्ञेया वीराद्भुतसमाश्रया ॥ ६३ ॥

---

१. 'विज्ञानगुणसंभावादि' मु. २. 'प्रोक्ता' मु. ३. 'वञ्चितानि' क-ख. ४. 'पुस्तोत्थापनचित्रनेपथ्यः' मु. ५. 'विज्ञो ज्ञेयः संक्षिप्तको नाम' मु. ६. 'सर्वरससमासक्तं सविद्रमविद्रवाश्रयं चापि । पश्चाद्विभाषते यत्' मु. ७. 'वृत्तयः काव्यहेतवे' क-ख. ८. 'ससंप्रयोगतासां च गदतो मे निबोधत' क-ख. ९. 'बहुला कैशिकी परिप्रश्रिता' क-ख. १०. 'चापि विज्ञेया वीररौद्राद्भुताश्रया' मु.

रौद्रे भयानके चैव विज्ञेयारभटी बुधैः ।
बीभत्से करुणे चैव भारती संप्रकीर्तिता ॥ ६४ ॥
वृत्त्यन्त एषोऽभिनयो मयोक्तो वागङ्गसत्त्वप्र[1]भवः समासात् ।
आहार्यमेवाभिनयं प्रयोगे वक्ष्यामि नेपथ्यकृतं यथावत् ॥ ६५ ॥

इति भारतीये नाट्यशास्त्रे वृत्तिविकल्पो नामाध्यायो विंशः ।

---

एकविंशोऽध्यायः ।

आहार्याभिनयं विप्राः प्रवक्ष्याम्यनुपूर्वशः ।
प्रयोगो यत्र सर्वोऽयमाहार्याभिनये स्थितः ॥ १ ॥
नानावस्थाः प्रकृतयः पूर्वं नेपथ्यसाधिताः ।
अङ्गादिभिरभिव्यक्तिमन्ते गच्छन्त्ययत्नतः ॥ २ ॥
आहार्याभिनयो नाम ज्ञेयो नेपथ्यजो विधिः ।
तत्र कार्यः प्रयत्नस्तु नाट्यस्य शुभमिच्छता ॥ ३ ॥
चतुर्विधं तु नेपथ्यं मुक्तालंकार एव च ।
नाट्याङ्गरचना चैव ज्ञेयः सज्जीवमे(ए)व च ॥ ४ ॥
पुस्तस्तु त्रिविधो ज्ञेयो नानारूपप्रमाणतः ।
संधिमो व्याजिमश्चैव वेष्टितश्च प्रकीर्तितः ॥ ५ ॥
कैलिञ्जं चर्मवस्त्राद्यैर्यद्रूपं क्रियते बुधैः ।
संधिमो नाम विज्ञेयः पुस्तो नरकसंश्रयः ॥ ६ ॥
व्याजिमो वा सुविज्ञेयो यन्त्रेण क्रियते तु यः ।
येस्वेते (?) चैव यद्रूपं वस्त्राद्यैर्वेष्टितः स तु ॥ ७ ॥
शि(शी)लयानविमानानि वर्मवर्मध्वजा नगाः ।
[3]यानि क्रियेत नाट्ये तु स पुस्त इति संज्ञितः ॥ ८ ॥
अलंकारस्तु विज्ञेयो माल्याभरणवाससाम् ।
नानाविधसमायोगो योगोऽ(ङ्गो)पाङ्गविनिर्मितः ॥ ९ ॥
विष्टिमं(?) विततं चैव संघात्यं तेपितं तथा ।
प्रलम्बितं तथा चैव माल्यं पञ्चविधं स्मृतम् ॥ १० ॥

---

१. 'प्रभवो यथावत्' मु. २. 'च भूयः' मु. ३. 'क्रियन्ते यानि' इति भवेत्.

चतुर्विधं तु विज्ञेयं देहस्याभरणं बुधैः ।
आवेध्यं बन्धनीयं च क्षेप्यमारोप्यकं तथा ॥ ११ ॥
आवेध्यं कुण्डलादीह यत्स्याच्छ्रवणभूषणम् ।
श्रोणिसूत्राङ्गदैर्मुक्ता बन्धनीया(?) विनिर्दिशेत् ॥ १२ ॥
प्रक्षेप्यं नूपुरं विद्याद्वस्त्राभरणमेव च ।
आरोप्यं हेमसूत्राणि हाराश्च विविधाश्रयाः ॥ १३ ॥
भूषणानां विकल्पं च पुरुषस्त्रीसमाश्रयम् ।
नानाविधं प्रवक्ष्यामि देशजातिसमुद्भवम् ॥ १४ ॥
चूडामणिः समुकुटः शिरसो भूषणं स्मृतम् ।
कुण्डलं कर्णमेवैककलाकरणमिष्यते ॥ १५ ॥
मुक्तावली हर्षकं च ससूत्रं कण्ठभूषणम् ।
वटिकाङ्गुलिमुद्रा च स्यादङ्गुलिविभूषणम् ॥ १६ ॥
केयूरावङ्गदे चैव कूर्परोपरिभूषणम् ।
त्रिसरश्चैव हारश्च विवा(ग्रीवा)वक्षोजभूषणम् ॥ १७ ॥
व्यालम्बिमुक्तिकाहारा मालाद्या देहभूषणम् ।
तरलं सूत्रकं चैवं भवेत्कटिविभूषणम् ॥ १८ ॥
अयं पुरुषनियोगः कार्यस्त्वाभरणाश्रयः ।
देवानां पार्थिवानां च पुनर्वक्ष्यामि योषिताम् ॥ १९ ॥
शिखापाशं शिखाजालं खण्डपत्रं तथैव च ।
चूडामणिं मकरिकां मुक्ताजालं गवाक्षि···· ॥ २० ॥
कुण्डलं खड्गपात्रं च वेणीगुच्छः सदारकः ।
ललाटतिलकश्चैव नानाशिल्पप्रयोजितः ॥ २१ ॥
भ्रूकक्षोपरिगुच्छश्च कुसुमानुकृतिस्तथा ।
कर्णिका कर्णवलयं तथा स्यात्पत्रकर्णिका ॥ २२ ॥
आपेश्रुकः कर्णमुद्रा कर्णोत्पलकमेव च ।
नानारत्नविचित्राणि दन्तपत्राणि चैव हि ॥ २३ ॥

कर्णयोर्भूषणं कार्यं कर्णपूरस्तथैव च।
तिलकाः पत्रलेखाश्च भवेद्गण्डविभूषणम् ॥ २४ ॥
मुक्तावली व्यालपङ्क्तिर्मञ्जरी रत्नमालिका।
रत्नावली सूत्रकं च विज्ञेयं कण्ठभूषणम् ॥ २५ ॥
नानारत्नकृताश्चैव हारा वक्षोविभूषणम्।
मणिजालानुबन्धं च भवेत्पृष्ठविभूषणम् ॥ २६ ॥
मुद्राङ्गुलीयकं चैव ह्यङ्गुल्याभरणं भवेत्।
शङ्ककलापी कटकं तथा स्यात्पत्रपूरकम् ॥ २७ ॥
खर्जूरकांशोपितिकं बाहुनानाविभूषणम्।
अङ्गुदेव (?) त्रयं चैव ज्ञेयं बाहुविभूषणम् ॥ २८ ॥
मुक्ताजालाद्यतिलकं मेखला काञ्चयथापि वा।
रसना च कलापश्च ज्ञेयं श्रोणिविभूषणम् ॥ २९ ॥
एकयष्टिर्भवेत्काञ्ची मेखला वे(त्व)ष्टवे(य)ष्टिका।
रसना षोडश ज्ञेयाः कलापः पञ्चविंशतिः ॥ ३० ॥
द्वात्रिंशत्षोडशाष्टौ च चतुःषष्टिः शतं तथा।
मुक्ताहारा भवन्त्येते देवपार्थिवयोषिताम् ॥ ३१ ॥
[नू]पुरं [कि]ङ्किणीकाश्च घण्टिका लालमेव च।
सुघोषे कटके चैव गुल्फोपरि विभूषणम् ॥ ३२ ॥
पदयोः पादपात्रं स्यादङ्गुलीष्वङ्गुलीयकम्।
अङ्गुष्ठे तिलकं चैव पादयोश्च विभूषणम् ॥ ३३ ॥
तथा भावरसावस्थं विज्ञेयं द्विजसत्तमाः।
एतद्विभूषणं नार्या आकेशादानखादपि ॥ ३४ ॥
आगमश्च प्रमाणं च रूपनिर्वर्णनं तथा।
विश्वकर्मभ(मौक्ति)वत्कार्यं बुद्ध्या वापि प्रयोक्तृभिः ॥ ३५ ॥
............बहुविधं नानापत्तनसंभवम्।
तज्ज्ञेयं त्रिप्रकारं तु शुद्धं रक्तं विचित्रितम् ॥ ३६ ॥

दिव्यपार्थिवयोरेवं प्रोक्तमेतद्द्विधा द्विजाः ।
तर्हि शक्त्यनुसारेण मुक्ताभिर्मणिभिस्तथा ॥ ३७ ॥
स्वाधीनमतिरूढ्यैव कर्तुमङ्गस्य भूषणम् ।
मुक्तामणिलताप्रायं फणास्तासां तु केवला (?)॥ ३८ ॥
कार्यं तु मुनिकन्यानामेकवेणिधरं शिरः ।
न चापि भूषणविधिस्तासामप्यर्पितो भवेत् ॥ ३९ ॥
एवं शृङ्गारिणः कार्या वेषा देवाङ्गनाश्रयाः ।
मानुषीणां तु कर्तव्या नानादेशसमाश्रयैः ॥ ४० ॥
भूषणैश्चापि वेशैश्च नानास्थानसमाश्रयैः ।
दिव्याङ्गनानां कर्तव्या विभक्तिश्च····भूमिजा ॥ ४१ ॥
विद्याधरीणां यक्षीणामप्सरोनागयोषिताम् ।
मुक्तामणिमणिप्रायं फणास्तासां च मूर्धनि ॥ ४२ ॥
अप्सरोयक्षनारीणां कार्यें कार्यं च भूषणम् ।
समस्तानां भवेद्वेषो यक्षाणां केवलं शिखा ॥ ४३ ॥
शिलाघु(?) शशिखण्डं च मुक्ताभूयिष्ठभूषणम् ।
विद्याधरीणां कर्तव्यं चित्रवेषपरिच्छदम् ॥ ४४ ॥
कार्यं तु मुनिकन्यानामेकवेणीधरं शिरः ।
न चापि भूषणविधिस्तासां वेषो वनोचितः ॥ ४५ ॥
भुवं (?) शृङ्गारिणः कार्या वेषा दिव्याङ्गनासु वा ।
अवस्थान्तरमासाद्य शुद्धाः कार्यास्तथैव च ॥ ४६ ॥
मानुषीणां तु कर्तव्या नानादेशसमुद्भवाः ।
वेषास्त्वाभरणोपेतास्तांश्च सम्यङ्निबोधत ॥ ४७ ॥
अच्छचन्तियुवतीनां तु शिरः सालककुन्तलम् ।
गौडीनामलकप्रायं शेषा प्रायैकवेणिकम् ॥ ४८ ॥
आभीरयुवतीनां तु द्विवेणीधरमेव च ।
शिरः परिगतं कार्यं नीलप्रायमथाम्बरम् ॥ ४९ ॥

---

१ 'शक्त्यसुवर्णं' क-ख. २. 'देशै' क-ख. ३. 'अवन्तियुवतीनाम्' इति भवेत्.

तथा पूर्वोत्तरस्त्रीणां समुद्धतशिखण्डकम् ।
आवेशाच्छेदकं तासां देशकर्मणि कीर्तितम् ॥ ५० ॥
तथा च दक्षिणस्त्रीणां कार्यमुल्लेख्यसंज्ञितम् ।
कुम्भीपथाङ्कसंयुक्तं तथावर्तललाटकम् ॥ ५१ ॥
देशजातिविधानेन शेषाणामपि कारयेत् ।
येषां तथा चाभरणं क्षुरकर्मपरिच्छदम् ॥ ५२ ॥
[1]आदेशयुक्तो वेषो हि न शोभां जनयिष्यति ।
मेखलोरसिबन्धेव हास्यं समुपपादयेत् ॥ ५३ ॥
तथा प्रोषितकान्तासु मदनाभिहतासु च ।
वेषो वै मलिनः कार्यः शिरश्चाप्येकवेणिकम् ॥ ५४ ॥
विप्रलम्भे हि [2]नार्यास्तु शुद्धो वेषो भवेदिह ।
नान्याभरणसंयुक्तो न वापि हि नृतायुतः ॥ ५५ ॥
एवं स्त्रीणां प्रयोक्तव्या वेषा देशसमुद्भवाः ।
पुरुषाणां पुनश्चैव [3]वेषान्वक्ष्यामि तत्त्वतः ॥ ५६ ॥
तत्राङ्गरचना पूर्वं कर्तव्या नाट्ययोक्तृभिः ।
अतः परं प्रयोक्तव्या वेषा देशसमुद्भवाः ॥ ५७ ॥
सितो नीलश्च पीतश्च चतुर्थो रक्त एव च ।
राते स्वभावजा वर्णा यैः कार्यं त्वङ्गवर्तनम् ॥ ५८ ॥
संयोगजाः पुनस्त्वन्ये उपवर्णा भवन्ति हि ।
तानहं संप्रवक्ष्यामि यथा कार्याः प्रयोक्तृभिः ॥ ५९ ॥
सितपीतसमायोगः पाण्डुर्वर्ण इति स्मृतः ।
सितरक्तसमायोगः पद्मवर्ण इति स्मृतः ॥ ६० ॥
सितनीलसमायोगः कापोतो नाम जायते ।
पीतनीलसमायोगाद्धरितो नाम जायते ॥ ६१ ॥
नीलरक्तसमायोगा[4]त्कांवायो नाम जायते ।
रक्तपीतसमायोगाद्गौर इत्यभिधीयते ॥ ६२ ॥

---

१. 'अदेश' इति पाठे देशान्तरेत्यर्थः. २. 'भार्यास्तु' ख. ३. 'येषां' ख. ४. 'त्का-षायो' इति भवेत्.

एते संयोगजा वर्णा ह्युपवर्णास्तथापरे ।
त्रिचतुर्वर्णसंयुक्ता बहवः परिकीर्तिताः ॥ ६३ ॥
बलस्थो यो भवेद्वर्णस्तस्य भागो विधीयते ।
दुर्बलस्य च भागौ द्वौ नीलवर्णादृते भवेत् ॥ ६४ ॥
नीलस्यैको भवेद्भागश्चत्वारोऽन्यस्य तु स्मृताः ।
वर्णस्य तु बलीयस्त्वं नीलस्यैव हि कीर्त्यते ॥ ६५ ॥
एवं वर्णविधिं ज्ञात्वा मानसंयोगसंश्रयम् ।
ततः कुर्याद्यथायोगमङ्गानां वर्तनं बुधः ॥ ६६ ॥
वर्तनाच्छादितं रूपं स्ववेषपरिवर्तितम् ।
नाट्यधर्मप्रवृत्तं तु ज्ञेयं तत्प्रकृतिस्थितम् ॥ ६७ ॥
यथा जन्तुः स्वभावस्थं परित्यज्यान्यदैहिकम् ।
तत्स्वभावं हि भजते देहान्तरमुपाश्रितः ॥ ६८ ॥
पोषणष्वर्षकौ(?)श्चैव च्छादितः पुरुषस्तथा ।
परप्रभावं कुरुते यस्य वेषमुपाश्रितः ॥ ६९ ॥
देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ।
प्राणिसंज्ञाः[1](?) कृता ह्येते जीवबन्धास्तथापरे ॥ ७० ॥
शैलप्रासादयन्त्राणि चर्मवर्मध्वजास्तथा ।
नानाप्रहरणाद्याश्च ते प्राणिन इति स्मृताः ॥ ७१ ॥
अथवा कारणोपेता भवन्त्येते शरीरिणः ।
वेषभाषाश्रयोपेता नाट्यधर्ममवेक्ष्य तु ॥ ७२ ॥
वर्णानां तु विधिं ज्ञात्वा तथा[2] प्रकृतिमेव च ।
कुर्यादङ्गस्य रचनां देशजातिवयःश्रिताम् ॥ ७३ ॥
देवागिरोस्तु[3](?) कर्तव्या वक्ष्ये चाप्सरसस्तथा ।
रुद्रार्कद्रुहिणस्कन्दास्तपनीयसमप्रभाः ॥ ७४ ॥
सोमो बृहस्पतिः शुक्रो वरुणस्तारणाग्रणीः(?) ।
सुमुद्रादिलवा वर्णाः सिताः कार्यास्तु वर्णतः ॥ ७५ ॥

---

१. 'प्राणिसंघाः' इती भवेत्. २. 'त(व)यः' ख. ३. 'देवां गिरो' ख.

रक्तमङ्गारकं विद्यात्पीतौ बुधहुताशनौ।
नारायणो नरश्चैव सोमनागश्च वासुकिः॥ ७६ ॥
दैत्याश्च दानवाश्चैव राक्षसा गुह्यका नगाः।
पिशाचा जलमाकाशमसिता वर्णतः स्मृताः॥ ७७ ॥
नानावर्णाः स्मृता यक्षा गन्धर्वा भूतपन्नगाः।
विद्याधराः सपितरो मानवाश्च तथैव च॥ ७८ ॥
वसन्ति षड्गुण····द्वी ये नरा वर्णतस्तु ते।
कर्तव्या नाट्यतत्त्वज्ञैर्निष्टम्भ(प्त)कनकप्रभाः॥ ७९ ॥
जम्बूद्वीपस्य वर्षे तु नानावर्णाश्रया नराः।
उत्तरांस्तु कुरूंस्त्यक्त्वा ते चापि कनकप्रभाः॥ ८० ॥
इन्द्रश्च गुरुवा(?) श्वेताः कर्तव्या वर्णतस्तथा।
केतुमाले नरा नीला गौराः शेषेषु कीर्तिताः॥ ८१ ॥
नानावर्णाः स्मृताः सर्वे गन्धर्वा यक्षपन्नगाः।
विद्याधरास्तथा चैव पितरश्च समानवाः॥ ८२ ॥
पुनश्च भारते वर्षे ताम्रान्वर्णा[1] निबोधत।
विज्ञानः पद्मवर्णास्तु गौराः श्यामास्तथैव च॥ ८३ ॥
ये चापि सुखिनो मर्त्या गौराः कार्यास्तु ते बुधैः।
कुकर्मिणो ग्रहग्रस्ता व्याधितास्तपसि स्थिताः॥ ८४ ॥
आयज्ञकर्मिणश्चैव ह्यसिताश्च कुजातयः।
ऋषयश्चैव कर्तव्या नित्यं तु बदरप्रभाः॥ ८५ ॥
तपःस्थिताश्च ऋषयो नित्यमेतावता बुधैः।
कारणव्यपदेशेन तथा चात्मेच्छया पुनः॥ ८६ ॥
वर्णस्त्वन्योऽपि कर्तव्यो देशजातितपोनुगः।
देशं कर्म च जातिं च पृथिव्युद्देशसंश्रयम्॥ ८७ ॥
विज्ञाय वर्तना कार्या पुरुषाणां प्रयोगतः।
किरातबर्बरान्ध्राश्च द्रविडाः काशिकोसलाः॥ ८८ ॥

---

१. 'ताम्रवर्णान्' इति भवेत्.

पुलिन्दा दाक्षिणात्याश्च प्रायेण त्वसिताः स्मृताः ।
शकाश्च यवनाश्चैव पाह्नवा(?) बाह्लिकाश्रयाः ॥ ८९ ॥
प्रायेण गौराः कर्तव्या उत्तरां पश्चिमां दिशम् ।
पाञ्चालाः शूरसेनाश्च माहिषा उड्रमागधाः ॥ ९० ॥
अङ्गा वङ्गाः कलिङ्गाश्च श्यामाः कार्यास्तु वर्णतः ।
ब्राह्मणाः क्षत्रियाश्चैव गौराः कार्यास्तथैव च ॥ ९१ ॥
वैश्याः शूद्रास्तथा श्यामाः कार्याश्चैव हि सर्वतः ।
एवं कृत्वा यथान्यायमङ्गोपाङ्गेषु वर्तनाम् ॥ ९२ ॥
श्मश्रुकर्म प्रयुञ्जीत देशकालवयोनुगम् ।
शुद्धं विचित्रं श्यामं च तथा रोमशमेव च ॥ ९३ ॥
चतुर्विधं भवेच्छ्मश्रु नानावस्थान्तराश्रयम् ।
शुद्धं तु लिङ्गिनां कार्यं तथामात्यपुरोधसाम् ॥ ९४ ॥
अनिस्तीर्णप्रतिज्ञानां दुःखितानां तपस्विनाम् ।
व्यसनाभिहतानां च श्यामं श्मश्रु प्रयोजयेत् ॥ ९५ ॥
मध्यस्था ये च पुरुषा ये च दीक्षां समाश्रिताः ।
दिव्या ये पुरुषाः किंचित्सिद्धा विद्याधरादयः ॥ ९६ ॥
पार्थिवाश्च कुमाराश्च ये च रां[1]ज्ञोपसेविनः ।
शृङ्गारिणश्च ये मर्त्या यौवनोन्मादिताश्च ये ॥ ९७ ॥
तेषां विचित्रं कर्तव्यं श्मश्रु नाट्यप्रयोक्तृभिः ।
ऋषीणां तापसानां च ये च दीर्घव्रता नराः ॥ ९८ ॥
तथा च वैरबद्धानां रोमशं तु भवेदथ ।
एवं नानाप्रकारं तु श्मश्रु कार्यं प्रयोक्तृभिः ॥ ९९ ॥
अत ऊर्ध्वं प्रवक्ष्यामि येषां[2] नानाप्रयोगजान् ।
शुद्धो विचित्रो मलिन [3]त्रिविधो ये च उद्यते (?) ॥ १००॥
तेषां नियोगं वक्ष्यामि यथावदनुपूर्वशः ।
धर्मप्रवृत्तवत्कार्यं स्त्रिया वा पुरुषस्य वा ॥ १०१ ॥

---

१. 'राजोप' इति भवेत्. २. 'वेषान्' इति स्यात्. ३. 'त्रिविधो यश्च' इति भवेत्.

वेषस्तत्रभवेच्छुद्धो ये च [1]प्रयत्निका (?) नराः ।
देवदानवयक्षाणां गन्धर्वोरगरक्षसाम् ॥ १०२ ॥
नृपाणां कर्कशानां च विशेषो यो भवेत्तथा ।
कञ्चुकिनाममात्यानां श्रेष्ठिनां सपुरोधसाम् ॥ १०३ ॥
सिद्धविद्याधराणां च वणिक्छस्त्रविदामपि ।
विप्रक्षत्रियवैश्यानां स्थानीया ये च मानवाः ॥ १०४ ॥
शुद्धो यस्त्रिविधस्तेषां कर्तव्यो नाटकाश्रयः ।
उत्तमानां प्रमत्तानामध्वगानां तथैव च ॥ १०५ ॥
व्यसनोपहतानां च मलिनो वेष उच्यते ।
शुद्धरक्तविचित्राणि वासांस्युच्चावचानि च ॥ १०६ ॥
योजयेन्नाट्यतत्त्वज्ञैर्वेषयोः शुद्धचित्रयोः ।
कुर्याद्वेषे तु मलिने मलिनानि विचक्षणः ॥ १०७ ॥
मुनिनिर्ग्रन्थशाक्येषु यतिपाशुपतेषु च ।
[2]प्रेतानुगश्च (?) कर्तव्यो वेषो लोकस्वभावतः ॥ १०८ ॥
चीरवल्कलचर्माणि तापसानां तु योजयेत् ।
अन्तःपुरप्रवेशे तु विनियुक्ता हि ये नराः ॥ १०९ ॥
काषायकञ्चुकिपटास्तेऽपि कार्या यथाविधि ।
[3]कुशजाश्चापि ये प्रोक्तास्तेषां चैव यथार्हतः (?) ॥ ११० ॥
अवस्थान्तरितश्चैव सम्यग्वेषो भवेत्तथा ।
साङ्ग्रामिकश्च शूराणां वेषः संपरिकीर्तितः ॥ १११ ॥
विचित्रशस्त्रकवचो बद्धतूणधनुर्धरः ।
चित्रो वेषस्तु कर्तव्यो नृपाणां नित्यमेव हि ॥ ११२ ॥
केवलस्तु भवेच्छुद्धो नक्षत्रोत्पातमङ्गले ।
एवं वेषो बुधैः कार्यो देशजातिगुणान्वितः ॥ ११३ ॥
उत्तमाधममध्यानां स्त्रीणां नृणामथापि वा ।
एवं वस्त्रविधिः कार्यः प्रयोगे नाटकाश्रये ॥ ११४ ॥

---

१. 'प्रयत्रिका' ख. २. 'व्रता' इति भवेत्. ३. 'कुलजा' ख.

नानावस्थां समासाद्य शुभाशुभकृतस्तथा ।
तथा प्रतिशिरश्चापि कर्तव्यं नाटकाश्रयम् ॥ ११५ ॥
दिव्यानां मानुषाणां च देशजातिवयःश्रितम् ।
पार्श्वागता मस्तकिनस्तथा चैव किरीटिनः ॥ ११६ ॥
त्रिविधा मुकुटा ज्ञेया दिव्यपार्थिवसंश्रयाः ।
देवगन्धर्वयक्षाणां पन्नगानां सरक्षसाम् ॥ ११७ ॥
कर्तव्या नैकविहिता मुकुटाः पार्श्वमौलिनः ।
उत्तमा ये च दिव्यानां तेषां कार्याः किरीटिनः ॥ ११८ ॥
मध्यमा मौलिनश्चैव कनिष्ठाः पार्श्वमौलिनः ।
नराधिपानां कर्तव्या(व्यं) मस्तके मुकुटं बुधैः ॥ ११९ ॥
विद्याधराणां सिद्धानां वानराणां तथैव च ।
ग्रन्थिता केशमुकुटाः कर्तव्यास्तु प्रयोक्तृभिः ॥ १२० ॥
देवदानवयक्षाणां पिङ्गकेशेक्षणानि हि ।
हरिच्छ्मश्रूणि च तथा नानारूपाणि कारयेत् ॥ १२१ ॥
सेनापतेः पुनश्चापि युवराजस्य चैव हि ।
योजयेदर्धमुकुटं कूटमात्राश्च ये नराः ॥ १२२ ॥
अमात्यानां कञ्चुकिनां तथा श्रेष्ठिपुरोधसाम् ।
वेष्टिताबद्धबद्धानि प्रतिशीर्षाणि कारयेत् ॥ १२३ ॥
पिशाचोन्मत्तभूतानां तापसानां तथैव च ।
अनिस्तीर्णप्रतिज्ञानां लम्बकेशं भवेच्छिरः ॥ १२४ ॥
बालानामपि कर्तव्यं शिरस्त्रिशिखभूषितम् ।
जटासु मुकुटं बर्हिर्मुनीनां च भवेच्छिरः ॥ १२५ ॥
चेटानामपि कर्तव्यं त्रिशिखं मुण्डमेव च ।
विदूषकस्य खलि(ल)तिः स्यात्काकपदमेव वा ॥ १२६ ॥
शेषाणामर्थयोगेन देशजातिसमाश्रयम् ।
शिरः प्रयोक्तृभिः कार्यं नानावस्थान्तरात्मकम् ॥ १२७ ॥

---

१. आदर्शद्वयेऽपीतः परं × इति चिह्नं वर्तते.

सज्जीव इति यः प्रोक्तस्तस्य वक्ष्यामि लक्षणम् ।
यः प्राणिनां प्रवेशो वै सज्जीव इति संज्ञितः ॥ १२८ ॥
चतुष्पदोऽथ द्विपदस्तथा चैवापदः स्मृताः ।
उरगान्ह्यपदान्विद्याद्द्विपदान्खगमानुषान् ॥ १२९ ॥
ग्रामारण्याश्च पशवो विज्ञेया वै चतुष्पदाः ।
एतेऽपि युद्धे संफेटैरुपरोधैस्तथैव च ॥ १३० ॥
नानाप्रहरणोपेताः प्रयोज्या नाटके बुधैः ।
आयुधानि च कार्याणि तज्ज्ञैः सम्यक्प्रमाणतः ॥ १३१ ॥
तान्यहं संप्रवक्ष्यामि यथावदनुपूर्वशः ।
भिण्डिर्द्वादश तालास्तु दश कुन्तो भवेदथ ॥ १३२ ॥
अष्टौ········शतघ्नी····शूलं तोमरमेव च ।
अष्टौ ताला धनुर्ज्ञेया(य)मायामोऽस्य द्विहस्तकम्(?) ॥१३३॥
शरो गदा च चक्रं च चतुस्तालं भवेदथ ।
अङ्गुलानि त्वसिः कार्यश्चत्वारिंशत्प्रमाणतः ॥ १३४ ॥
द्वादशाङ्गुलकं चक्रं ततोऽर्धं प्रास इष्यते ।
प्रासयत्यादिशं विद्याद्दण्डकाश्चैव विंशतिः ॥ १३५ ॥
विंशतिः कम्पनं चैव ह्यङ्गुलानि प्रमाणतः ।
षोडशाङ्गुलविस्तीर्णं सबलं संप्रकीर्तितम् ॥ १३६ ॥
त्रिंशदङ्गुलमानेन कर्तव्यं खेटकं बुधैः ।
जर्जरोदं[1] तु काष्ठं च तथैव प्रतिशीर्षकम् ॥ १३७ ॥
छत्रं च चामरं चैव वत्रे(?) भृङ्गार एव च ।
यत्किंचिन्मानुषे लोके द्रव्यं पुंसां प्रयोजयेत् ॥ १३८ ॥
यो[2] त्वोपकरणं(?) सर्वं तन्नाट्ये संप्रकीर्तितम् ।
यद्यस्य विषयप्राप्तं तेनोक्तं तस्य लक्षणम् ॥ १३९ ॥
माहेन्द्रा वै ध्वजाः प्रोक्ता लक्षणैः संप्रकीर्तिताः ।
एषामन्यतमं कुर्याज्जर्जरं दारु कर्मतः ॥ १४० ॥

---

१. 'तर्जरोदं' ख. २. ज्ञात्वेति भवेत्.

अथवा वृक्षयोनिः स्यात्प्रारब्धो वापि जर्जरः ।
वेणुरेव भवेच्छ्रेष्ठस्तस्य वक्ष्यामि लक्षणम् ॥ १४१ ॥
स्तेनभूम्यां तु यो जातः पुष्यनक्षत्रजस्तथा ।
संग्राह्यो वै भवेद्वेणुर्जर्जरार्थे प्रयत्नतः ॥ १४२ ॥
प्रमाणमङ्गुलानां तु शतमष्टोत्तरं भवेत् ।
पञ्चपर्वा चतुर्ग्रन्थिस्फालमात्रस्तथैव च ॥ १४३ ॥
स्थूलग्रन्थिर्न कर्तव्यो नाशाखी न च कीटवान् ।
न कृमिक्षतपर्वा च न हीनश्चान्यवेणुभिः ॥ १४४ ॥
मधुसर्पिःसर्षपाक्तं माल्यधूपपुरस्कृतम् ।
उपास्य विधिवद्वेणुं गृह्णीयाज्जर्जरं प्रति ॥ १४५ ॥
यो विधिर्यः क्रमश्चैव माहेन्द्रे तु ध्वजे स्मृतः ।
स जर्जरस्य कर्तव्यस्तुभ्यं(ल्य)वेणुसमाश्रयः ॥ १४६ ॥
नित्यं यः पीतपत्रश्च सरु(?)पत्रस्तथैव च ।
पर्यग्रतण्डुलश्चैव पुष्पवेणुः स कीर्तितः ॥ १४७ ॥
विधिरेवं मया प्रोक्तो जर्जरस्य महात्मनः ।
अत ऊर्ध्वं प्रवक्ष्यामि दण्डकाष्ठस्य लक्षणम् ॥ १४८ ॥
कपित्थबिल्ववंशेभ्यो दण्डकाष्ठं भवेदथ ।
वक्रं त्वेव हि तत्कार्यं त्रिभागे लक्षणान्वितम् ॥ १४९ ॥
कीटैर्नापहतं यच्च व्याधिना नैव पीडितम् ।
मन्दशाखं भवेद्यच्च दण्डकाष्ठं तदुच्यते ॥ १५० ॥
यस्त्वेभिर्लक्षणैर्हीनं दण्डकाष्ठं सजर्जरम् ।
कारयेत्स त्वपचयं महान्तं प्राप्नुयाद्ध्रुवम् ॥ १५१ ॥
तथा य(च) प्रतिशीर्षस्य घटिः कार्या प्रयत्नतः ।
स्वप्रमाणविनिर्दिष्टा द्वात्रिंशदङ्गुलानि वै ॥ १५२ ॥
बिल्वमध्येन कर्तव्या घटी शीर्षसमाश्रया ।
स्विन्नेन बिल्वकल्केन द्रवेण च समन्वितम् ॥ १५३ ॥

भस्मनो वा तुषैर्वापि कारयेत्प्रतिशीर्षकम् ।
संस्थाप्य तु ततो वस्त्रैर्बिल्वदिग्धैर्वनाश्रयैः ॥ १९४ ॥
बिल्वकल्केन चीरं तु दिग्धं संयोजयेद्धटिम् ।
न स्थूलां न च तां तन्वीं मृद्वीं नैव च कारयेत् ॥ १९५ ॥
तस्यामातपशुष्कायां सुशुष्कायामथापि वा ।
छेद्यं बुधाः प्रकुर्वन्ति विधिदृष्टेन कर्मणा ॥ १९६ ॥
सुतीव्रेणात्र शस्त्रेण अर्धार्धं विप्रभज्यते ।
स्वप्रमाणविनिर्दिष्टं ललाटकृतकौतुकम् ॥ १९७ ॥
अर्धाङ्गुलं ललाटालंकार्यं छेद्यं षडङ्गुलम् ।
अर्धार्धमङ्गुलं छेद्यं कटेव (?) ह्यङ्गुलं भवेत् ॥ १९८ ॥
कथं ते (?) कर्णतालस्य छेद्यं ह्यधिकमङ्गुलम् ।
अङ्गुलं कर्णविवरं सदैव च्छेद्यमेव हि ॥ १९९ ॥
ततश्चैवायदुः[1] कार्या सुसमा द्वादशाङ्गुलम् (?) ।
घेत्याद्ये[2](?) तत्सदा छेदैर्विधानं विहितं मया ॥ १६० ॥
तस्योपरिगताः कार्या मुकुटा वा(ब)हुशिल्पजाः ।
नानारत्नप्रतिच्छन्ना बहुरूपोपशोभिताः ॥ १६१ ॥
तथोपकरणानीह नाट्ययुक्तिकृतानि च ।
बहुप्रकारयुक्तानि कुर्वीत प्रकृतिं प्रति ॥ १६२ ॥
यत्किंचिदस्मिँल्लोके तु चराचरसमन्विते ।
विहितं कर्म शिल्पं वा तत्तूपकरणं स्मृतम् ॥ १६३ ॥
यस्या(द्य)स्य विषणं(यं) प्राप्तं स तदेवाभिगच्छति ।
नास्त्यतः पुरुषाणां हि नाट्योपकरणाश्रये ॥ १६४ ॥
नाट्येनोत्पादितं कर्म शिल्पयोगः क्रियापि वा ।
तेन तस्य कृता सृष्टिः प्रमाणं लक्षणं तथा ॥ १६५ ॥
या वाक्ययन्त्रभूयिष्ठा कृता सृष्टिर्महात्मना ।
ना(न) सास्माकं नाट्ययोगे कस्मात्खेदावहा हि सा ॥१६६॥

१. 'श्चैवावटुः' इति स्यात्. २. 'यस्याद्ये' ख.

यद्द्रव्यं जीवलोके तु लतालक्षणलक्षितम् ।
तस्यानुकृतिसंस्थानं नाट्योपकरणं भवेत् ॥ १६७ ॥
प्रासादगृहयानानि नानाप्रहरणानि च ।
न शक्यं तानि वै कर्तुं यथोक्तानीह लक्षणैः ॥ १६८ ॥
लोकधर्मी भवेत्काद्या[1] (?) नाट्यधर्मी तथापरा ।
स्वभावो लोकधर्मी तु विभावो नाट्यमेव हि ॥ १६९ ॥
आयसं तु न कर्तव्यं न च सारमयं तथा ।
नाट्योपकरणं तज्ज्ञैर्गुरुखेदकरं भवेत् ॥ १७० ॥
कश्च चर्मसु वस्त्रेषु तनुवेणुदलेषु च ।
नाट्योपकरणानीह लघुकर्माणि कारयेत् ॥ १७१ ॥
वर्मचेर्म[2]ध्वजाः शैलाः प्रासादा देवता गुहाः ।
हयवारणयानानि विमानानि गृहाणि च ॥ १७२ ॥
पूर्वं वेणुदलैः कृत्वा कृतभावसमाश्रयाः ।
ततः सुरङ्गैराच्छाद्य वस्त्रो(स्त्रैः) सारूप्यमानयेत् ॥ १७३ ॥
अथवा यदि वस्त्राणामसांनिध्यं भवेदिह ।
तालीयैर्वा कलिंजैर्वा श्लक्ष्णैर्वस्त्रक्रिया भवेत् ॥ १७४ ॥
तथा प्रहरणानि स्युस्तृणवेणुदलादिषु ।
जतुभाण्डक्रियाभिश्च नानारूपाणि नाटके ॥ १७५ ॥
प्रतिपादः प्रतिशिरः प्रतिहस्तः प्रतित्वचः ।
तृणैः कलिञ्जैर्भेण्डैर्वा सारूप्याणि तु कारयेत् ॥ १७६ ॥
यद्यस्य सदृशं रूपं सारूप्यगुणसंभवम् ।
मृन्मयं तत्तु कृत्स्नं तु नानारूपं तु कारयेत् ॥ १७७ ॥
भैण्डवस्त्रमधूच्छिष्टैर्लाक्षयाभ्रदलेन च ।
भैण्डवस्त्रमधूच्छिष्टैर्लाक्षया वापि कारयेत् ॥ १७८ ॥
भैण्डवस्त्रमधूच्छिष्टैस्ताम्रपत्रैस्तथैव च ।
सम्यक्च नीलरागेण अभ्रपात्रेण चैव हि ॥ १७९ ॥

१. 'त्वाद्या' इति स्यात्. २. 'धर्म' ख.

रञ्जितेनाभ्रपत्रेण मणींश्चैव प्रकारयेत् ।
उपाश्रयमथाप्येषां तुल्यं व(र)ङ्गेन कारयेत् ॥ १८० ॥
विविधा युक्तयद्दिव्या(?)[1] पूर्वं ये गदिता मया ।
तेऽभ्रपत्रोज्ज्वलाः कार्या मणिव्यालोपशोभिना ॥ १८१ ॥
नानाशास्त्रभवं कार्यं तेषां हि समुदाहृतम् ।
आचार्यबुद्ध्या कर्तव्यमूहापोहप्रयोजितम् ॥ १८२ ॥
एवमल्पप्रियायोगो[2] भविष्यकलितो[3] मया ।
कस्मादल्पबलत्वं च मनुष्येषु भविष्यति ॥ १८३ ॥
मर्त्यानामपि वा शक्या विभवाः सर्वकाञ्चनाः ।
नेष्टाः सुवर्णरत्नेषु मुकुटा भूषणानि वा ॥ १८४ ॥
युद्धे नियुद्धे नृत्ते वा स्वेदो मूर्छा च जायते ।
मूर्छा वाभिहते जन्तौ प्रयोगो न भविष्यति ॥ १८५ ॥
प्राणात्ययः कदाचिच्च भवेद्व्यायतचेष्टिते ।
तस्मात्ताम्रमयैः पत्रैरभ्रकै रञ्जितैरपि ॥ १८६ ॥
भेण्डैरपि मधूच्छिष्टैः कार्याण्याभरणानि च ।
एवं लोकोपचारेण स्वबुद्धिविभवेन च ॥ १८७ ॥
नाट्योपकरणानीह बुधः सम्यक्प्रयोजयेत् ।
न भेद्यं नैव स्थेयं च न प्रहर्तव्यमेव च ॥ १८८ ॥
रङ्गे प्रहरणैः कार्यं संज्ञामात्रं तु कारयेत् ।
अथ वा योगशिक्षाभिर्विद्यामायाकृतेन वा ॥ १८९ ॥
शस्त्रमोक्षः प्रकर्तव्यो रङ्गमध्ये प्रयोक्तृभिः ।
नोक्तानि यानि च मया लोकाद्ग्राह्यानि तान्यपि ॥ १९० ॥
आहार्योऽभिनयो ह्येष मया प्रोक्तः समासतः ।
अत ऊर्ध्वं प्रवक्ष्यामि सामान्याभिनयं प्रति ॥ १९१ ॥

इति भारतीये नाट्यशास्त्रे आहार्याभिनयो नामैकविंशतितमोऽध्यायः[4] ।

---

१. 'युक्तयो दिव्या' इति स्यात्. २. 'क्रिया' इति स्यात्. ३. 'भविष्यत्' इति स्यात्.
४. 'नाम द्वाविंशतितमो' क; 'नाम द्वाविंशो' ख.

द्वाविंशतितमोऽध्यायः ।

सामान्याभिनयो नाम ज्ञेयो वागङ्गसत्त्वजः ।
तत्र कार्यो(र्यः) प्रयत्नस्तु नाट्यं सत्त्वे प्रतिष्ठितम् ॥ १ ॥
सत्त्वातिरिक्तोऽभिनयो ज्येष्ठ इत्यभिधीयते ।
समसत्त्वो भवेन्मध्यः सत्त्वहीनोऽधमः स्मृतः ॥ २ ॥
अव्यक्तरूपं सत्त्वं हि ज्ञेयं नवरसाश्रयम् ।
यथास्थानरसोपेतं रोमाञ्चाश्वा(?)दिभिर्गुणैः ॥ ३ ॥
अलंकाराश्च सत्त्वस्था ज्ञेया भावसमाश्रयाः ।
यौवनेऽभ्यधिका[ः] स्त्रीणां विकारा वक्त्रगात्रजाः ॥ ४ ॥
आवो(?) त्रयोऽङ्गजास्तेषां दश स्वाभाविकास्तथा ।
[1]अयत्नजास्तथा सप्त रसभावोपबृंहिताः ॥ ५ ॥
भावो हावश्च हेला च परस्परसमुत्थिताः ।
[2]सेतु(?) भेदा भवन्त्येते शरीरे प्रकृतिस्थिताः ॥ ६ ॥
देहात्मकं भवेत्सत्त्वं [3]सत्वङ्गावाः(?) समुत्थिताः ।
भावात्समुत्थितो दे(हा)वो हावाद्धेला समुत्थिता ॥ ७ ॥
वागङ्गमुखरागैश्च सत्त्वेनाभिनयेन च ।
कवेरन्तर्गतं भावं भावयन्भाव उच्यते ॥ ८ ॥
भावस्यातिकृतं सत्त्वं व्यतिरिक्तं च योनिषु ।
नैकावस्थान्तरकृतहावं तमिह निर्दिशेत् ॥ ९ ॥
तत्राक्षिभ्रूविकाराश्च शृङ्गाराकारसूचकाः ।
सग्रीवा रेचका ज्ञेयो हावश्चित्तसमुत्थितः ॥ १० ॥
य एव हावासेवै(स्ते चै)षां शृङ्गाररससंभवाः ।
समाख्याता बुधैर्हेला ललिताभिनयात्मिका ॥ ११ ॥
लीला विलासो विच्छित्तिर्विभ्रमः किलकिञ्चितम् ।
मोट्टायितं कुट्ट(ट्टि)मितं बिव्वोकं ललितं तथा ॥ १२ ॥

१. 'अथलजा' क. २. 'सप्त' इति स्यात्. ३. 'सत्त्वाद्भावाः' इति स्यात्.

विहृतिश्चेति संयुक्ता दश स्त्रीणां स्वभावजाः।
पुनरेषां प्रवक्ष्यामि स्वरूपाणि पृथक्पृथक्॥ १३॥
वागङ्गालंकारैः श्लिष्टैः प्रीतिप्रयोजितैर्मधुरैः।
इष्टजनस्याक्नुतिर्लीला ज्ञेया प्रयोगज्ञैः॥ १४॥
स्थानासनगमनानां नेत्रभ्रूवक्त्रकर्मणां चैव।
उत्पद्यते विशेषो यः श्लिष्टः स तु विलासः स्यात्॥ १५॥
माल्याच्छादनभूषणविलेपनानामनादरावासः।
स्वल्पोऽपि परां शोभां नयति हि यः सा तु विच्छित्तिः॥१६॥
विविधानामर्थानां वागङ्गाहार्यसत्त्वयुक्तानाम्।
मदरागहर्षजनितो योऽतिशयो विभ्रमः स मतः॥ १७॥
स्मितहसितरुदितभ(य)रो बहुदुःखगर्वश्रमाभिलाषाणाम्।
संकटकरणं हर्षादसक्त्किलकिञ्चितं ज्ञेयम्॥ १८॥
इष्टजनस्य कथायां·········लीलाभिर्दर्शने चापि।
तद्भावभावनकृतमुक्तं मोट्टायितं नाम॥ १९॥
केशस्तनाधरादिग्रहणेऽप्यतिहर्षसंभ्रमोत्पन्नम्।
कुट्ट(ट्टि)मितं विज्ञेयं सुखमपि दुःखोपचारेण॥ २०॥
ईर्ष्याणां भावानां प्राप्तावभिमानगर्भसंभूतः।
स्त्रीणामनादरकृतो विव्वोको नाम विज्ञेयः॥ २१॥
करचरणाङ्गन्यासः सनून(?)नेत्रैश्च संप्रयुक्तस्तु।
सुकुमारविधानेन स्त्रीभिरितीदं स्मृतं ललितम्॥ २२॥
प्राप्ताम(व)पि वचसां क्रियते यदभाषणं हि या स्त्रीभिः।
व्यातात्स्वभावतो वाप्येतत्समुदाहृतं विहृतम्॥ २३॥
शोभा कान्तिश्च दीप्तिश्च तथा माधुर्यमेव च।
धैर्यं प्रागल्भ्यमौदार्यमित्येते स्युरयत्नजाः॥ २४॥
रूपयौवनलावण्यैरुपभोगोपबृंहितैः।
अनाकरणमङ्गानां शोभेति परिकीर्तिता॥ २५॥

१. 'विहृतिं चेति संयुक्तं' क-ख.

विज्ञेया च तथा **कान्तिः** शोभैवापूर्वमन्मथा ।
कान्तिरेवातिविस्तीर्णा **दीप्तिरि**त्यभिधीयते ॥ २६ ॥
सर्वावस्थाविशेषेषु दीप्तेषु ललितेषु च ।
अनुल्बणत्वं चेष्टायां **माधुर्य**मित(ति) संज्ञितम् ॥ २७ ॥
चापलेनानुपहता सर्वार्थेष्वनुकत्थना ।
स्वाभाविकी चित्तवृत्तिर्धै(र्धै)र्यमित्यभिसंज्ञितम् ॥ २८ ॥
प्रयोगतः साध्वयता(?) **प्रागल्भ्यं** समुदाहृतम् ।
**औदार्यं** प्रश्रयः प्रोक्तः सर्वावस्थानुगो बुधैः ॥ २९ ॥
सुकुमारे भवन्त्येते प्रयोगे ललितात्मके ।
विलासललिते हित्वा दीप्तेऽप्येते भवन्ति हि ॥ ३० ॥
शोभा विलासो माधुर्यं स्थैर्यं गाम्भीर्यमेव च ।
ललितौदार्यतेजांसि सत्त्वभेदास्तु पौरुषाः ॥ ३१ ॥
दाक्ष्यं शौर्यमथोत्साहो नीचार्थेषु जुगुप्सितम् ।
उत्तमैश्च गुणैः स्पर्धा यत्र **शोभेति** सा स्मृता ॥ ३२ ॥
वीरसंचारिणी दृष्टिर्गतिर्गोवृषभाञ्चिता ।
स्मितपूर्वमथालापो **विलास** इति कीर्तितः ॥ ३३ ॥
अभ्यासात्करणानां तु श्लिष्टत्वं यत्र जायते ।
महत्स्वपि विकारेषु तन्**माधुर्य**मिति स्मृतम् ॥ ३४ ॥
धर्मार्थकामसंयुक्ताच्छुभाशुभसमुत्थितात् ।
व्यवसा[1]यादवचनं **स्थैर्य**मित्यभिसंज्ञितम् ॥ ३५ ॥
यस्य प्रभावादाकाराः क्रोधहर्षभयादिषु ।
भावेषु नोपलभ्यन्ते त**द्गाम्भीर्य**मिति स्मृतम् ॥ ३६ ॥
अबुद्धिपूर्वकं यत्तु सुकुमारं स्वभावतः ।
शृङ्गाराकारचेष्टत्वं **ललितं** तदुदाहृतम् ॥ ३७ ॥
दानमभ्युपपत्तिश्च तथा च प्रियभाषणम् ।
[2]स्वजान(?)चापरे वापि त**दौदार्यं** प्रकीर्तितम् ॥ ३८ ॥

---

१. 'सायादिवचनं' क. २. 'स्वजाते' इति भवेत्.

अधिक्षेपापमानादेः प्रयुक्तस्य परेण यत् ।
प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतम् ॥ ३९ ॥
सत्त्वतोऽभिनयाः पूर्वं मयोक्ता द्विजसत्तमाः ।
शारीरं चाप्यभिनयं व्याख्यास्याम्यनुपूर्वशः ॥ ४० ॥
षडात्मकस्तु शारीरो वाक्यं सूचाङ्कुरस्तथा ।
शाखा नाट्यायितं चैव निवृत्त्यङ्कुर एव च ॥ ४१ ॥
नानाभावरसार्थैर्वृत्तनिबद्धैः कृतस्य चूर्णपदैः ।
प्राकृतसंस्कृतप्रायो **वाक्याभिनये(यो)** बुधैर्ज्ञेयः ॥ ४२ ॥
वाक्यार्थो वाक्यं वा सत्त्वाङ्गैः सूत्यात[1](?) यदा पूर्वम् ।
पश्चाद्वचनाभिनयः **सूचे**त्यभिसंज्ञिता सा तु ॥ ४३ ॥
हृदयस्थो निर्वचनैरङ्गविकारैः कृतो निपुणसाध्यः ।
सूचेवोत्पत्तिकृता विज्ञेयस्त्व**ङ्कुराभिनया**(?) ॥ ४४ ॥
यस्तु शिरोभुजजङ्घोरूपाणि पदैर्यथाक्रमं क्रियते ।
शाखादर्शितमार्गः **शाखाभिनयः** स विज्ञेयः ॥ ४५ ॥
नाट्यायितसूपचारैर्यत्क्रियतेऽभिनेयत्र[2] सूचना नाट्ये ।
काव्यप्रकर्षहेतोः प्रवेशकैः संगमो यावत् ॥ ४६ ॥
स्थाने ध्रुवास्वभिनयो यत्क्रियते हर्षशोकरोषाद्यैः ।
भावरससंप्रयुक्तैर्ज्ञेयं **नाट्यायितं** तच्च ॥ ४७ ॥
यत्रान्योक्तं वाक्यं सूच्य(चा)भिनयेन योजयेदन्यः ।
तत्संबद्धार्थकथम्भा[3](?)य**न्निवृत्त्यङ्कुरः** सोऽथ ॥ ४८ ॥
एतेषां च स्मृता मार्गा यथाभावरसान्विता[4][:] ।
काव्यवस्तुषु निर्दिष्टा द्वादशाभिनयात्मका[:] ॥ ४९ ॥
आलापश्च प्रलापश्च विलापः स्यात्तथैव च ।
अनुलापोऽथ संलापस्त्वपलापस्तथैव च ॥ ५० ॥

---

१. 'सूच्यते' इति भवेत्. २. 'भिनयेत्र' इति भवेत्. ३. 'कबन्धो' इति भवेत्. ४. 'रसान्विता' ख.

संदेशश्चातिदेशश्च निर्देश[ः] स्यात्तथापरः ।
उपदेशोऽपदेशश्च व्यपदेशश्च कीर्तितः ॥ ९१ ॥
आभाषणे तु यद्वाक्यमालापो नाम स स्मृतः ।
अनर्थकं वचो यत्र स प्रलापश्च कीर्तितः ॥ ९२ ॥
दुःखं शोकोद्भवं यत्र विलापः स तु कीर्तितः ।
बहुशोऽभिहितं वाक्यमनुलाप इति स्मृतः ॥ ९३ ॥
[[1]उक्त अत्युक्तसंयुक्तमुक्तअत्युक्तसंज्ञितम् ।]
पूर्वोक्तस्यान्यथावादो ह्यपवाद(लाप) इति स्मृतः ।
त्वमिदं वचनं ब्रूहि ह्येष संदेश इष्यते ॥ ९४ ॥
अतिदेशस्त्वयोक्तं यत्तन्मयोक्तमिति स्मृतम् ।
लोपं ब्रवीम्यहमिति यो निर्देशः स उच्यते ॥ ९५ ॥
इदं कुरु गृहाणेदमुपदेश इति स्मृतः ।
व्याजोत्तरेण कथनं व्यपदेशः प्रकीर्तितः ॥ ९६ ॥
एते मार्गा हि विज्ञेया[ः] सर्वाभिनययोजकाः ।
सप्त प्रकारास्तेषां च पुनर्वक्ष्यामि तत्त्वतः ॥ ९७ ॥
प्रत्यक्षश्च परोक्षश्च तथा कालकृताव(त्र)यः ।
आत्मस्व(स्थ)श्च परस्व(स्थ)श्च प्रकाराः सर्व(?) शृण्वतु(?) ९८
अहं करोमि कर्ता च वदामि वचनं तव ।
प्रत्यक्ष आत्मसंस्थश्च वर्तमानश्च स स्मृतः ॥ ९९ ॥
करिष्यामि वदिष्यामि गमिष्यामीति यद्वचः ।
आत्मस्थश्च परोक्षश्च भविष्यत्काल एव च ॥ १०० ॥
हता जिताश्च भग्नाश्च मया सर्वे द्विषद्गणाः ।
आत्मस्थश्च परोक्षश्च वृत्तकालश्च स स्मृतः ॥ १०१ ॥
त्वया हता जिताश्चैव यो वदेन्नाह(?) कर्मणि ।
परोक्षश्च परस्थश्च वृत्तकालस्तथैव च ॥ १०२ ॥

---

१. अन्यप्रकरणस्थमेव कथंचिदत्र पतितं भवेत्.

एष ब्रवीति कुरुते गच्छतीत्यादि यद्वचः ।
परस्थो वर्तमानश्च भविष्यश्च भवेत्तथा ॥ ६३ ॥
स गच्छति करोतीति वचनं यदुदाहृतम् ।
परस्थं वर्तमानं च परोक्षं चैव तद्भवेत् ।
करिष्यन्ति गमिष्यन्ति वदिष्यन्तीति यद्वचः ॥ ६४ ॥
परस्थानेऽप्यकालं च परोक्षं चैव तद्भवेत् ।
परेषामात्मनश्चैव कालस्य च विपर्ययात् ॥ ६५ ॥
सप्त प्रकारास्त्वस्यैव भेदा(न्) प्राहुरनेकधा ।
हस्तमन्तरतः कृत्वा यद्वदेत्तद्य(?) कर्मणि ॥ ६६ ॥
आत्मस्थं हृदयस्थं च परोक्षं चैव तन्मतम् ।
शिरोवदनहस्तोरःकट्यूरुचरणाश्रयः ॥ ६७ ॥
समः कर्मविभागे यो विविधाभिनये तु सः ।
ललितैर्हस्तविन्यासैस्तस्यावृद्रङ्ग(?)वेष्टितैः ॥ ६८ ॥
अभिनेयं तु नाट्यज्ञैस्त्रासभावसमन्वितैः ।
अनुद्रसेन संभ्रान्तमनाविव्वातद्वेष्टितम् (?) ॥ ६९ ॥
लयतालकलाकालप्रमाणनियतात्मकम् ।
सुविभक्तपदालापस(म)निष्ठुरमकाहलम् ॥ ७० ॥
यदीदृशं भवेन्नाट्यं ज्ञेयमभ्यन्तरं तु तत् ।
एतदेव विपर्यस्तं स्वच्छन्दगतिचेष्टितम् ॥ ७१ ॥
अतिबद्धगीतवाद्यं नाट्यं बाह्यमिति स्मृतम् ।
लक्षणाभ्यन्तरं यत्स्यात्तमोदारभ्यन्तरं(?) स्मृतम् ॥ ७२ ॥
शास्त्रार्थबाह्यभावार्थं बाह्यमित्यभिधीयते ।
अनेन लक्ष्यते यस्मात्प्रयोगः कर्म वा बुधैः ॥ ७३ ॥
तस्माल्लक्षणमेतद्धि नाट्येऽस्मिन्संप्रयोजितम् ।
अनाचार्योषिता ये च ये च शास्त्रवहिष्कृतमाः(?) ॥ ७४ ॥
बाह्यास्ते तु प्रयोज्यन्ति(?) क्रियामात्रैः प्रयोजितैः ।
शब्दं स्पर्शं च रूपं च रसं गन्धं तथैव च ॥ ७५ ॥

इन्द्रियाणीन्द्रियार्थांश्च भावैरभिनयेद्बुधः ।
कृत्व[ा] साचीकृतां दृष्टिं शिरः पार्श्वाञ्चितं तथा ॥ ७६ ॥
तर्जनीं कर्णदेशे तु बुधः शब्दान्नियोजयेत् ।
किंचिदाकुञ्चिते नेत्रे कृत्वा भ्रूक्षेपमेव च ॥ ७७ ॥
तथांसगण्डयोः स्पर्शात्स्पर्शमेवं विनिर्दिशेत् ।
कृत्वा पताकौ मूर्धस्थौ किंचित्प्रचलिताननः ॥ ७८ ॥
निर्वर्णयन्त्या दृष्ट्या च रूपं त्वभिनयेद्बुधः ।
किंचिदाकुञ्चिते नेत्रे कृत्वोत्फुल्लां च नासिकाम् ॥ ७९ ॥
एकोच्छ्वासेन चोद्दिष्टौ रसगन्धौ विनिर्दिशेत् ।
पञ्चानामिन्द्रियार्थानां भावा ह्येतेऽनुभाविनः ॥ ८० ॥
त्वक्चक्षुर्घ्राणजिह्वानां श्रोत्रस्य च तथैव हि ।
इन्द्रियार्थाश्च मनसो भवन्ति ह्यनुभाविनः ॥ ८१ ॥
न वेत्ति ह्यमना[ः] किंचिद्विषयं पञ्चहेतुकम् ।
मनसस्त्रिविधो भावो विज्ञेयोऽभिनयं प्रति ॥ ८२ ॥
इष्टोऽनिष्टश्च मध्यश्च तस्याभिनय उच्यते ।
प्रल्हादनेन गात्रस्य तथा पुलकितेन च ॥ ८३ ॥
वदनस्य विकाशेन कुर्यादिष्टनिदर्शनम् ।
इष्टे शब्दे तथा रूपे स्पर्शे घ्राणे तथा रसे ॥ ८४ ॥
रङ्गिवै(?)र्मनसि प्राप्ते सौमुख्यं संप्रदर्शयेत् ।
परावृत्तेन शिरसा नेत्रभासा विविक्तैः(?) ॥ ८५ ॥
चक्षुषश्चाप्रदानेन ह्यनिष्टमभिनिर्दिशेत् ।
तानि हृष्टेन मनसा न वात्यन्तजुगुप्सया ॥ ८६ ॥
मध्यस्थेनैव भावेन मध्यस्थमभिनिर्दिशेत् ।
तेनेदं तस्य वापीदं स एवं प्रकरोति च ॥ ८७ ॥
परोक्षाभिनयो यस्तु **मध्यस्थ** इति स स्मृतः ।
आत्मानुभावा[द्] योऽर्थः स्यादात्मस्थ इति स स्मृतः ॥८८॥

परार्थवर्णनायां च **परस्थ** इति स स्मृतः ।
प्रायेण सर्वभावानां कामान्निष्पत्तिरिष्यते ॥ ८९ ॥
स चेच्छागुणसंपन्नो बहुधा परिकल्पितः ।
धर्मकामार्थकामस्य मोक्षकामस्तथैव च ॥ ९० ॥
यत्तु स्त्रीपुंसयोर्योगो समो योग इति स्मृतः ।
सर्वस्यैव हि लोकस्य सुखदुःखनिबर्हणम् ॥ ९१ ॥
भूयिष्ठं दृश्यते कामः सुखदो दुःखदेष्वपि ।
यः स्त्रीपुरुषसंयोगो रतिसंभोगकारकः ॥ ९२ ॥
स शृङ्गार इति ज्ञेय उपचारकृतः शुभः ।
सर्वः प्रायेण लोकोऽयं सुखमिच्छति सर्वदा ॥ ९३ ॥
सुखस्य च स्त्रियो मूलं नानाशीलधराश्च ताः ।
देवतासुरगन्धर्वरक्षोनागपतत्रिणाम् ॥ ९४ ॥
पिशाचयक्षव्यालानां नरवानरहस्तिनाम् ।
मृगमीनोष्ट्रमकरखरसूकरवाजिनाम् ॥ ९५ ॥
महिषाजगवादीनां तुल्यशीलाः स्त्रियः स्मृताः ।
स्निग्धाङ्गोपाङ्गनयना स्थिरा मन्दनिमेषिणी ॥ ९६ ॥
अरोगा दीप्त्युपेता च सत्यार्जवदयान्विता ।
अल्पस्ये(स्वे)दा समरता स्वल्पशुक्ररतप्रिया ॥ ९७ ॥
गन्धपुष्परता हृद्या **देवशीलाङ्गना** स्मृता ।
अधमा साम्यनिरतस्थिरक्रोधातिनिष्ठुरा ॥ ९८ ॥
मद्यमांसप्रिया नित्यं क्रोधना यातिमानिनी ।
चपला चातिनिर्लुब्धा परुषा कलहप्रिया ॥ ९९ ॥
ईर्ष्याशीलाथ निःस्नेहा **शीलमासुरमाश्रिता** ।
क्षिप्रापरा चारुनेत्रा नखदन्तैः सुपुष्पितैः ॥ १०० ॥
तन्वङ्गी स्मितभाषा च मन्दापत्या रतिक्रिया ।
नृत्ते गीते च नाट्ये च रता हृष्टा मृजावती ॥ १०१ ॥

---

१. 'धर्मकामोऽर्थकामश्च' इति भवेत्.

गन्धर्वशीला विज्ञेया स्निग्धत्वक्केशलोचना ।
बृहद्व्यायतसर्वाङ्गी रक्तविस्तीर्णलोचना ॥ १०२ ॥
खररोमा दिवास्वप्नस्वभावोत्फुल्लभाषिणी ।
नखदन्तक्षतकरा क्रोधेर्ष्याकलहप्रिया ॥ १०३ ॥
निशाविहारशीला च राक्षसं शीलमास्थिता ।
तीक्ष्णनासोग्रदशना सुतनुस्ताम्रलोचना ॥ १०४ ॥
नीलोत्पलसवर्णा च स्वप्नशीलातिकोपना ।
तिर्यग्जनिश्चलारम्भा बहुबिम्बातिमानिनी ॥ १०५ ॥
गन्धमाल्यातिनिरता नागसत्त्वाङ्गना स्मृता ।
अत्यर्थं घटितास्या च तीक्ष्णा शीला रतिप्रिया ॥ १०६ ॥
सुरासवक्षीररता बह्वपत्या फलप्रिया ।
नित्यं श्वसनशीला····तिष्ठेद्यौनरतिप्रिया ॥ १०७ ॥
चपला बहुवाक्कीथा(?) शाकुनं सत्त्वमाश्रिता ।
जनाधिकाङ्गुलिः क्रूरा रात्रौ निष्कुटचारिणी ॥ १०८ ॥
बालोद्वेजनशीला च पिशुना श्लिष्टभाषिणी ।
सुरते कुत्सिताचारा रोमाप्ताङ्गी महास्वना ॥ १०९ ॥
पिशाचसत्त्वा विज्ञेया मद्यमांसरतिप्रिया ।
स्वप्नप्रस्वेदनाङ्गी च स्थिरशय्यासनप्रिया ॥ ११० ॥
मेधाविनी भ········मद्यगन्धामिषप्रिया ।
चिर इष्टेषु हर्षं च क्रमज्ञत्वादुपैति या ॥ १११ ॥
अदीर्घगमनो[1] ये च(?) ज्ञेया यक्षावयंगना (?) ।
मानापमानयोस्तुल्या परुषा कटुकाक्षरा ॥ ११२ ॥
शवाकृतोद्दतकथा(?) पिङ्गहग्व्यालवंशजा ।
आर्जवाभिरता नित्यं दक्षात्यन्तगुणान्विता ॥ ११३ ॥
विभक्ताङ्गी कृतज्ञा च गुरु[2]देवार्चने रता ।
धर्मकामार्थनित्या च वश्याहंकारवर्जिता ॥ ११४ ॥

१. 'गमनोपेता' इति भवेत्. २. 'गुण' ख.

सुहृत्प्रिया सुशीला च **मानुषं** हेतुमाश्रिता ।
हंसबाल्यतनुर्हृष्टा पिङ्गरोमा फलप्रिया ॥ ११५ ॥
प्रगल्भा चपला तीक्ष्णा वृक्षागमरतिप्रिया ।
मालामधुपकारं तु नित्यं या च कुमन्यते ॥ ११६ ॥
असह्यरतिशीला च **कपिसत्त्वं** समाश्रिता ।
महाहनुललाटा च शरीरोपचयान्विता ॥ ११७ ॥
पिङ्गाक्षी रोमशाङ्गी च गन्धमाल्याशयप्रिया ।
कोपनास्थिरसत्त्वा च जलौघनयनप्रिया ॥ ११८ ॥
मधुराभिरता यैव **हस्तिसत्त्वा** प्रकीर्तिता ।
स्वल्पोदरी मग्नतारा तनुजङ्घा वनप्रिया ॥ ११९ ॥
चलविस्तीर्णनयना चपला शीघ्रगामिनी ।
परिवासपरा भीरू रोमशा गीतलोभिनी ॥ १२० ॥
कोपनायल(?)सत्त्वा च **मृगसत्त्वाङ्गना** स्मृता ।
दीर्घपीनोन्नतोरस्यु(?) चलनातिनिमेषिणी ॥ १२१ ॥
बहुभृत्या बहुसुता **मत्स्यसत्त्वा** जलप्रिया ।
लम्बोष्ठी स्वेदबहुला किंचिद्विकटगामिनी ॥ १२२ ॥
कृशोदरी पुष्पफलवर्णांशुकबहुप्रिया ।
उद्धद्धकटिपार्श्वा च खरनिष्ठुरभाषिणी ॥ १२३ ॥
अत्युन्नतकटिग्रीवा भवेदुष्ट्री वनप्रिया ।
स्थूलशीर्षाञ्चितग्रीवा दारितास्या महास्वना ॥ १२४ ॥
ज्ञेया **मयूरसत्त्वा** तु क्रूरा मत्स्यगुणैर्युता ।
स्थूलजिह्वोष्ठवदना रूक्षत्वक्कटुभाषिणी ॥ १२५ ॥
रतियुद्धप्रिया हृष्टा नखदन्तक्षतप्रिया ।
सपत्नीद्वेषिणी दक्षा चपला शीघ्रगामिनी ॥ १२६ ॥
सरोषा बह्वपत्या च **खरसत्त्वा** प्रकीर्तिता ।
दीर्घपृष्ठोदरमुखी रोमशाङ्गी बलान्विता ॥ १२७ ॥

सुसंक्षिप्तललाटा च कन्दमूलफलप्रिया ।
कृष्णदन्तोत्कटमुखी पीवरोरुशिरोरुहा ॥ १२८ ॥
हीनाचारा बह्वपत्या **सौकरं सत्त्व**माश्रिता ।
स्थिरा विभक्तपार्श्वेन कटिपृष्ठशिरोधरा ॥ १२९ ॥
सुरूपा दानशीला च ऋजुस्थूलशिरोरुजा(हा) ।
कृशा च चलचित्ता च स्निग्धवाक्शीघ्रगामिनी ॥ १३० ॥
कामक्रोधपरा नित्यं **हयसत्त्वा** प्रकीर्तिता ।
स्थूलपृष्ठास्थिदशना स्निग्धत्वङ्मधुरा च या ॥ १३१ ॥
खररोमाञ्चिता रौद्री लोकद्विष्टा रतिप्रिया ।
किंचिदुन्नतवक्त्रा च जलक्रीडावनप्रिया ॥ १३२ ॥
बृहल्ललाटा सुश्रोणी **माहिषं** सत्त्वमाश्रिता ।
उन्नद्धमात्रनयना विजृम्भणपरायणा ॥ १३३ ॥
दीर्घान्तवदना स्वल्पा पाणिपादविभूषिता ।
उच्चैःस्वराल्पनिद्रा च क्रोधना बहुभाषिणी ॥ १३४ ॥
हीनाचारा कृतज्ञा च स्य(श्व)**लीला** परिकीर्तिता ।
मधुपी(पा)नोन्नतश्रोणितनुजङ्घासुहृत्प्रिया ॥ १३५ ॥
संक्षिप्तपाणिपादा च इष्टारम्भा प्रजाहिता ।
पितृदेवार्चनरता **शुचिसत्त्वा**गुरुप्रिया ॥ १३६ ॥
स्थिरा परिक्लेशसहा **गवां सत्त्व**मुपाश्रिता ।
कृशा तनुभुजोरस्यो(?)निष्टब्धतरलोचना ॥ १३७ ॥
संक्षिप्तपाणिपादा च रूक्षारोमा समाञ्चिता ।
भयशीला जलोद्विग्ना बह्वपत्या धनप्रिया ॥ १३८ ॥
चञ्चला शीघ्रगमना ह्य**जाशीला**ङ्गना स्मृता ।
नानाशीलाः स्त्रियो ज्ञात्वा स्वं स्वं सत्त्वमुपाश्रिताः ॥ १३९ ॥
विज्ञाय च यथासत्त्वमुपसर्पेद्यथागुणम् ।
उपचारो यथासत्त्वं प्रयुक्तो हर्षवर्धनः ॥ १४० ॥

महानभ्य(प्यू)नया युक्तो नैव तुष्टिकरो भवेत्।
यथा संप्रार्थिता बाह्यरतिः समुपजायते ॥ १४१ ॥
स्त्रीपुंसयोश्च रत्यर्थमुपचारो विधीयते।
धर्मार्थं हि तपश्चर्या सुखार्थं धर्म इष्यते ॥ १४२ ॥
सुखस्य मूलं प्रमदास्ता (?) सुखं भोग इष्यते।
कामोपभोगो द्विविधो नाट्यधर्मे विधीयते ॥ १४३ ॥
बाह्यश्चाभ्यन्तरश्चैव नारीपुरुषसंश्रयः।
आभ्यन्तरः पार्थिवानां कर्तव्यः स च नाटके ॥ १४४ ॥
बाह्यो वेशाङ्गनानां तु स च प्रकरणे भवेत्।
त्रिविधा प्रकृतिः स्त्रीणां नानासत्त्वसमुद्भवा ॥ १४५ ॥
बाह्या चाभ्यन्तरा चैव स्याद्बाह्याभ्यन्तरापरा।
कुलीनाभ्यन्तरा ज्ञेया बाह्या वेशाङ्गनाकृते ॥ १४६ ॥
........शौचा च या नारी सा बाह्याभ्यन्तरा स्मृता।
अन्तःपुरोपचा.............................. ॥ १४७ ॥
कामभावेङ्गितानीह तज्ज्ञः समुपलक्षयेत्।
कान्ताङ्गा....विकारेण मकराक्षनिरीक्षणैः ॥ १४८ ॥
तथाभरणसंस्पर्शैः कर्णकण्डूयनैरपि।
अङ्गुष्ठाग्रविलेखेन तूर्णनाभिप्रदर्शनात् ॥ १४९ ॥
नखनिस्तोदनाच्चैव केशसंयमनादपि।
वैश्या एवंविधैर्भावैर्लक्षयेन्मदनातुरा ॥ १५० ॥
कुलजायास्तथा चैव प्रवक्ष्यामीङ्गितानि तु।
प्रहसन्ती च नेत्राणां पतनं च परीक्षयेत् ॥ १५१ ॥
सयते सा निगूढां च वाक्यं वाधोमुखी वदेत्।
स्मितास्त्वरा (?) मन्दवाक्या स्वेदाकारनिगूहनी ॥ १५२ ॥
प्रस्पन्दिताधरा चैव चकिता च कुलाङ्गना।
एवंविधैः कामलिङ्गैरश्रास्तं (?) सुरतोत्सवा ॥ १५३ ॥

देशस्थानगतं कामं नानाभावं प्रदर्शयन् ।
प्रथमे त्वभिलाषः स्याद्द्वितीये चिन्तनं भवेत् ॥ १९४ ॥
अनुस्मृतिस्तृतीये तु चतुर्थे गुणकीर्तनम् ।
उद्वेगः पञ्चमे प्रोक्तो विलापः षष्ठ उच्यते ॥ १९५ ॥
उन्मादः सप्तमे ज्ञेयो भवेद्व्याधिस्तथाष्टमे ।
नवमे जडता चैव मरणं दशमे भवेत् ॥ १९६ ॥
स्त्रीपुंसयोरेष विधिर्लक्षणं च विधीयते ।
व्यवसायात्समारब्धस्तत्काल्यस्य (?) समुद्भवः ।
समागमोपायकृतः सोऽभिलाषः प्रकीर्तितः ॥ १९७ ॥
निर्याति विशति च मुहुः करोति च कार(?)मेव मदनस्य ।
तिष्ठति च दर्शनपथे प्रथमस्थाने स्थिता कामे ॥ १९८ ॥
केनोपायेन सामान्यः [[1]कथं वासमयेन्मम ।
दूतीनिवेदितैर्भावैरिति चिन्तां विनिर्दिशेत् ॥ १९९ ॥
आकेकरार्धविवक्षितानिवलयरसना] परामर्शः ।
नीवीनाभ्योः संदर्शनं च कार्यं द्वितीये तु ॥ १६० ॥
मुहुर्मुहुर्निःश्वसितैर्मनोरथविचिन्तनैः ।
प्रद्वेषस्त्वन्यकार्याणामनुस्मृतिरुदाहृता ॥ १६१ ॥
नैवासने न शयने धृतिमुपलभते स्वकर्मणि ।
विहस्ता न चिन्तोपगतत्वात्तृतीयमेवं प्रयुञ्जीत ॥ १६२ ॥
अङ्गप्रत्यङ्गलीलाभिर्वाक्चेष्टाहसितेक्षणैः ।
नास्त्यन्यः सदृशस्ते(ने)त्येतत्स्याद्गुणकीर्तनम् ॥ १६३ ॥
गुणकीर्तनो लु (ने तु) कुशलैरश्रुस्वेदापमार्जनैश्चापि ।
दूत्या विरहविशुम्भै(?)रभिनययोगश्चतुर्थे तु ॥ १६४ ॥
आसने शयने वापि न कुप्यति न हृष्यति ।
नित्यमेवोत्सुका यस्मादुद्वेगस्थानमेव तु ॥ १६५ ॥

---

१. कोष्ठकान्तर्गतः पाठः क-पुस्तके त्रुटितः.

चिन्तानिःश्वासस्वेदेन हृद्दाहाभिनयेन च ।
तदेव कुर्यादत्यन्तमुद्वेगाभिनयेन च ॥ १६६ ॥
इह स्थित इहासीन इहायापगते (?) मया ।
इति तैस्तैर्विलापेऽपि तैर्विलापं प्रयोजयेत् ॥ १६७ ॥
उद्विग्नात्यर्थमौत्सुक्यादरत्या च विलापिनी ।
ततस्ततश्च भ्रमति विलापस्थानमापि हि (?) ॥ १६८ ॥
................................................................ ।
प्रद्वेष्टि चापरान्पुंसो यत्रोन्मादः स उच्यते ॥ १६९ ॥
तिष्ठत्यनिमिषदृष्टिर्दीर्घं निश्वसिति गच्छति ध्यानम् ।
रोदिति विहारकाले नाट्यमिदं स्यात्तथोन्मादे ॥ १७० ॥
सामर्घनादिं (?) साभोगैः[१] काम्यैः संप्रेक्षणैरपि ।
सर्वैरवशीकरणाद्व्याधिः समुपजायते ॥ १७१ ॥
युध्यति (?) हृदयं क्वापि प्रयाति शिरसस्त्ववेदना तीव्रा ।
न धृतिं चाप्युपलभते ह्यष्टममेवं त्वभिनयेत् ॥ १७२ ॥
ग्रैष्टा[२] न किंचित्प्रब्रूते न शृणोति न पश्यति ।
हा कष्टाष्टमतूष्णीका जडतायां गतस्मृतिः ॥ १७३ ॥
अकाण्डे दत्तहुंकारा तथा प्रशिथिलाङ्गिका ।
श्वासाग्रे स्थाननासेव जडताभिनये भवेत् ॥ १७४ ॥
सर्वैं कृतैः प्रतीकारैर्यदि नास्ति समागमः ।
कामाग्निना प्रदीप्ताया जायते मरणं ततः ॥ १७५ ॥
एवं स्थानानि कार्याणि कामतन्त्रसमीक्षया ।
अप्राप्तौ यानि कामस्य वर्जयित्वा तु नैधनम् ॥ १७६ ॥
विविधैः पुरुषोऽप्येवं विप्रलम्भसमुद्भवैः ।
भावैरेतानि कामस्य नानारूपाणि योजयेत् ॥ १७७ ॥
एवं कामयमानानां स्त्रीणां नृणामथापि वा ।
सामान्यगुणयोगेन युञ्जीताभिनयं बुधः ॥ १७८ ॥

१. 'घनारि सोभोगैः' ख. २. 'मृष्टा' ख.

ललिता चलपक्ष्मा च साश्रुमुकुलितेक्षणा ।
स्रस्तोत्तरेमुपकान्ता काम्या इष्टिर्भवेदिदम् (?) ॥ १७९ ॥
ईषत्संरक्तगण्डस्तु सस्वेदलयचित्रितः ।
प्रस्पन्दमानरोमाञ्चो युग राग इहेष्यते ॥ १८० ॥
चिन्तातित्रासखेदेन हृद्दाहाभिनयेन च ।
तथानुगुणनाया(?)पि तथैवार्ध्वनिरीक्षणात् ॥ १८१ ॥
आकाशवीक्षणाच्चापि तथा दीनप्रभाषणात् ।
स्पर्शनान्मोटनाच्चापि तथा पापासमाश्रयेत् ॥ १८२ ॥
एभिर्नानाश्रयोत्पन्नैर्विप्रलम्भसमुद्भवैः ।
कामस्थानानि सर्वाणि भूयिष्ठं संप्रयोजयेत् ॥ १८३ ॥
स्रजो भूषणगन्धान्य(?)गृहाण्युपय(व)नानि वै ।
कामाग्निना दह्यमाना(:) शीतलानि निषेवते ॥ १८४ ॥
प्रदह्यमानकामार्तो बहुस्थानसमन्वितः ।
प्रेषयेत्कामदूतीं तु स्वावस्थादर्शनं प्रति ॥ १८५ ॥
संदेशये (?) मे दूत्यास्तु प्रदद्यान्मदनाश्रयम् ।
तस्येयं समयस्थेति कथयेद्वित(न)येन सा ॥ १८६ ॥
अथ वेदितभावार्थै रत्युपायं विचिन्तयेत् ।
अयं विधिर्विधानज्ञैः कार्यः प्रच्छन्नकामिभिः ॥ १८७ ॥
विधिं राजोपचारस्य पुनर्वक्ष्यामि तत्त्वतः ।
अभ्यन्तरगतं सम्यक्कामतन्त्रे समुपस्थितम् ॥ १८८ ॥
सुखदः स्वकृतान्भावान्नानाशीलसमुत्थितान् ।
यान्यान्प्रकुरुते राजा तांस्ताल्लोँकानुवर्तने[1] ॥ १८९ ॥
न दुर्लभः पार्थिवानां स्त्यर्थे(?)माज्ञाकृतो गुणः ।
दाक्षिण्यात्तु समुद्भूतः कामो रतिकरो भवेत् ॥ १९० ॥
बहुमानेन देवानां वल्लभानां भयेन च ।
प्रच्छन्नकामिनां राज्ञां कार्यं परिजनं प्रति ॥ १९१ ॥

१. 'लोकोऽनुवर्तते' इति भवेत्.

यद्यप्यस्ति नृपाणां तु कामतन्त्रमनेकधा ।
प्रच्छन्ने कामिनं वक्तुं तद्वै रमि(ति)करं भवेत् ॥ १९२ ॥
यद्वामाभिनिवेशित्वं यतश्चैव निवार्यते ।
दुर्लभत्वं च यत्रार्या सा कामस्य रतिः परा ॥ १९३ ॥
राज्ञानन्तःपुरजने दिवसांभोग (?) इष्यते ।
वासोपचारो यच्चैव स रात्रौ परिकीर्तितः ॥ १९४ ॥
परिपाट्या फलार्थे वा न च प्रमद एव च ।
दुःखे चैव प्रमादे च षडेते वासकाः स्मृताः ॥ १९५ ॥
उचिते वासके स्त्रीणामृतुकालेऽपि वा नृपैः ।
वेश्यानामपि कर्तव्य**मिष्टानां** योपसर्पणम् ॥ १९६ ॥
तत्र वासकसज्जा वा विरहोत्कण्ठितापि वा ।
स्वाधीनपतिका वापि कलहान्तरितापि वा ॥ १९७ ॥
खण्डिता विप्रलब्धा वा तथा प्रोषितभर्तृका ।
तथाभिसारिका चैव इत्यष्टौ नायिकाः स्मृताः ॥ १९८ ॥
उचिते वासके या तु रतिसंभोगलालसा ।
मङ्गलं कुरुते हृष्टा सा वै **वासकसज्जिता**[1] ॥ १९९ ॥
अनेककार्यव्यासङ्गाद्यस्या नागच्छति प्रियः ।
तस्यानुगमदुःखार्ता **विरहोत्कण्ठिता** मता ॥ २०० ॥
सुरतातिरसैर्बद्धो यस्याः पार्श्वगतः प्रियः ।
सामोदे गुणसंयुक्ता भवेत्**स्वाधीनभर्तृका** ॥ २०१ ॥
ईर्ष्याकलहविक्रान्तौ(तो) यस्या नागच्छति प्रियः ।
आमर्षवेषसंतप्ता **कलहान्तरिता** भवेत् ॥ २०२ ॥
व्यासङ्गादुचिते यस्याः वासके नाग(तः) प्रियः ।
तदनागमनार्ता तु **खण्डिते**त्यभिधीयते ॥ २०३ ॥
तस्माद्भूतां प्रियः प्राप्य गत्वा संकेतमेव वा ।
नागतः कारणेनेह **विप्रलब्धा** तु सा मता ॥ २०४ ॥

---

१. 'वासकदीक्षिता' ख.

गुरुकार्यान्तरवशाद्यस्या विप्रोषितः प्रियः ।
सारूढालककेशान्ता भवेत्प्रोषितभर्तृका ॥ २०५ ॥
हित्वा लज्जां समाकृष्टा मदेन मदनेन या ।
अभिसारयते कान्तं सा भवेदभिसारिका ॥ २०६ ॥
आस्ववस्थासु विज्ञेया नायिका नाटकाश्रया[ः] ।
एतासां ये च(यच्च) वक्ष्यामि कामतन्त्रमनेकधा ॥ २०७ ॥
चिन्तानिःश्वासखेदैश्च हृद्याभिनयेन च ।
सखिना(?) संप्रलापैश्च आत्मावस्थावलोकनैः ॥ २०८ ॥
ग्लानिर्दैन्याश्रुपातैश्च रोषस्यागमनेन च ।
निर्भूषणाङ्गी विमृजा दुःखेन रुदितेन च ॥ २०९ ॥
खण्डिता विप्रलब्धा वा कलहान्तरितापि वा ।
तथा प्रोषितकान्ता च भावैरेव(वं) प्रयोजयेत् ॥ २१० ॥
विचित्रोज्ज्वलवेषा च प्रमोदोद्द्योतितानना ।
उदीर्णशोभातिशया कार्या स्वाधीनभर्तृका ॥ २११ ॥
वेश्यायां कुलजा(टा)यां वा प्रेष्यायां वा प्रयोक्तृभिः ।
एभिर्भावविशेषैस्तु कर्तव्यमभिसारणम् ॥ २१२ ॥
सामदानादुपेष्टा(?) च तथा परिजनावृता ।
नानाभरणचित्राङ्गी गच्छेद्वेश्याङ्गना शनैः ॥ २१३ ॥
सलीवा[1](?) स्वेदगात्रेषु त्रस्ता विप्रेक्षितानना ।
अवगुण्ठनसंवीता गच्छेच्च कुलजाङ्गना ॥ २१४ ॥
मदस्त्वभिनयालापा विभ्रमोत्फुल्ललोचना ।
आविद्धगतिसंचारा गच्छेत्प्रेष्याङ्गनानया ॥ २१५ ॥
स्यादयंशषितो[2](?) व्यक्तं पश्येत्सुप्तं प्रियंवदा ।
प्रिया यथोत्थापयति तथा वक्ष्याम्यहं पुनः ॥ २१६ ॥
अलंकारेण कुलजा वेश्या गन्धैस्तु शीतलैः ।
प्रेष्या नु(तु) वस्त्रव्यजनैर्बोधये(त्) स्थायिनं प्रियम् ॥ २१७ ॥

---

१. 'सलीना' ख. २. 'शवितो' ख.

कुलाङ्गनानामेवायं प्रोक्तः कामाश्रयो विधिः ।
सर्वावस्थानुभावं तु यस्माद्भवति नाटकम् ॥ २१८ ॥
भयकामप्रयेता(?)या क्रुद्धा वा वामनागमे ।
सत्यादेशैरुपायैस्तु ना(वा)सकं संप्रकल्पयेत् ॥ २१९ ॥
नानालंकारमाभ्या(ल्या)भिधूपगन्धाम्बराणि च ।
नित्यं सुखान्युदात्तानि सेवेत मदनान्वितः ॥ २२० ॥
न तथा भवति विशेषो मदनवशः कामिनीमलभमानः ।
द्विगुणोपजातहर्षो भवति यथा संगतः प्रियया ॥ २२१ ॥
विलासभावेङ्गभ(?)वाक्यलीलाविशेषमाधुर्यगुणोपपन्नः ।
परस्परप्रेमनिरीक्ष(क्षि)तेन समागमः कामकृतस्तु कार्यः ॥ २२२ ॥
ततः प्रवृत्ते मदने उपचारसमुद्भवे ।
वासोपचारः कर्तव्यो नायकागमनं प्रति ॥ २२३ ॥
गन्धमाल्यं गृहीत्वा तु चूर्णद्वार(?)स्तथैव च ।
स्थापयेन्नायककृते कुर्याच्चात्मप्रसाधनम् ॥ २२४ ॥
वासोपचारे नात्यर्थः(र्थं) भूषणग्रहणं भवेत् ।
रसनानूपुरप्रायं स्वनवच्च प्रशस्यते ॥ २२५ ॥
नाम्बरग्रहणं रक्ते नानुरक्ते विलेपनम् ।
नाञ्जनं नाङ्गरागं च न च केशोपसंग्रहम् ॥ २२६ ॥
नानावृतानेकवस्त्रा न रागमधरस्य तु ।
उत्तमा मध्यमा वापि प्रकुर्यात्प्रमदा क्वचित् ॥ २२७ ॥
अधमानां भवेदेवं विधिः प्रकृतिसंभवः ।
तासामपि ह्यसभ्यं यत्तत्तत्कार्यं प्रयोक्तृभिः ॥ २२८ ॥
प्रमदाभिर्नरैर्वापि नानाभावं तु नाय(ट)के ।
भूषणग्रहणं कार्यं पुष्पाणां ग्रहणं तथा ॥ २२९ ॥
गृहीतमण्डना किंचित्प्रतीच्छेत प्रियागमम् ।
लीलया मण्डनं शेषं कुर्याद्यत्र विरुध्यते ॥ २३० ॥

१. 'समादेशै' ख. २. 'चारो' ख. ३. 'नाम्नावृता' ख. ४. 'मण्डने' ख.

वीक्ष्य(क्ष)माणा प्रियापत्यं(?) शृणुयान्नालिकाध्वनि[म्] ।
श्रुत्वा तु नालिकानादं नायकागमविक्लवा ॥ २३१ ॥
वेपन्ती(?) त्रस्तहृदया तोरणाभिमुखी व्रजेत् ।
वामेन तोरणं ग्राह्यं कवाटं दक्षिणेन तु ॥ २३२ ॥
हस्तेन संमुखीभूय उदीक्षेत प्रियागमम् ।
वेभां(?) शङ्कां भये चैव कुर्यात्तोरणसंस्थितम् ॥ २३३ ॥
अइन्द्रारमणं(?) सूर्यविषस्यां(?) तु क्षणे भवेत् ।
दीर्घं चैव विनिश्वस्य नयनाम्बु निपातयेत् ॥ २३४ ॥
सत्र(न्नं) च हृदयं कृत्वा विसृजेदङ्गमासने ।
व्याक्षेप्याद्विमृशेच्चापि नायकागमनं प्रति ॥ २३५ ॥
तैस्तैर्विचारणैश्चापि शुभाशुभसमुत्थितैः ।
गुरुकार्येण मित्रैर्वा मन्त्रिणां राज्यचिन्तया ॥ २३६ ॥
अनुबद्धः प्रियः किंतु धूर्तो वल्लभयापि वा ।
उत्पातान्निर्दिशेच्चैव शुभाशुभसमुत्थितान् ॥ २३७ ॥
निमित्तै राज्यसंस्थैस्तु स्फुरितैर्भेदितैस्तथा ।
शोभनेषु तु कार्येषु निमित्तं वा मतः प्रियां(यम्) ॥ २३८ ॥
दुरुक्तेषु तु कार्येषु निमित्तं दक्षिणं भवेत् ।
सव्यं नेत्रं ललाटं भ्रूरधरोष्ठस्तथैव च ॥ २३९ ॥
ऊरुर्बाहुः स्तनश्चैव स्फुरेद्यदि समागमम्(:) ।
अतोऽन्यथा स्पन्दमाने दुरितं दक्षिणे भवेत् ॥ २४० ॥
दर्शने दुर्निमित्तस्य मोहं गच्छेत्क्षणं ततः ।
अप्राप्तेऽथैव कर्तव्यः(?) प्रिये गण्डार्पितं करः(म्) ॥ २४१ ॥
भूषणे चाप्यवज्ञानं रोदनं च समाचरेत् ।
ततश्च शोभनं पश्येन्निमित्तं वै प्रियागमे ॥ २४२ ॥
सूच्यो नायिकयासन्नो गत्वा घ्राणेन नायकः ।
दृष्ट्वा चोत्थाय हृष्टाङ्गी प्रत्युद्गच्छेद्धि नायकम् ॥ २४३ ॥

यदि स्यादपराद्धस्तु ततस्तैस्तैरुपक्रमैः।
उपालम्भकृतैर्वाक्यैरभिभाष्यस्तु नायकः॥ २४४॥
मानापमानसंमोहैरवहित्थैर्यथाक्रमम्।
वचनस्य समुत्पत्तिः स्त्रीणां गाथाकृता भवेत्॥ २४५॥
विश्रम्भस्नेहरागेषु संदेहे प्रणये तथा।
परितोषे च हर्षे च दाक्षिण्याक्षेपपातने॥ २४६॥
धर्मार्थकामयोगेषु प्रच्छन्नवचनेषु च।
हास्ये कुतूहले चैव संभ्रमव्यसने तथा॥ २४७॥
हास्योपस्थानसंप्राप्तौ दोषोपक्षेपनिह्नवे।
अनाभाष्योऽपि संभाष्यः प्रिंययेतिस्तु कारणैः॥ २४८॥
यत्र स्नेहो भयं तत्र यत्रेष्यति च मन्मथः।
चतस्रो योनयस्तस्याः कीर्त्यमाना न(नि)बोधत॥ २४९॥
वैमनस्यं व्यलीकं च विप्रियं मन्युरेव च।
एतेषां च समुत्पत्तिः प्रयोगं च निबोधत॥ २९०॥
निद्राखेदालसगतिं सचिह्नं सरसव्रणम्।
एवंविधं प्रियं दृष्ट्वा वैमनस्यं भवेत्स्त्रियाः॥ २९१॥
तीव्रा सूचितवचनाद्रोषा(द्) बहुशः प्रकम्पमानोष्ठी।
साध्विति सुष्ठ्विति वाक्यैः शोभनमित्यभिनयं युञ्ज्यात्॥ २९२॥
बहुशो वार्यमाणोऽपि प्रत्यस्मिन्नेव इष्यते।
संहर्षात्तत्र मात्सर्याद्व्यलीकं तु भवेत्स्त्रियाः॥ २९३॥
कृत्वौरसि वामकरं दक्षिणहस्तं रुषा विधुन्वाना।
चरणविनिक्षेपणरसिन्नकुर्वीत साभिनयम्(?)॥ २९४॥
जीवन्त्यां त्वयि जीवामि दासोऽहं त्वं च मे प्रिया।
उक्त्वैवं योऽन्यथा कुर्यात्तद्विप्रियमिति स्त्रियाः॥ २९५॥
दूतीलेखप्रतिवचनभेदनक्रोधहसितरुदिते च।
विप्रियकरणेऽभिनयः सशिरःकम्पः प्रयोक्तव्यः॥ २९६॥

१. 'प्रिययेति तु का०' इति, 'प्रियया स्तुतिका०' इति वा भवेत्.

प्रतिपक्षविकाशात्तु यः सौभाग्यविकत्थनः।
उपसर्पेत्सचिह्नस्य पैत्युस्तत्र भवेत्क्रियाः॥ २५७॥
वलयपरिवर्तनेन च सशिथिलमुपक्षेपणेन रसनयोः।
मेंधुस्त्वभिनेतव्यः(?) सशङ्कितं चास्य मोक्षेऽस्य॥ २५८॥
दृष्ट्वा स्थितं प्रियतमं साशङ्कं सापराधमतिलज्जम्।
ईर्ष्यावचनसमुत्थैः खेदयितव्यो ह्युपालम्भैः॥ २५९॥
न च निष्ठुरमतिभाष्यो न चास्पतिक्रोधनस्तु परिहार्यः।
बाष्पोन्मिश्रैर्वचनैरात्मोपन्याससंयुक्तैः॥ २६०॥
मध्याङ्गुल्योष्ठाग्रविष्पवात्पाणिना ह्युरःस्थेन।
उद्वर्तितनेत्रभावैरभिवीक्षणैश्चापि॥ २६१॥
कटिहस्तनिविष्टस्य विच्छिन्नतया तथाङ्गुलैः करणात्।
मूर्धभ्रमणनिहञ्चनवियतः संदर्शनायापि॥ २६२॥
अवहित्थवीक्षणेन च साङ्गुलिभङ्गेन तर्जनैर्ललितैः।
एभिर्भावविशेषैः रचयेतेस्त्वभिनयः कार्यः॥ २६३॥
शोभसे साधु इष्टोऽसि गच्छ कस्माद्विलम्बसे।
मा मां स्प्राक्षीः प्रिया य⋯⋯तव या हृदि संस्थिता॥ २६४॥
गच्छेत्युक्त्वा परावृत्य मुनयः प्रतिनित्य च।
केनचिद्वचनार्थेन प्रहर्षं संप्रयोजयेत्॥ २६५॥
रभसग्रहणाच्चापि हस्ते वस्त्रे च मूर्धनि।
कार्यं प्रसादनं नार्या अपराधं समीक्ष्य च॥ २६६॥
हस्ते वस्त्रे च केशान्ते तथैव च गृहीतया।
कान्तमेवोपसार्यन्त्या कर्तव्यं मोक्षणं शनैः॥ २६७॥
गृहीतयाथ केशान्ते हस्ते वस्त्रेषु वा शनैः।
ग्राह्यः स्पर्शस्तथा नार्या न पश्येद्दयितो यथा॥ २६८॥
पादाग्रस्थितया नार्या तथापाकुञ्चितोऽङ्गया।
अपक्रान्तेन कर्तव्यं केशानां मोक्षणं शनैः॥ २६९॥

---

१. 'मन्यु' इति भवेत्. २. 'मन्युरभिनेतव्यः' इति भवेत्. ३. 'पुनः' ख.

विमुच्यमाने केशान्ते संजातस्वेदलेशया ।
[1]हुं हुं मुञ्चापसर्पेति वासःस्पर्शालसाङ्गया ॥ २७० ॥
गच्छेति रोषवाक्येन गत्वात्र विनिवृत्य च ।
केनचिद्वचनार्थेन त्वालापं संप्रयोजयेत् ॥ २७१ ॥
विधूननेन हस्तस्य हुंकारं संप्रयोजयेत् ।
स चावधूनने कार्यः शपथे व्याज एव च ॥ २७२ ॥
अक्ष्णोः संवरणं कार्यं मृष्टतल्पोपगूहनम् ।
नार्यास्त्वपहृते वस्त्रे दीपच्छादनमेव च ॥ २७३ ॥
तादृशे दयितव्येस्तुययेत्पादगतो(?) भवेत् ।
ततश्चतुरयोः पाते कुर्याद्दूतीनिरीक्षणम् ॥ २७४ ॥
स्पर्शस्य ग्रहणं कृत्वा नायिका नायकं ततः ।
[2]उत्थाप्य विधिना हृष्टा शयनाभिमुखी भवेत् ॥ २७५ ॥
एतद्गीतविधानेन सुकुमारेण योजयेत् ।
यदा शृङ्गारसंयुक्तं रतिसंभोगकारणम् ॥ २७६ ॥
यदा चकाशपुरुषं(?) परस्थवचनाश्रयम् ।
नयेत्काव्ये तदाम्येषं[3](?) कर्तव्योऽभिनयः स्त्रियाः ॥ २७७ ॥
यदन्तःपुरसंबद्धं काव्यं नाटकसंश्रयः ।
शृङ्गाररससंयुक्तं तदाम्येषं[4](?) विधिर्भवेत् ॥ २७८ ॥
न कार्यं शयनं रङ्गैर्नाट्यधर्मं विजानता ।
केनचिद्वचनार्थेन छेदमत्र प्रयोजयेत् ॥ २७९ ॥
यदा स्वपेदर्थवशादेकाकी सहितोऽपि वा ।
चुम्बनालिङ्गनादीनि रङ्गमध्ये न कारयेत् ॥ २८० ॥
दन्तं नखक्षतं छेद्यं नीवीश्रं(स्रं)सनमेव च ।
स्तनाधरविमर्दं च रङ्गमध्ये न कारयेत् ॥ २८१ ॥
भोजनं सलिलक्रीडां तथा न(ल)ज्जाकरं तु यत् ।
एवंविधं भवेद्यद्यत्तत्तद्रङ्गे न कारयेत् ॥ २८२ ॥

---

१. 'ऊं ऊं' ख. २. 'उत्थाय' क. ३-४. 'प्येष' इति भवेत्. ५. 'न विश्वसेदविश्वस्तम्' इतिवद्यथाकथंचित्साधु.

पितृपुत्रस्नुषाश्वश्रूदृश्यं यस्मात्तु नाटकम् ।
तस्मादेतानि सर्वाणि वर्जनीयानि यत्नतः ॥ २८३ ॥
वाक्यैः सातिशयैर्हृद्यैर्मधुरैर्न तु निष्ठुरैः ।
हितोपदेशसंयुक्तैः प्राज्ञः कुर्वीत नाटकम् ॥ २८४ ॥
एवमन्तःपुरगतः कार्यस्त्वभिनयो बुधैः ।
समागमेऽथ नारीणां वाच्यानि मदनाश्रये ॥ २८५ ॥
प्रियेषु वचनानीह यानि तानि निबोधत ।
प्रियः कान्तो विनीतश्च नाथः स्वाम्यथ जीवितम् ॥ २८६ ॥
नन्दनश्चेत्यभिजनि(?)[1]वचनानि भवन्ति हि ।
दुःशीलोऽथ दुराचारः शठो वामो विकत्थनः ।
निर्लज्जो निष्ठुरश्चेति प्रियं क्रोधेऽभिनिर्दिशेत् ॥ २८७ ॥
यो विप्रियं न कुरुते नानायुक्तं प्रभाषते ।
तथार्जवसमाचारः प्रिय इत्यभिधीयते ॥ २८८ ॥
अन्यनारीसमुद्भूतं चिह्नं यत्र प्रदृश्यते ।
अधरे वा शरीरे वा स कान्त इति भा[2]ष्यते ॥ २८९ ॥
संक्रुद्धो(ष्टो)ऽपि हि यो नार्या नोत्तरं प्रतिपद्यते ।
परुषं वा न वदति विनीतः सोऽभिधीयते ॥ २९० ॥
हितैषी रक्षणे[3]त्युक्तो न मानी न च मत्सरी ।
सर्वकार्येष्वसंमूढः स नाथ इति संज्ञितः ॥ २९१ ॥
सामदानार्थसंभोगैस्तथा लालनपालनैः ।
नारीं निषेवते यस्तु स स्वामीत्यभिधीयते ॥ २९२ ॥
नारीस्थितैरभिप्रायैर्निपुणं शयनक्रियाम् ।
करोति यस्तु संभोगैः स जीवित इति स्मृतः ॥ २९३ ॥
कुलीनो धृतिमान्दक्षो दक्षिणो वा विशारदः ।
श्लाघनीयः सखीमध्ये नन्दनः सोऽभिधीयते ॥ २९४ ॥

---

१. 'वेदनानि' ख. २. 'भाव्यते' क. ३. 'त्युक्तो' इति भवेत्.

एते वचनविन्यासा रतिप्रीतिकराः स्मृताः ।
तथा च[1] प्रीतिशक्यानि(?) गदतो मे निबोधत ॥ २९५ ॥
निष्ठुरश्चासहिष्णुश्च मानी धृष्टो विकत्थनः ।
अनवस्थितचित्तश्च दुःशील इति कथ्यते ॥ २९६ ॥
ताडनं बन्धनं चापि यो विमृश्य समाचरेत् ।
तथा परुषवाक्यश्च दुराचारः स उच्यते ॥ २९७ ॥
वाचैव मधुरो यस्तु कर्मणा नोपपादयेत् ।
योषितां कंचिदप्यर्थं स शठः परिकीर्तितः ॥ २९८ ॥
वार्यते यत्र यत्रार्थे तं तमेव करोति यः ।
विपरीतनिषेवी च स च वाम इति स्मृतः ॥ २९९ ॥
[2]सरसव्रणचिह्नो यः स्त्रीसौभाग्यविकत्थनः ।
अभिमानी तथा स्तब्धो विकत्थन इति स्मृतः ॥ ३०० ॥
वार्यमाणो दृढतरं यो नारीमुपसर्पति ।
सचिह्नः सापराधश्च स निर्लज्ज इति स्मृतः ॥ ३०१ ॥
सापराधस्तु रभसा नारीं सेवितुमिच्छति ।
अप्रसादनबुद्धिश्च निष्ठुरः सोऽभिधीयते ॥ ३०२ ॥
एते वचनविन्यासाः प्रियाप्रियविभाषिताः ।
नर्तकीसंश्रिताः कार्या बहवोऽन्येऽपि नाटके ॥ ३०३ ॥
एष गीतिविधानेन सुकुमारविधिर्भवेत् ।
[3]शृङ्गाररससंभूतो रतिसंभोगखेदजम् ॥ ३०४ ॥
यश्चैवाकाशपुरुषपरस्थवचनाश्रयम् ।
शृङ्गार एवमेव स्यात्तत्राप्येष क्रमो भवेत् ॥ ३०५ ॥
यद्वा पुरुषसंबद्धं काव्यं भवति नाटकम् ।
शृङ्गाररससंयुक्तं तत्राप्येष विधिर्भवेत् ॥ ३०६ ॥
एवमन्तः[4]पुरगतं प्रयोज्याभिनयो बुधैः ।
दिव्याङ्गनानां तु विधिं व्याख्यास्याम्यनुपूर्वशः ॥ ३०७ ॥

---

१. 'चाप्रीतिवाक्यानि' इति भवेत्. २. 'सरसो व्रणचिह्ने यः' इति भवेत्. ३. 'शृङ्गारे' ख. ४. 'पुरगतः प्रयोज्यो' इति भवेत्.

नित्यमेवोज्ज्वलो वेषो नित्यं प्रमुदितं मनः ।
सुखकालः सदा नित्यं देवीनां ललिताश्रयः ॥ ३०८ ॥
ईर्ष्या लिप्सा न च क्रोधो नासूया न प्रसाधनम् ।
ईर्ष्यते देवपुंसा हि शृङ्गारे योषितां प्रति ॥ ३०९ ॥
यदा मानुषसंयोगो दिव्यानां योषितां भवेत् ।
सर्व एव तदा कार्या भावा मानुषसंश्रयाः ॥ ३१० ॥
शापभ्रंशात्तु दिव्यानामङ्गनानां यदा भवेत् ।
मानुषैः सह संयोगस्तदेवमुपसर्पणम् ॥ ३११ ॥
पुष्पैर्भूषणजैः शब्दैरदृश्याविपुलो भवेत् ।
पुनः संदर्शनं दत्त्वा क्षणादन्तर्हिता भवेत् ॥ ३१२ ॥
वस्त्राभरणमाल्यैस्तु लेखसंप्रेक्षणैरपि ।
ईदृशैरभ्युपगमैः समुन्मादस्तु नाटकः ॥ ३१३ ॥
उन्मादनात्समुत्पन्नः कामो रतिकरो भवेत् ।
स्वभावोपगतो यस्तु नानारत्यर्थभावकः ॥ ३१४ ॥
ये भावा मानुषाणां स्युः स्वजनं यच्च चेष्टितम् ।
तत्सर्वं मानुषात्प्राप्य कर्तव्यं दैवतैरपि ॥ ३१५ ॥
एवं राजोपचारो हि कर्तव्यो ह्यन्तराश्रयः ।
बाह्यमप्युपचारं च व्याख्यास्याम्यथ कै(वै)शिकैः ॥ ३१६ ॥

इति भारतीये नाट्यशास्त्रे सामान्याभिनयो नामाध्यायो द्वाविंशतितमः ।

---

### त्रयोविंशाध्यायः ।

विशेषयेत्कलाः सर्वा यस्मात्तस्मात्तु कै(वै)शिके ।
वेश्योपचरणाद्वापि कै(वै)शिकः स उदाहृतः ॥ १ ॥
वस्तुतौर्यकलोपेतः सर्वशिल्पप्रयोजकः ।
स्त्रीचित्रग्राहकश्चैव वैशिकः स भवेत्पुमान् ॥ २ ॥
गुणास्तस्य तु विज्ञेयाः स्वशरीरसमुद्भवाः ।
आहार्याः सहजाश्चैव त्रयस्त्रिंशत्समासतः ॥ ३ ॥

शास्त्रविच्छीलसंपन्नो रूपवान्प्रियदर्शनात्[1] ।
विक्रान्तो वृत्तिमांश्चैव वयोवेषकुलान्वितः ॥ ४ ॥
सुरभिर्मधुरस्त्यागी सहिष्णुरविकत्थनः ।
अशङ्कितः प्रियाभाषी चतुरः सुभगः शुचिः ॥ ५ ॥
कामोपचारकुशलः कृतज्ञो देशकालवित् ।
नदीनवाक्यः स्मितवाग्वाग्मी वशः प्रियंवदः ॥ ६ ॥
अलुब्धः संविभागी च श्रद्दधानो दृढः स्मृतः ।
गम्यासु चाप्यविस्रम्भी मानी चैव हि वैशिकः ॥ ७ ॥
अनुरक्तः शुचिर्दक्षो दक्षिणः प्रतिपत्तिमान् ।
भवेच्छिद्राविधावी[2] च पैयस्यस्य[3](?) गुणा मताः ॥ ८ ॥
प्रतिवेश्या सखा[4] दासी कुमारी कारुशिल्पिनी ।
धात्री पाषण्डिनी चैव दूत्यः स्त्रीक्षणिकास्तथा ॥ ९ ॥
मृजारूपवयो येन मथावन्तं(?) जडं तथा ।
दूतं दूती वा ········न कुर्याद्वैशिकाश्रये ॥ १० ॥
प्रोत्साहनेषु कुशलां मधुरकथां दक्षिणां च कालज्ञाम् ।
लडहां संवृतमन्त्रां ····कृतामेवंविधां कुर्यात् ॥ ११ ॥
तथा प्रोत्साहनं कार्यमनुरागानुकीर्तनम् ।
यथोक्तकथनं चैव तथा भावप्रदर्शनम् ॥ १२ ॥
कुलभोगधनाधिक्यं कार्यं चैवाविकत्थनम् ।
दूती निवेदयेत्काम्यमर्थानां चैव भाषणम् ॥ १३ ॥
न च कामप्रवृत्तायाः क्रुद्धाया वा समागमः ।
नानोपायैः प्रकर्तव्यो दूत्याभिपुरुषाश्रये ॥ १४ ॥
उत्सवे रात्रिसंचारे उद्याने ज्ञातिवेश्मनि ।
धात्रीक्षये सखीगेहे तथा चैव निमन्त्रणे ॥ १५ ॥

---

१. 'प्रियदर्शनः' इति स्यात्. २. 'विधायी' इति स्यात्. ३. 'वयस्यस्य' इति स्यात्. ४. 'सखी' इति स्यात्.

व्याधितव्यपदेशेन सूच्यागारनिवेशने ।
कार्यः समागमो नृणामेष प्रथमसंगमे ॥ १६ ॥
एवं स संगमं कृत्वा नानोपायविधानजम् ।
अनुरक्तां विरक्तां वा चिह्नैः समुपलक्षयेत् ॥ १७ ॥
स्वभावभावातिशयैर्या नारी मदनातुरा ।
करोत्यनिभृतां लीलां ज्ञेया सा मदनातुरा ॥ १८ ॥
गुणान्सखीमुच्चदले[1] स्वधनं प्रददाति च ।
पूजयन्नपि मित्राणि शत्रुपक्षं च निन्दति ॥ १९ ॥
समागमं प्रार्थयते दृष्टं चैव हि हृष्यति ।
तुष्यत्यस्य कथाभिश्च सस्नेहं च निरीक्षते ॥ २० ॥
सुप्ते च पश्चात्स्वपिति प्रथमं प्रतिबुध्यते ।
परिक्लेशांश्च सहते चुम्बिता प्रतिचुम्बति ॥ २१ ॥
समा दुःखे सुखे च स्यात्तत्क्रोधं प्रतियाति च ।
एवंविधैर्गुणैर्युक्ता रक्ता ज्ञेया हि कै(वै)शिकी ॥ २२ ॥
विरक्तायास्तु लिङ्गानि चुम्बितास्यं प्रमार्ष्टि हि ।
करोत्यनिष्टां च कथां प्रियमुक्तापि कुप्यति ॥ २३ ॥
मित्राणि चास्य प्रद्वेष्टि शत्रुपक्षं प्रशंसति ।
शेते पराङ्मुखी चैव शय्यास्था पूर्वशायिनी ॥ २४ ॥
सुमहत्युपकारेऽपि न तुष्यति कथंचन ।
न क्लेशं सहते वापि तथा कुप्यत्यकारणात् ॥ २५ ॥
यस्मादेवंप्रकारा तु विरक्तां तां विनिर्दिशेत् ।
हृदयग्रहणानि स्युरस्या व्यापारचेष्टितम् ॥ २६ ॥
अर्थप्रदर्शनं यच्च तथा सद्भावदर्शनम् ।
अर्थोपन्यास एवं स्यादुपन्यासस्तथैव हि ॥ २७ ॥
व्याधितो यः परित्यागो भावोपक्षेप एव च ।
दारिद्र्याद्व्याधिताद्दुःखात्पारुष्यादश्रुतात्तथा ॥ २८ ॥

---

१. 'मुद्वदति' इति स्यात्.

प्रवासगमनोन्मादादतिलोभादतिक्रमात् ।
अतीवाभिगमाच्चैव तथा विप्रियसेवनात् ॥ २९ ॥
एभिः स्त्री पुरुषो वापि कारणैस्तु विरज्यते ।
भावग्राहीणि नारीणां कार्याणि मदनाश्रये ॥ ३० ॥
येन कुप्यति वा नारी क्रुद्धा वापि प्रसीदति ।
लुब्धामर्थप्रदानेन कलाज्ञानेन पण्डिताम् ॥ ३१ ॥
चतुरां चैव चातुर्यैरनुवृत्त्या तु भामिनीम् ।
पुरुषद्वेषिणीमिष्टैः कथायोगैरुपक्रमेत् ॥ ३२ ॥
बालां तामपि क्रीडन्वै भीरुमाश्वासवायु(चाटु)भिः ।
.......................रुदार्त्तां शिल्पदर्शनैः ॥ ३३ ॥
सर्वासामेव नारीणां त्रिविधा प्रकृतिः स्मृता ।
उत्तमा मध्यमा चैव तृतीया चाधमा स्मृता ॥ ३४ ॥
या विप्रियेऽपि निष्टम्भं न वदत्यप्रियं प्रियम् ।
न चिरं क्रोधमायाति दोषान्प्रच्छादयत्यपि ॥ ३५ ॥
काम्यते पुरुषैर्या तु कुलशोभाधनाधिकैः ।
कुशला कामतन्त्रेषु दक्षिणारूपधारिणी ॥ ३६ ॥
गृह्णाति कारणाद्रोषं गतेऽप्यपि(?) ब्रवीति च ।
कार्यकालविशेषज्ञा सुभगा सा स्मृतोत्तमा ॥ ३७ ॥
पुंसः कामयते या तु पुरुषैर्या तु काम्यते ।
कामोपचारकुशला प्रतिपक्षाभ्यसूयिनी ॥ ३८ ॥
ईर्ष्यातुरा वा निभृता क्षणक्रोधा च गर्विता ।
क्षणं प्रसाद्यते या च सा नारी मध्यमा स्मृता ॥ ३९ ॥
अस्थाने कोपमायाति दुःशीला चातिमानिनी ।
परुषा प्रतिकूला च दीर्घरोषाधमा स्मृता ॥ ४० ॥
सर्वासां नारीणां यौवनलाभा भवन्ति चत्वारः ।
नेपथ्यरूपवेषैर्गुणैस्तु शृङ्गारमासाद्य ॥ ४१ ॥

पीनोरुगण्डजघनस्तनाधरं कर्कशं रतिमनोज्ञम् ।
सुरतं प्रति प्रोत्साहं प्रथमं तद्यौवनं विद्यात् ॥ ४२ ॥
गात्रं पूर्णावयवं पीनौ ····पयोधरौ नतं मध्यम् ।
कामस्य भारभूतं यौवनमेतद्द्वितीयं तु ॥ ४३ ॥
सर्वश्रीसंपूर्णं रतिकरमुन्मादनं बहुगुणाढ्यम् ।
कामायार्पितशोभं यौवनमेतत्तृतीयं तु ॥ ४४ ॥
नवमे यौवने व्यतीते तदा द्वितीये तृतीयके चापि ।
शृङ्गारशत्रुभूतं यौवनमेतच्चतुर्थं तु ॥ ४५ ॥
निर्मांसगण्डजघनाधरस्तनं शुष्कलम्बितकपोलम् ।
कामे च निरुत्साहं यौवनमेतच्चतुर्थं तु ॥ ४६ ॥
नात्यर्थं क्लेशसहा न च कुप्यति हर्षमतिसंपन्ने ।
सौख्यं गुणे श्वासरक्ता नारी नवयौवना ज्ञेया ॥ ४७ ॥
किंचित्करोति मानं किंचित्क्रोधं च मत्सरं चैव ।
क्रोधे च भवति तूष्णीं यौवनभेदे द्वितीये तु ॥ ४८ ॥
रतिसंभोगे दक्षा··········· ····सूयिकागुणाढ्या च ।
अनिभृतगर्वितचेष्टा नारी ज्ञेया तृतीये तु ॥ ४९ ॥
पुरुषग्रहणसमर्था कामाभिज्ञा ह्यमत्सरोपेता ।
अविरह नेच्छति विगुणा कामिन तन्त्रे प्रवक्ष्यामि(?) ॥ ५० ॥
चतुरोन्तामो समस्तथाधमः संप्रवृत्तकश्चैव(?) ।
स्त्रीणां प्रयोगविषये ज्ञेयाः पुरुषास्त्वमी पञ्च ॥ ५१ ॥
दुःखक्लेशसहिष्णुः प्रियवदनः प्रसादने कुशलः ।
रत्युपचारे निपुणो दक्षश्चतुरः स बोद्धव्यः ॥ ५२ ॥
यो विप्रियं न कुरुते धीरोदात्तः प्रियंवदो मानी ।
अज्ञातहृदयतत्त्वो ज्ञेयः स्मृतिमान्स तु ज्येष्ठः ॥ ५३ ॥
मधुरस्त्यागी रागं न याति मदनस्य नापि वशमेति ।
अपमानितश्च नार्या विरज्यते स च भवेज्ज्येष्ठः ॥ ५४ ॥

सर्वार्थे मध्यस्थो भावग्रहणं करोति नारीणाम् ।
किंचिद्दोषं दृष्ट्वा विरज्यते मध्यमध्यमोऽयमिति ॥ ९९ ॥
अपमानितोऽपि नार्या निर्लज्जः समुपसर्पणे तथैव (?) ।
अभ्यन्तरसंक्रान्तामारूढः स्नेहभावस्य ॥ ९६ ॥
अभिवक्षते व्यलीके प्रत्यक्षं रज्यते दृढतरं यः ।
सुहृदापि वार्यमाणो विज्ञेयः सोऽधमो नाम ॥ ९७ ॥
अपि गणितभयामर्षो भूयः प्रत्यक्षप्रसक्तनाशश्च ।
एकान्तदृढताहीनो निर्लज्जः कामतन्त्रेषु ॥ ९८ ॥
रतिकलहसंप्रहारेषु कर्कशः क्रीडनीयकः स्त्रीणाम् ।
एवंविधो विधिज्ञैः प्रवृत्तकोया(य)मपि ज्ञेयः ॥ ९९ ॥
नानाशीलाः स्त्रियो ज्ञेया गूढार्थहृदयाश्च ताः ।
वित्तदे च यथातत्त्वमुपसर्पेत्ततश्च ताः ॥ ६० ॥
भावाभावौ विदित्वा तु ततस्तैस्तैरुपक्रमैः ।
पुमानुपचरेन्नारीं कामतन्त्रं समीक्ष्य तु ॥ ६१ ॥
साम योग्यप्रदानं च दण्डो भेदस्तथैव च ।
उपेक्षा चैव कर्तव्या नारीणां विषयं प्रति ॥ ६२ ॥
तवास्मि मम दैवत्वं दासोऽहं त्वं च मे प्रिया ।
आत्मोपक्षेपणकृतं तत्सामेति हि संज्ञितम् ॥ ६३ ॥
काले काले प्रदातव्यं धनं विभवमात्रया ।
निमित्तान्तरसंभूतं प्रदानं नाम तत्स्मृतम् ॥ ६४ ॥
भेदः स्यात्तत्प्रियस्येह प्रदानं कोपदर्शनम् ।
बन्धनं ताडनं वापि दण्ड इत्यभिधीयते ॥ ६५ ॥
मध्यस्थामानयेत्साम्ना लुब्धायां च प्रदानतः ।
अन्यावबद्धभावां च भेदेन प्रतिपादयेत् ॥ ६६ ॥
दुष्टाचारे समारब्धे त्वन्यभावसमुत्थिते ।
दण्डः पातयितव्यो हि मृदुताडनबन्धनैः ॥ ६७ ॥

१. अपगणित इति स्यात्.

सामादीनां प्रयोगे तु परिक्षीणे यथाक्रमम् ।
न भवेद्वशमापन्ना तामुपेक्षेत बुद्धिमान् ॥ ६८ ॥
मुखरो(रा)गेण नेत्राभ्यां विज्ञेयः स्वाङ्गचेष्टितैः ।
द्वेष्यो वापि प्रियो वापि मध्यस्थो वापि योषिताम् ॥ ६९ ॥
अर्थहेतोस्तु यस्या ना प्रियो वा यदि वाप्रियः ।
गम्य एव नरो नित्यं मुक्त्वा दिव्यनृपस्त्रियः ॥ ७० ॥
द्वेष्यं तु प्रियमित्याहुः प्रियं प्रियतरं तथा ।
दुःशीलं च सुशीलेति निर्गुणं गुणवानिति ॥ ७१ ॥
प्रहसन्ती च नेत्राभ्यां यं दृष्ट्वोत्फुल्लतारकाः ।
प्रसन्नमुखरागा च लक्ष्यते भावरूपणैः ॥ ७२ ॥
भावाभावौ विधायैवं ततस्तैस्तैरुपक्रमैः ।
उपसर्पेत्तथा नारीं कामतन्त्रं समीक्ष्य तु ॥ ७३ ॥
तुषया(?)खलत्वाच्च विप्रलम्भकृतेन च ।
तासु निष्पद्यते कामः काष्ठादग्निरिवोत्थितः ॥ ७४ ॥
योषितामुपचारोऽयं यथोक्तो वैशिकाश्रयः ।
कार्य(ः) प्रकरणे वापि यथायोगं च नाटके ॥ ७५ ॥
एवं विशेषाचारोऽयं तज्ज्ञैः कार्यो द्विजोत्तमाः ।
अतः परं प्रवक्ष्यामि प्रकृतीनां तु लक्षणम् ॥ ७६ ॥

इति भारतीये नाट्यशास्त्रे वैशिकनामाध्यायस्त्रयोविंशः ।

---

चतुर्विंशोऽध्यायः[1] ।

समासतस्तु[2] त्रिविधा[3] प्रकृतिः परिकीर्तिता ।
स्त्रीणां च पुरुषाणां च उत्तमाधममध्यमाः[4] ॥ १ ॥
नाट्ये चत्वार एवैते नायकाः परिकीर्तिताः ।
तत्रोत्तमायां[5] प्रकृतौ नानालक्षणलक्षिताः ॥ २ ॥

---

१. 'चतुस्त्रिंशत्तमोऽध्यायः' इति मुद्रितपुस्तके पाठः. २. 'अत ऊर्ध्वं प्रवक्ष्यामि प्रकृतीनां च लक्षणम् । नायकानां च सर्वेषां चतुर्णामपि तत्त्वतः ॥' इत्यधिको मुद्रितः पाठः. ३. 'विविधा' मु०. ४. 'मध्यमाधमाः' मु०. ५. 'मध्योत्तमायां' मु०.

धीरोद्धतो धीरललितो धीरोदात्तस्तथैव च ।
धीरप्रशान्तश्चैवेति नायका नाटकाश्रयाः[1] ॥ ३ ॥
देवा धीरोद्धता ज्ञेयाः स्युर्धीरललिता[2] नृपाः ।
सेनापतिरमात्याश्च धीरोदात्ताः प्रकीर्तिताः ॥ ४ ॥
ब्राह्मणा वणिजश्चैव प्रोक्ता धीरप्रशान्तकाः ।
एतेषां च पुनर्ज्ञेयाश्चत्वारोऽथ विदूषकाः ॥ ५ ॥
एते तु नायका ज्ञेयाः काव्यबन्धेषु सर्वदा ।
नायिकाश्चैव वक्ष्यामि चतस्रः पुनरेव तु ॥ ६ ॥
दिव्या च नृपपत्नी च कुलस्त्री गणिका तथा ।
एतास्तु नायिका ज्ञेया नानाप्रकृतिलक्षणाः ॥ ७ ॥
धीराश्च ललिताश्चैव उदात्ता निभृतास्तथा ।
दिव्या राजाङ्गना ह्येता गुणैर्युक्ता भवन्ति हि ॥ ८ ॥
उदात्ता निभृता चैव भवेत्तु कुलजाङ्गना ।
गणिका शिल्पकारी च उदात्तललिते स्मृते ॥ ९ ॥
प्रेष्या चैव हि विज्ञेया संकीर्णा प्रकृतावपि ।
नपुंसकश्च विज्ञेयः संकीर्णोऽधम एव च ॥ १० ॥
संकरे[3] स्थविरश्चैव ये चान्येऽप्यधमा नराः ।
संकीर्णास्तेऽपि विज्ञेया नाटकेषु द्विजोत्तमाः ॥ ११ ॥
एते[4] ज्ञेयाः प्रकृत्या तु पुरुषस्त्रीनपुंसकाः ।
एतेषां चैव वक्ष्यामि विभागं शीललक्षणैः ।
सर्वासां प्रकृतीनां तु प्रकारो द्विविधः स्मृतः ॥ १२ ॥
तत्र राजोपचारो यो भवेदभ्यन्तरस्तु सः ।
बाह्योपचारो[5] यस्तस्माद्विज्ञेयो बाह्य एव सः ॥ १३ ॥
तस्माद्राजोपचारेषु पुनरभ्यन्तराश्रयम् ।
स्त्रीविभागं प्रवक्ष्यामि उपचारं तथैव च ॥ १४ ॥

---

१. 'श्रिताः' मु०. २. 'ताश्रयाः' क-ख. ३. 'शकारश्चैव चेटश्च' मु०. ४. अयमर्धश्लोकः क-ख-पुस्तकयोर्नास्ति. ५. अयमर्धश्लोको मुद्रिते नास्ति.

महादेवी तथा देवी स्वामिनी स्थायिनी तथा ।
भोगिनी शिल्पकारी च [1]नाटकीयाथ नर्तकी ॥ १५ ॥
अनुचारी तथायुक्ता तथा च परिचारिका ।
तथा संचारिणी चैव तथा प्रेषणकारिका ॥ १६ ॥
महत्तरा प्रतीहारी कुमारी स्थविरा तथा ।
आयुक्तिकास्तु भूपानामेष आभ्यन्तरो गणः ॥ १७ ॥
तत्र मूर्धावसिक्ता च कुलशीलविभूषिता ।
समतुल्य[2]चरित्रा च वयस्या क्रोधवर्जिता ॥ १८ ॥
[3]अनीर्ष्या नृपशीलज्ञा समदुःखसुखास्पदा ।
शान्तिस्वस्त्ययनैर्नित्यं भर्तृमङ्गलकाङ्क्षिणी ॥ १९ ॥
पतिव्रता क्षमायुक्ता अन्तःपुरहिते रता ।
एभिर्गुणैस्तु संयुक्ता महादेवी प्रकीर्तिता ॥ २० ॥
एभिरेव गुणैर्युक्ता बहुमानविवर्जिता ।
गर्विता राजपुत्री च रतिसंभोगतत्परा ॥ २१ ॥
बाला नित्योज्ज्वलगुणा प्रतिपक्षेष्वसूयिका ।
यौवनादिगुणोन्मत्ता सा देवीत्यभिधीयते ॥ २२ ॥
से[4]नापतेरमात्यानां दण्डिता तत्पराश्च या ।
तनया नामतश्चैव स्वामिनीत्यभिसंज्ञिता ॥ २३ ॥
शीलरूपगुणैर्या तु संयुक्ता नृपवल्लभा ।
स्वामिसत्कारसंपन्ना स्वामिनीति हि संज्ञिता ॥ २४ ॥
रूपयौवनसंपन्ना कर्कशा ललिता तथा ।
रतिसंभोगकुशला प्रतिपक्षेऽ[5]भ्यसूयिका ॥ २५ ॥
[6]दक्षास्फुटा ह्युदात्ता च गन्धमाल्योज्ज्वला तथा ।
नृपतिच्छन्दवृत्ता च सर्वत्रेर्ष्याविवर्जिता ॥ २६ ॥

---

१. 'नाटकी चाथ' क-ख. २. 'वयस्था च मध्यस्था' मु०. ३. 'अभीष्टा' मु०. ४. 'रूपिणी पद्मिनी जातिः सावधाना नृपाङ्गना। सेनापतिरमात्यानी दण्डिनी तत्पराश्रये। नतया' मु०. ५. 'भ्यसूयिनाम्' मु०. ६. 'दत्ता' मु०.

उपस्थिता [1]चाप्रमत्ता निद्रालस्या ह्यनिष्ठुरा*।
मान्यामान्यविशेषज्ञा स्थायिनी [2]संप्रकीर्तिता ॥ २७ ॥
सुशीला लघुसंमाना [3]मृदुर्नात्युद्धता तथा ।
मध्यस्था निभृता क्षान्ता भोगिनीति हि सा स्मृता ॥ २८ ॥
नानाकलाविशेषज्ञा नानाशिल्पविचक्षणा ।
गन्धशिल्पविभागज्ञा नानालेख्यविशारदा ॥ २९ ॥
शयनासनयानज्ञा चतुराचतुरा तथा ।
दक्षा चित्रास्फुटा [4]श्लक्ष्णा निभृता शिल्पकारिका ॥ ३० ॥
ग्रहमोक्षलयज्ञा च रसभावविभाविका ।
परभावेङ्गितज्ञा च आचार्यानुगता तथा ॥ ३१ ॥
चतुराभिनयज्ञा च ऊहापोहवि[5]चक्षणा ।
निपुणा भाण्डवाद्येषु [6]नाटकीया प्रकीर्तिता ॥ ३२ ॥
[7]यौवनादिगुणोन्मत्ता नृत्तगीतविचक्षणा ।
सदाप्रगल्भा च तथा त्यक्तालस्या जितश्रमा ॥ ३३ ॥
[8]समागतासु नारीषु रूपयौवनकान्तिषु ।
न दृश्यन्ते गुणैस्तुल्या नर्तकी सा प्रकीर्तिता ॥ ३४ ॥
सर्वावस्थाप्रचारेषु अनुगच्छति या नृपम् ।
वि[9]ज्ञेयं नाम तस्यास्तु नृपतेरनुचारिका ॥ ३५ ॥
भाण्डागारे नियुक्ता च आयुधागार एव च ।
औषधीफलमूलेषु वीजेषु[10] व्यापृता तथा ॥ ३६ ॥
गन्धाभरणवस्त्रेषु आख्यानकथनेषु च ।
[11]बह्वर्थेषु नियुक्ता या [12]आयुक्ता च इति स्मृता ॥ ३७ ॥

---

१. 'प्रमत्ता च' मु०. २. 'कथिता तथा' मु०. ३. 'संनदस्युद्धता' क-ख. ४. 'तीव्रा' मु०. ५. 'विशारदा' मु०. ६. 'नाटकी सा' क-ख. ७. 'नानावाद्यप्रयोगज्ञा' मु०. ८. 'समानता च' मु०. ९. 'विज्ञेया नामतः सा तु' मु०. १०. 'वाजेषु स्वावृता' मु०. ११. बह्वर्थशुचियुक्ता' क-ख. १२. 'आयुक्ता इति सा' मु०.

छत्रशय्यासने युक्ता तथा व्यञ्जनकर्मणि ।
संवाहने च गन्धे[1] च तथा चैव प्रसाधने ॥ ३८ ॥
तथाभरणसंयोगे माल्यासंग्रहणेषु च ।
विज्ञेया नामतः सा तु नृपतेः परिचारिका ॥ ३९ ॥
नानाकक्ष्यादिचारिण्यस्तथोपवनसंचराः ।
देवतायतनक्रीडाप्रासादपरिसंचराः ॥ ४० ॥
यामेषु[3] च नियुक्ता यास्तथा च विविधाश्रये ।
संचारिक्यस्तु विज्ञेया नाट्यज्ञैरुपचारतः ॥ ४१ ॥
प्रेषणैः[4] कामसंयुक्तैर्गुह्याद्गुह्यसमुत्थितैः ।
या नियुक्ता बुधैः सा तु ज्ञेयान्वेषणकारिका ॥ ४२ ॥
सर्वान्तःपुररक्षायामाशीःस्वस्त्ययनादिभिः ।
या नित्यमभिनन्दन्ति ज्ञेयास्ताः सुमहत्तराः ॥ ४३ ॥
संधिविग्रहसंबद्धनानाकार्यसमुत्थितम् ।
निवेदयन्ति कार्यं याः प्रतीहार्यस्तु ताः स्मृताः ॥ ४४ ॥
अप्राप्तरतिसंभोगा असंभ्रान्ता अनुद्धटाः ।
निभृता याः सलज्जाश्च ताः कुमार्य इति स्मृताः ॥ ४५ ॥
पूर्वराजनयाभिज्ञाः सर्वराजसु पूजिताः ।
पूर्वराजोपचारज्ञास्ता वृद्धा इति संज्ञिताः[5] ॥ ४६ ॥
समासाल्लक्षणं तासां प्रवक्ष्यामि द्विजोत्तमाः ।
या नियोज्या नियोगेषु प्रयोगेषु तथैव हि ॥ ४७ ॥
अनुद्धटा ह्यसंभ्रान्ताः सुवेषाचारनिष्ठुराः ।
क्षान्ता दीनाः सुशीलाश्च जितक्रोधा जितेन्द्रियाः ॥ ४८ ॥
अकामा निभृताश्चैव स्त्रीदोषैश्च विवर्जिताः ।
ता नियोगे नियोक्तव्या वनिता मदवर्जिताः ॥ ४९ ॥

---

१. 'गर्वे' मु०. २. 'तथा' मु०. ३. 'यत्नेषु' मु०. ४. 'प्रेङ्खणैः' मु०. ५. 'कीर्तिताः' मु०.

यत्स्यान्नपुंसकं नाम तृतीया प्रकृतिस्तु या ।
साप्यन्तःपुरसंचारे योज्या पार्थिववेश्मनि ॥ ९० ॥
स्नातकाः कञ्चुकीयाश्च[1] तथा वर्षधराश्च ये ।
औपस्थायिकनिर्मुण्डाः[2] कक्षास्थानेषु योजयेत् ॥ ९१ ॥
अपुमांसस्तु पुरुषा ये तु स्त्रीभोगवर्जिताः ।
एते त्वन्तःपुरचराः कार्या नित्यं हि नाटके ॥ ९२ ॥
वैस्त्वन्ते[3] (?) स्नातकं कुर्यादार्यमाचारसंयुतम् ।
प्रेषणे वार्थसंयुक्ते कञ्चुकीयान्नियोजयेत् ॥ ९३ ॥
तथा वर्षधरांश्चैव कामचारेषु योजयेत् ।
औपस्थायिकनिर्मुण्डाः स्त्रीणां प्रेषणकारणे ॥ ९४ ॥
मानकार्येषु नारीणां नियुञ्जीतानुचारिकाः ।
सद्योवृत्तान्तयोगज्ञं नाट्यागारे नियोजयेत् ॥ ९५ ॥
ये त्वल्पसत्त्वाः कुशलाः क्लीबाश्च स्त्रीस्वभाविनः ।
जात्या न दुष्टाः कार्ये च ते वै वर्षधराः स्मृताः ॥ ९६ ॥
नपुंसका ये पुरुषाः स्त्रीस्वभावेन वर्जिताः ।
निर्मुण्डा नामतो ज्ञेयाः कामविज्ञानवर्जिताः ॥ ९७ ॥
ये विद्यासत्यसंपन्नाः[4] कामदोषविवर्जिताः ।
ज्ञानविज्ञानकुशलाः कञ्चुकीयास्तु ते स्मृताः ॥ ९८ ॥
एतदष्टादशविधं प्रोक्तमन्तःपुरं मया ।
अतः परं प्रवक्ष्यामि बाह्यं पुरुषसंचरम् ॥ ९९ ॥
राजा सेनापतिश्चैव कुमारो मन्त्रिणस्तथा ।
सचिवाः प्राड्विवाकाश्च प्रयोगाधिकृतास्तथा ॥ ६० ॥
एते चान्ये च बहवः सभास्तारा नृपस्य तु ।
विभागमेषां वक्ष्यामि लक्षणं च पृथक्पृथक् ॥ ६१ ॥

---

१. 'कञ्चुका ये च' मु०. २. 'ये स्थायिकाश्च निर्मुण्डाः' मु०. ३. 'वास्तत्वे' क-ख. ४. 'विप्राः' क-ख.

शीलवान्बुद्धिसंपन्नः सत्यवादी जितेन्द्रियः ।
दक्षः प्रगल्भः स्मृतिमान्विक्रान्तो धृतिमाञ्शुचिः ॥ ६२ ॥
दीर्घदर्शी महोत्साहः कृतज्ञः प्रियवागपि ।
लोकपालव्रतचरः[1] शूरो धीरः क्षमान्वितः ॥ ६३ ॥
उत्थितश्चाप्रमत्तश्च वृद्धः स्मृत्यर्थशास्त्रवित् ।
नाना[2]नाट्यप्रचारज्ञ ऊहापोहविचक्षणः ॥ ६४ ॥
परभावेङ्गितज्ञश्च षाड्गुण्येनाप्यलंकृतः ।
नानाशास्त्रार्थतत्त्वज्ञो नानाशिल्पप्रयोजकः ॥ ६५ ॥
स्थानवृद्धिक्षयज्ञश्च पररन्ध्रविचक्षणः ।
कृतज्ञोऽव्यसनी चैव गुणैरेतैर्भवेन्नृपः ॥ ६६ ॥
शीलवान्सत्यसंपन्नस्त्यक्तालस्यः प्रियंवदः ।
पररन्ध्रविधिज्ञश्च[3] यात्राकालविशेषवित् ॥ ६७ ॥
अर्थशास्त्रार्थतत्त्वज्ञो ह्यनुरक्तः कुले वृतः ।
देशवित्कालविच्चैव भवेत्सेनापतिर्गुणैः ॥ ६८ ॥
कुलीना बुद्धिसंपन्नाः श्रुतिनीतिविशारदाः ।
स्वदेश्याश्चानुरक्ताश्च शुचयो धार्मिकास्तथा ॥ ६९ ॥
अमात्या मन्त्रिणश्चैव गुणैरेतैर्भवन्ति हि ।
व्यवहारार्थतत्त्वज्ञा बुद्धिमन्तो बहुश्रुताः ॥ ७० ॥
मध्यस्था धार्मिका रक्ताः कार्याकार्यविचक्षणाः ।
शान्ता दान्ता जितक्रोधा नोद्धताः समदर्शिनः ॥ ७१ ॥
ईदृशाः प्राड्विवाकाश्च स्थाप्या धर्मासनेष्वथ ।
उत्थिताश्चाप्रमत्ताश्च त्यक्तालस्या जितक्लमाः ॥ ७२ ॥
स्निग्धाः क्षान्ता विनीताश्च मध्यस्था निपुणास्तथा ।
नयज्ञा विनयज्ञाश्च ऊहापोहविचक्षणाः ॥ ७३ ॥

---

१. 'धरः' मु०. २. 'नय' मु०. ३. 'विधिज्ञो यो' मु०.

नानारूपैः समायुक्ता गुणैरेतैर्भवन्ति हि ।
बृहस्पतिमतादेशाद्गुणानां प्रविभावकम् ॥ ७४ ॥
विज्ञेयं वीचि कर्मज्ञैः सभास्तारादिकत्थनम् ।
अत्रोच्यते यथानाट्यमाहार्यगुणसंभवम् ॥ ७५ ॥
कथं राजगुणाः कार्या नटैरल्पपरिच्छदैः ।
अत्रोच्यते यदा लोके नाट्यधर्माः प्रवर्तिताः ॥ ७६ ॥
तदेव सर्वसंपन्नं नाट्यमेतन्मया कृतम् ।
वर्णकैश्छादितस्तत्र भूषणैश्चाप्यलंकृतः ॥ ७७ ॥
गाम्भीर्यौदार्यसंपन्नो राजवत्तु भवेन्नटः ।
सप्तद्वीपाश्रयश्चैव एवमेको नटो भवेत् ॥ ७८ ॥
वर्णकैश्छादितैर्नेह कार्यं त्वर्थविचेष्टितम् ।
आचार्यबुद्ध्या शान्तस्तु सौष्ठवाङ्गपुरस्कृतः ॥ ७९ ॥
राजवद्भरतस्तस्माद्राजापि नटवद्भवेत् ।
यथा नटस्तथा राजा तथा च नट उच्यते ॥ ८० ॥
उभाभ्यां भावनिष्पत्तिः समलीलाङ्गसौष्ठवा ।
यथाचार्योपदेशेन रङ्गशोभी भवेन्नटः ॥ ८१ ॥
एवं स्वभावतो राजा नित्यमेवोज्ज्वलो भवेत् ।
दिव्यानां यः परीवारः पार्थिवानां भवेदिह ॥ ८२ ॥
नाटके संप्रयोक्तव्यो वेषभाषाक्रियान्वितः ।
यादृशं यस्य यद्रूपं प्रकृत्या तस्य तादृशम् ॥ ८३ ॥
वयोवेषविधानेन कर्तव्यं प्रयुयुक्षुणा ।
एवं राजोपचारेषु कार्यः पुरुषसंग्रहः ॥ ८४ ॥
अत ऊर्ध्वं प्रवक्ष्यामि नानापुरुषलक्षणम् ।
नानाशीलगुणे लोके उत्तमाधममध्यमे ॥ ८५ ॥

---

१. 'बृहस्पतिमतादेषां गुणानां' मु०. २. 'चापि' मु०. ३. 'कल्पनम्' मु०. ४. 'सर्वं' मु०. ५. 'मध्यमेको' मु०. ६. 'यथा राजा तथा नटः' मु०. ७. 'द्भुतो' मु०. ८. 'नायकः' मु०. ९. 'प्रभुं पुनः' मु०.

प्रयोक्तव्याः पृथग्भावैर्विज्ञेया प्रकृतिर्बुधैः ।
नानाशिल्पादिसंपन्ना ज्ञानवन्तो जितेन्द्रियाः ॥ ८६ ॥
लोके[1]क्रियाविशेषज्ञा धर्माधर्मविचक्षणाः ।
शास्त्रेतिहासकुशलाः शीलवृत्तव्यवस्थिताः ॥ ८७ ॥
अहिंसासत्त्वसंपन्नाः प्रकृत्या तूत्तमाः स्मृताः ।
लोकोपचारतत्त्वज्ञाः शिल्पशास्त्रविचक्षणाः ॥ ८८ ॥
मध्यप्रायगुणोपेताः प्रकृत्या मध्यमाः स्मृताः ।
रूक्षवाक्या दुराचारा निःसत्त्वाः स्वल्पबुद्धयः ॥ ८९ ॥
क्रोधना घातकाश्चैव [2]कृतघ्नाश्छिद्रदर्शिनः ।
वृथारम्भ[3]प्रसक्ताश्च यत्किंचिद्वादिनोऽल्पकाः ॥ ९० ॥
पिशुनाः पापनिरताः स्त्रीलोलाः कलहप्रियाः ।
मान्यामान्यविशेषाणामनभिज्ञाश्च तस्कराः ॥ ९१ ॥
एभिर्दोषैश्च संयुक्ताः प्रकृत्यैवाधमाः स्मृताः ।
एवं तु शीलतो ज्ञेया प्रकृतिस्त्रिविधा बुधैः ॥ ९२ ॥
अतः परं प्रवक्ष्यामि प्रयोक्तॄणां तु [4]सद्गुणान् ।

तत्र सूत्रधारगुणान्वक्ष्यामः—

अस्यादित एव तावल्लक्षणज्ञता, अहीनो वाक्यसंस्कारः, तथा गीतकालविधानज्ञता, स्वरवादित्रतत्त्ववादः

[5]चतुरो नाट्यकुशलः शास्त्ररीतिप्रतिष्ठितः ।
[6]नानापाषण्डकार्यज्ञो नीतिशास्त्रार्थवित्तथा ॥ ९३ ॥
वेश्योपचारनिपुणः काव्यशास्त्रविचक्षणः ।
नानागतिप्रचारज्ञो रसभावविशारदः ॥ ९४ ॥
नाट्यप्रयोगकुशलो नानाशिल्पसमन्वितः ।
छन्दोविधानतत्त्वज्ञः सर्वशास्त्रविचक्षणः ॥ ९५ ॥

---

१. 'लोके तु ये विशेषज्ञाः' मु०. २. 'कृत्यज्ञाः सर्वदर्शिनः' मु०. ३. 'प्रसन्नाश्च' मु०.४. 'तद्गुणान्' मु०. ५. 'चतुरातोद्यकुशलः शास्त्रकर्मप्रति' मु०. ६. 'नाना च खण्डकार्यज्ञो मु०.

ग्रहनक्षत्रतत्त्वज्ञो देशव्याहारतत्त्ववित्।
पृथिवीद्वीपवर्षाणां पर्वतानां जनस्य च ॥ ९६ ॥
[1]प्रमाणाचारतज्ज्ञश्च राजवंशप्रसूतिवित्।
श्रोता शास्त्रार्थका[2]र्याणां श्रुत्वा चैवावधा[3]रकः ॥ ९७ ॥
अवधार्यप्रयोक्ता च शा[4]स्त्र(?)श्चैवोपदेशने।
एवंगुणस्तथाचार्यः सूत्रधारो विधीयते ॥ ९८ ॥
स्वाभाविकान्गुणांश्चैव गदतो मे निबोधत।
स्मृतिमान्मतिमान्धीर उदारः स्थितवाक्शुचिः ॥ ९९ ॥
अरोगो मधुरः क्षान्तो दान्तश्चैव प्रियंवदः।
सर्वदोषविनिर्मुक्तः सत्यवाग्दक्षिणस्तथा ॥ १०० ॥
अलुब्धः प्रतिमन्ता च स्वाभाविकगुणास्त्वमी।
सूत्रधारगुणैश्चैव किंचिदूनैः समन्वितः ॥ १०१ ॥
मध्यमप्रकृतिस्तज्ज्ञैर्विज्ञेयः पारिपार्श्वकः।
उज्वलो रूपवांश्चैव दृष्टोपकरणक्रियः ॥ १०२ ॥
मेधावी च विधानज्ञः स्वकर्मकुशलो दृढः।
सूत्रधारगुणैर्युक्ताः सर्व एव प्रयोगिणः ॥ १०३ ॥
वेश्योपचारकुशलो मधुरो दक्षिणः कविः।
ऊहापोहक्षमो वाग्मी चतुरश्च वि[5]टो भवेत् ॥ १०४ ॥
उज्ज्वलवस्त्राभरणः कु[6]प्यत्यनिमित्ततः प्रसीदति च।
अधमो मागधभाषी भवति शकारो बहुविकारः ॥ १०५ ॥
वामनो दन्तुरः कुब्जो द्विजन्मा विकृताननः।
खलतिः पिङ्गलाक्षश्च स विधेयो विदूषकः ॥ १०६ ॥
कलप्रियो बहुकथो विरूपो गन्धसेवकः।
मान्यामान्यविशेषज्ञश्चे[7]टो ह्येवंविधः स्मृतः ॥ १०७ ॥

---

१. 'प्रमाणचरितज्ञश्च' मु०. २. 'कर्माणां' क-ख. ३. 'धारया' क-ख. ४. 'श्रेयोक्तावोपदेशने' मु०. ५. 'विभावयेत्' क-ख. ६. 'क्रुध्यत्य' मु०. ७. 'खेटो' मु०.

एवंगुणैस्तु संयुक्तो यत्नजैश्चेतरैस्तथा ।
अतःपरं प्रवक्ष्यामि स्त्रीणां च प्रकृतिं पुनः ॥ १०८ ॥
मितभाषा विदग्धा च सलज्जा न[1] च निष्ठुरा ।
कुलशीलगुणोपेता गुरूणां शासने रता ॥ १०९ ॥
धैर्यगाम्भीर्यसंपन्ना उत्तमा प्रकृतिः स्मृता ।
नानाशिल्पप्रयोगज्ञा नानाशास्त्रविचक्षणा ॥ ११० ॥
[2]कालोपभोग(?)राचार्यशुश्रूषाभिरता सदा ।
लीलया भावहावाभ्यां सत्त्वेन विनयेन च ॥ १११ ॥
माधुर्येण च संयुक्ता चतुःषष्टिकलान्विता ।
[3]नृत्तोपचारकुशला स्त्रीदोषैस्तु विवर्जिता ११२ ॥
प्रियवादी प्रियकथा स्फुटा दक्षा जितश्रमा ।
एभिर्गुणैस्तु संयुक्ता गणिका परिकीर्तिता ॥ ११३ ॥
रूपगुणशीलयौवन[4]सुवर्णमाधुर्य········संपन्ना ।
विशदा स्निग्धा मधुरा पेशलशुभरक्तकण्ठी च ॥ ११४ ॥
[5]भाण्डौघैश्चाक्षुभिता लयतालज्ञा रसैश्च [6]संयुक्ता ।
एवंविधगुणयुक्ता कर्तव्या नायिका तज्ज्ञैः ॥ ११५ ॥
समागतासु नारीषु वयोरूपवतीषु च ।
न दृश्यते गुणैर्युक्ता सहस्रेष्वपि नर्तकी ॥ ११६ ॥
[7]अस्थानहासिनी रूक्षा आविद्धगतिचेष्टिता ।
दीर्घरोषा ह्यदीना च [8]तदा तु निभृतोद्धटा ॥ ११७ ॥
सर्वदोषाभिसंयुक्ता गन्धमाल्योपशोभिता ।
एवंविधा तु कर्तव्या [9]प्रकृष्टाभिनये बुधैः ॥ ११८ ॥

---

१. 'चाप्यनि' मु०. २. 'कलोपयोगे चार्या तु' मु०. ३. 'तत्रो' मु०. ४. 'सुवर्णमाल्याभरणसंपन्ना' मु०. ५. 'भाण्डाद्यैश्च क्षु' मु०. ६. 'संपन्ना' मु०. ७. 'अवस्थासना' क-ख. ८. 'तथा चानि' मु०. ९. 'प्रकृष्टा प्रकृतिर्बुधैः' मु०.

ऐतदेव मया प्रोक्तं प्राग्बिव्वोकादिनिर्णयम् ।
अत ऊर्ध्वं प्रवक्ष्यामि चित्राभिनयनं मुनेः ॥ ११९ ॥

इति श्रीभारतीये नाट्यशास्त्रे स्त्रीपुंसोपचाराध्यायः ।

---

पञ्चविंशोऽध्यायः ।

अङ्गाद्यभिनयस्यैव यो विशेषः क्वचित्क्वचित् ।
अनुक्त उच्यते चित्रः स चित्राभिनयः स्मृतः ॥ १ ॥
उत्तानौ तु करौ कृत्वा स्वस्तिकौ पार्श्वसंस्थितौ ।
उद्वाहितेन शिरसा तथा चोर्ध्वनिरीक्षणात् ॥ २ ॥
प्रभासंगमनं रात्रिं प्रदोषं दिवसं तथा ।
जन्तून्व्यस्तान्समस्तांश्च विस्तीर्णांश्च जलाशयात् ॥ ३ ॥
दिशो ग्रहान्सनक्षत्रा दृष्टयश्च भवे(इ)दिह ।
तान्येवमभितो(ने)यानि नानाभावरसार्थतः ॥ ४ ॥
एभिरेव करैर्भूयस्तेनैव शिरसा पुनः ।
अधोनिरीक्षणेनाथ भूमिष्ठं संप्रयोजयेत् ॥ ५ ॥
स्पर्शस्य ग्रहणाच्चैव तथा लुकुशना(?)दपि ।
चन्द्रज्योत्स्नां सुखं वायुं रसगन्धौ च निर्दिशेत् ॥ ६ ॥
वस्त्रावगुण्ठनात्सूर्यं राजधर्मानिलौ तथा ।
भूमितापं तथोष्णं च कुर्याच्छायाभिलाषतः ॥ ७ ॥
ऊर्ध्वकेकरदृष्टिस्तु मध्याह्ने सूर्यमादिशेत् ।
उदयास्तंगता ये च गम्भीरार्थैः प्रदर्शयेत् ॥ ८ ॥
यानि सौम्यार्थयुक्तानि सुखभावकृतानि च ।
गात्रस्पर्शैः सरोमाञ्चैस्तेषामभिनयो भवेत् ॥ ९ ॥
यानि स्युस्तीक्ष्णरूपाणि तानि चाभिनयेन्नरः ।
अस्पर्शनसमुद्वेगैस्तथा मुखविकूणनैः ॥ १० ॥

---

१. 'एवमेताः प्रकृतयो विज्ञेया नाट्यसंश्रयाः । कृतवेषाभिजात्याश्च सर्वा एव प्रयोक्तृभिः । अत ऊर्ध्वं प्रवक्ष्यामि लक्षणं भूमिकास्वपि' । मु०. २. 'प्रकृत्यध्यायो नाम चतुस्त्रिंशोऽध्यायः समाप्तः' मु०.

गम्भीरोदात्तसंयुक्तानर्थानभिनयेत्पुनः ।
साटोपैश्च सवर्गैश्च गात्रैः सौष्टवसंयुतैः ॥ ११ ॥
यज्ञोपवीतदेशे तु कृत्वारालौ करावुभौ ।
स्वस्तिकौ विच्युतौ हारस्रग्दामार्थान्निदर्शयेत् ॥ १२ ॥
भ्रमणाद्यप्रदेशिन्या दृष्टेः परिगमेन च ।
पीडानाच्चालयश्वस्य(?) सर्वार्थग्रहणं भवेत् ॥ १३ ॥
श्रव्यं श्रवणयोगेन दृश्यं दृष्टिविचारणैः ।
आत्मस्थं वा परस्थं वा मध्यस्थं वा विनिर्दिशेत् ॥ १४ ॥
विद्युदुल्काघनरवौ विस्फुलिङ्गार्चिषस्तथा ।
त्रस्ताङ्गाक्षिनिमेषैश्च दर्शनीयानि योक्तृभिः ॥ १५ ॥
उद्वेष्टितपरावृत्तौ करौ कृत्वा नतं शिरः ।
असंस्पर्शेन वानिष्टं जिह्मदृष्टेन कारयेत् ॥ १६ ॥
वायुमुष्णं तमस्तेजो मुखसंछादनेन तु ।
रेणुतोयपतङ्गानां भ्रमराणां च वारणम् ॥ १७ ॥
कृत्वा स्वस्तिकसंस्थानौ पद्मकोशावधोमुखौ ।
सिंहर्क्षवानरव्याघ्रश्वापदानां निरूपणम् ॥ १८ ॥
स्वस्तिकौ त्रिपताकौ तु गुरूणां पादवन्दने ।
स्वस्तिकौ खेटकास्यौ तु प्रतोदप्रग्रहादिषु ॥ १९ ॥
एकं द्वे त्रीणि चत्वारि पञ्च षट् सप्त चाष्ट वा ।
नव वा दशकं यावद्गणनाङ्गुलिभिर्भवेत् ॥ २० ॥
दशसंख्या ससा(?)ख्याश्च सहस्राख्यास्तथैव च ।
पताकाभ्यां तु हस्ताभ्यामभिनेयाः प्रयोक्तृभिः ॥ २१ ॥
दशभ्ये(भ्यो) गणनायास्तु परतो या भवेदिह ।
वाक्यार्थेनैव साध्यासौ परोक्षाभिनयेन च ॥ २२ ॥
छत्रध्वजपताकासु निर्देश्यं दण्डवारणम् ।
नानाप्रहरणं चैव निर्देश्यं वाप्यनेकधा ॥ २३ ॥

एकचित्ते ह्यधोदृष्टिः किंचिन्नतशिरस्तथा ।
कुर्वीत हस्तसंदंशं स्मृतेर्ध्यानवितर्किते ॥ २४ ॥
उद्वाहितं शिरः कृत्वा हंसपक्षं तथोर्ध्वगम् ।
प्रासादमुच्छ्रयामानं दीर्घं गर्वं च निर्दिशेत् ॥ २५ ॥
कृत्वा गलं च शिरसः समुद्वाह्य तु वामनः ।
गते निवृत्ते ध्वस्ते च श्रान्ते वाक्ये च योजयेत् ॥ २६ ॥
सर्वेन्द्रियस्वस्थतया दिक्प्रसन्नतया तथा ।
विचित्रकुसुमालोकैः **शरदं** तु विनिर्दिशेत् ॥ २७ ॥
गात्रसंकोचनाच्चापि सूर्याग्निपटवेशनात् ।
**हेमन्त**श्चाभिनेतव्यः पुरुषैर्मध्यमाधमैः ॥ २८ ॥
शिरोदन्तोष्ठकम्पेन गात्रसंकोचनेन च ।
कूजितैः श्वासशीत्कारैः **शीतं** हीनो विनिर्दिशेत् ॥ २९ ॥
अवस्थान्तरमासाद्य कदाचित्तूत्तमैरपि ।
शीतातपाभिनयनं कार्यं व्यसनसंभवम् ॥ ३० ॥
रूक्षस्य वायोः स्पर्शेन समाघ्राणेन चैव हि ।
ऋतुजानां तु पुष्पाणां **शिशिरं** दर्शयेन्नरः ॥ ३१ ॥
प्रमोदजडतारम्भैः[1] स च भोगैः पृथग्विधैः ।
**वसन्त**स्त्वभिनेतव्यो नानापुष्पप्रदर्शनात् ॥ ३२ ॥
स्वेदप्रमार्जनैश्चैव भूमितापैः सवीजनैः ।
उष्णस्य वायोः स्पर्शेन **ग्रीष्मं** त्वभिनयेद्बुधः ॥ ३३ ॥
कदम्बनिम्बकुटजैः शाद्वलैः सेन्द्रगोपकैः ।
मेघैर्वातैः सुखस्पर्शैः **प्रावट्काल**ं प्रदर्शयेत् ॥ ३४ ॥
मेघौघनादगम्भीरैर्धाराप्रपतनैस्तथा ।
विद्युन्निर्घातघोषैश्च **वर्षारम्भं** समादिशेत् ॥ ३५ ॥
यद्यस्य चिह्नं वेषो वा कर्म वा रूपमेव वा ।
निर्देश्यः सहितस्तेन इष्टानिष्टार्थदर्शनात् ॥ ३६ ॥

---

१. 'जनना' ख.

एतानृतूनर्थवशाद्दर्शयेद्विरहानुगान् ।
सुखिनस्तु सुखोत्पन्नान्दुःखितान्दुःखसंयुतान् ॥ ३७ ॥
यो येन भावेनोद्दिष्टः सुखदेनेतरेण वा ।
स तदाहितसंस्कारः सर्वं पश्यति तन्मयम् ॥ ३८ ॥
विभावेनाहृतं कार्यमनुभावे निरूपणात् ।
तथैव चानुभावानां भावस्यानुगमेन च ॥ ३९ ॥
विभावेनाहृतं कार्यमनुभावेन नीयते ।
आत्माभिनयनं **भावो विभावः** परदर्शनम् ॥ ४० ॥
गुरुर्मित्रं सखा स्निग्धः संबन्धी बन्धुरेव च ।
आवेद्यते तु यः प्राप्तः स **विभाव** इति स्मृतः ॥ ४१ ॥
यत्तस्य संभ्रमोत्थानैरर्घपाद्यासनादिभिः ।
पूजनं क्रियते भक्त्या **सोऽनुभाव** इति स्मृतः ॥ ४२ ॥
एवमन्येष्वपि तथा नानाकार्यार्थदर्शनात् ।
विभावो वापि भावो वा विज्ञेयोऽर्थवशाद्बुधैः ॥ ४३ ॥
यश्चापि प्रतिसंदेशो दूतस्येह प्रदीयते ।
अनुभावैस्तु विज्ञेयः प्रतिसंदेशदर्शनात् ॥ ४४ ॥
एवं विभावो भावो वाप्यनुभावोऽथवा पुनः ।
अभिनेयस्तु पुरुषैः प्रमदाभिस्तथैव च ॥ ४५ ॥
स्वभावाभिनये स्थानं पुंसां कार्यं तु वैष्णवम् ।
आयतं वावहित्थं वा स्त्रीणां कार्यं स्वभावतः ॥ ४६ ॥
प्रयोजनवशाच्चैव स्थानान्यन्यानि योजयेत् ।
नानाभावाभिनयनैः प्रयोगैश्च पृथग्विधैः ॥ ४७ ॥
धैर्यलीलाङ्गहारं स्यात्पुरुषाणां तु चेष्टितम् ।
मृदुलीलाङ्गहारं तु कार्यं स्त्रीणां तु चेष्टितम् ॥ ४८ ॥
हस्तपादाङ्गसंचारः स्त्रीणां सललितो भवेत् ।
सधीरस्तु ततोऽपि स्याद्व्यापारः पुरुषाश्रयः ॥ ४९ ॥

यथारसं यथाभावं स्त्रीणां सललितो[1] भवेत् ।
नराणां प्रमदानां च भावाभिनयनं पृथक् ॥ ९० ॥
भावानुभावसंयुक्तं व्याख्यास्याम्यनुपूर्वशः ।
आलिङ्गनेन गात्राणां सस्मितेन च चक्षुषा ॥ ९१ ॥
तथोल्लुकुशनाश्चापि हर्षं संदर्शयेन्नरः ।
क्षिप्रं संजातरोमाञ्चा बाष्पेणावृतलोचना ॥ ९२ ॥
कुर्वीत नर्तकी हर्षं प्रीत्या वाक्यैश्च सस्मितैः ।
उद्धृते(?) रक्तनेत्रश्च संदष्टाधर एव च ॥ ९३ ॥
निश्वसेत्कल्पिताङ्गश्च क्रोधं त्वभिनयेन्नरः ।
नेत्राभ्यां बाष्पपूर्णाभ्यां चिबुकोष्ठप्रकम्पनम् ॥ ९४ ॥
शिरः कम्पाद्भ्रुकुट्या च नेत्रसस्या(?)ञ्जनेन च ।
मौनेनाङ्गुलिभङ्गेन माल्याभरणवर्जनात् ॥ ९५ ॥
आयतस्थानकच्छाया ईर्ष्याकोपो भवेत्स्त्रियाः ।
निश्वासोच्छ्वासबहुलैरधोमुखविचिन्तनैः ॥ ९६ ॥
आकार्यवाञ्छनाच्चापि दुःखं पुंसां तु योजयेत् ।
रुदितैः श्वसनैश्चैव शिरोभिहननेन च ॥ ९७ ॥
भूमिहस्ताभितस्वेदु(?) दैवं स्त्रीषु प्रयोजयेत् ।
आनन्दं चार्तिर(?)भवमीर्ष्यासंभवमेव च ॥ ९८ ॥
हा मूर्खमुक्तं रुदितं तत्स्त्रीनीचेषु योजयेत् ।
भ्रंशमावेगचेष्टाभिः शस्त्रसंपतनेन च ॥ ९९ ॥
पुरुषाणां भयं कार्यं धैर्याय शबलादिभिः ।
तत्र प्रचलनस्तब्धगात्रस्फुरणकम्पनैः ॥ ६० ॥
संत्रस्तहृदयत्वाच्च पार्श्वाभ्यां तु विलोकनैः ।
शत्रु(श्रो)रन्वेषणाच्चापि तथोच्चैःक्रोशनादपि ॥ ६१ ॥
पुरुषालिङ्गनाच्चापि भयकार्यं भवेत्स्त्रियाः ।
मया ये वि(ऽभि)हिताः पूर्वं तान्स्त्रीनीचेषु योजयेत् ॥ ६२ ॥

१. 'सलिलतो' क-ख.

मृदुभिः स्खलितैर्नित्यमाकारस्यावलम्बनात् ।
नेत्रावघूर्णनैश्चैव विलग्नैः कथितैस्तथा ॥ ६३ ॥
गात्राणां कम्पनाच्चैव मदः कार्यो भवेत्स्त्रियाः ।
अनेन विधिना कार्या[ः] प्रयोगे कारणोत्थिताः ॥ ६४ ॥
पौरुषाः स्त्रीकृता वापि ना(भा)वास्त्वभिनयं प्रति ।
सर्वे तु ललना भावाः स्त्रीणां कार्याः प्रयोक्तृभिः ॥ ६५ ॥
वीर्यमाधुर्यसंपन्ना भावाः कार्यास्तु पौरुषाः ।
त्रिपताकाङ्गुलिभ्यां च मिलिताभ्यां प्रयोजयेत् ॥ ६६ ॥
शुकसारिकानुष्ठाना(?)न्सूक्ष्मानन्यांश्च पक्षिणः ।
शिखिनः सारसा हंसाः स्थूला येऽन्ये च पक्षिणः ॥ ६७ ॥
पक्षाङ्गोदारगतिभिरभिनेयाः प्रयोक्तृभिः ।
खरोष्ट्रगोश्वाश्वतरान्सिंहव्याघ्रगजादिकान् [1] ॥ ६८ ॥
महापशूनङ्गहारैर्गतिभिश्च प्रदर्शयेत् ।
भूताः पिशाचा यक्षाश्च दानवा राक्षसास्तथा ॥ ६९ ॥
अङ्गहारैर्विनिर्देश्याः कर्मसंकीर्तनादपि ।
अङ्गहारैर्विनिर्देश्या अप्रत्यक्षा भवन्ति ये ॥ ७० ॥
प्रत्यक्षा अभिनेतव्या भयोद्वेगैः सविस्मये ।
........................................................ ॥ ७१ ॥
देवाः प्रणामकरणैर्भावैश्च विचेष्टितैश्च ललितैश्च ।
अर्थवशादभिनेया अप्रत्यक्षाः प्रयोगेषु ॥ ७२ ॥
भयोत्थितेन भेदेन ह्यगलेन(?) शिरः स्पृशेत् ।
नरेऽभिवादनं ह्येतदप्रत्यक्षे विधीयते ॥ ७३ ॥
खटिका वर्धमानेन न खटाख्येन वा पुनः ।
देवताभिर्गुरूंश्चैव प्रमदाभिश्च वादयेत् ॥ ७४ ॥
दिवौकसश्च पूज्याश्चाप्रत्यक्षाश्च भवन्ति ये ।
प्रणामैश्च प्रभावैश्च गम्भीरार्थे प्रयोजयेत् ॥ ७५ ॥

---

१. 'गोश्वाश्वनूगान्' क-ख.

महाजनं सखिजनं विटधूर्तजनं तथा।
परिमण्डलसंज्ञेन हस्तेनाभिनयेद्बुधः॥ ७६॥
पर्वतान्प्रांशुयोगेन वृक्षांश्चैव समुत्थितान्।
प्रसारिताभ्यां बाहुभ्यामुत्क्षिप्ताभ्यां प्रदर्शयेत्॥ ७७॥
समूहं सागराम्नानां बहुविस्तीर्णमेव च।
पताकाभ्यां तु हस्ताभ्यां विक्षिप्ताभ्यां प्रदर्शयेत्॥ ७८॥
धैर्यं शौर्यं च दर्पं च गर्वमौदार्यमुद्व्ययम्(?)।
ललाटदेशसंस्थेन ह्यरालेन विनिर्दिशेत्॥ ७९॥
वक्षोदेशादपावृत्तौ करौ तु मृगशीर्षकौ।
विस्तीर्णाय द्रुतक्षिप्तौ योज्यौ य[त्] स्यादपावृतम्॥ ८०॥
अधोमुखोत्तानतलौ हस्तौ किंचित्प्रदर्शयेत्।
........................................॥ ८१॥
........................................।
कृत्वा प्रदर्शयेत्तद्वद्गृहध्वान्तं बिलं गुहाम्॥ ८२॥
कामशापगृहग्रस्ता ज्वरोपहतमानसाः।
एवंविधा नरा ये च तेषां कार्यं विचेष्टितैः॥ ८३॥
दोलाभिनयनं कुर्याद्दोलानां त्ववदोलनैः।
संक्षोभणेन गात्राणां रज्जुप्रग्रहणेन च॥ ८४॥
यदा चाङ्गवती दोला भवेत्प्रत्यक्षसंश्रयाः।
आसनैरुपविष्टानां कार्यं तत्वापि(?) दोलनम्॥ ८५॥
नयेदङ्गवती दोला प्रत्यक्षाभिनये भवेत्।
आकाशवचनानीह वक्ष्याम्यात्मगतं तथा॥ ८६॥
अपवारितकं चैव जनान्तिकमथापि वा।
दूरस्थान्वेषणं यत्स्यादशरीरनिवेशनम्॥ ८७॥
परोक्षान्तरितं यच्चाप्याकाशवचनं तु तत्।
तत्रोत्तरकृतैर्वाक्यैः संलापं तत्र योजयेत्॥ ८८॥

नानाकारणसंयुक्तै रसभावसमुत्थितैः ।
अतिहर्षमदोन्मादा रागद्वेषभयार्दितः ॥ ८९ ॥
विस्मयः क्रोधदुःखार्तादेशादेकोऽपि भाषत(?) ।
हृदयस्थं स वै यत्तु तदात्य(त्म)गतमिष्यते ॥ ९० ॥
निगूढभावसंयुक्तमपवारितकेव च ।
............................................ ॥ ९१ ॥
कार्यवशादश्रवणं पार्श्वगतैर्जनान्तिकं च स्यात् ।
हृदयगतं सविकल्पं भाववशादात्मगतमेव ॥ ९२ ॥
यानि गुह्यार्थयुक्तानि वचनानीह नाटके ।
जनान्तिकानि कर्णे तु संनियोज्यानि योक्तृभिः ॥ ९३ ॥
सकृदुक्तं तु यत्कार्यं भूयः कस्मात्तु कारणात् ।
तत्कर्णे श्रावयेद्येन न याति पुनरुक्तताम् ॥ ९४ ॥
अव्यभिचारेण यावदाकाशजनं नि(नाति)कात्मगतपाठात् ।
प्रत्यक्षपरोक्षगतानामात्मसमुत्थानपरोत्थांश्च ॥ ९५ ॥
हस्तमन्तरतः कृत्वा त्रिपताकं प्रयोजयेत् ।
जनान्तिकं प्रयोक्तव्यमपवारितकं तथा ॥ ९६ ॥
स्वप्नायितवाक्यार्थसाभिनयौ च खलु हस्तसंचारैः ।
सुप्ताभिहतैरेव तु वाक्यार्थैः सोऽभिनेयः स्यात् ॥ ९७ ॥
मन्दस्वरसंचारव्यक्ताव्यक्तं द्विरुक्तवचनार्थम् ।
पूर्वानुस्मरणकृतं कार्यं स्वप्नान्ति(यि)ते पापम्(?) ॥ ९८ ॥
प्रशिथिलगुरुकरणाक्षरघण्टानिश्वनि(?)वाक्यगद्गदैको हि ।
कासश्वासोपेतां काकुं कुर्यान्मरणकाले ॥ ९९ ॥
हिक्काश्वासोपेतो मूर्छोपगमे तु मरणवत्कथयेत् ।
अतिमतेष्वपि कार्यं पाठ्यं पुनरुक्तसंप्रयुक्तम् ॥ १०० ॥
वृद्धानां योजयेत्पाथ्यं[1] (?) गद्गदं सेलिलाक्षरम्[2] ।
अस्पष्टवर्णसंयुक्तं बालानां तु कलस्वनम् ॥ १०१ ॥

१. 'पाठ्यम्' इति स्यात्. २. लालासहिताक्षरमित्यर्थः स्यात्.

नानाभावोपगतो मरणाभिनयो बहुप्रकारस्तु ।
विक्षिप्तहस्तपादैः संत्रै(?)स्तथा कार्यः ॥ १०२ ॥
व्याधिप्लुते तु मरणं विषण्णगात्रेण संप्रयोक्तव्यम् ।
हिक्काश्वासोपेतं····यत्पराधीनगात्रं वा ॥ १०३ ॥
विषवेगेऽपि च मरणं कार्यं विक्षिप्तगात्रकरणं च ।
विषवेगे संप्रयुक्तं विस्फुरिताङ्गक्रियोपेतम् ॥ १०४ ॥
प्रथमे योगे कार्यं त्वभिनेयं वेपथुं द्वितीये तु ।
दाहस्तदा तृतीये विलह्लिका स्याच्चतुर्थे तु ॥ १०५ ॥
फेनस्तु पञ्चमस्थे तु नीचा षष्ठे तु भज्यते ।
जडता सप्तमे तु स्यान्मरणं त्वष्टमे भवेत् ॥ १०६ ॥
प्रवृद्धतालके नेत्रे कपोलोऽधर एव च ।
अंशोदरभुजानां च कृशता कार्यरूपिणे ॥ १०७ ॥
हस्तयोः पादयोर्मूर्ध्नो युगपत्पृथगेव वा ।
कम्पनेन यथायोगे वेपथुं संप्रयोजयेत् ॥ १०८ ॥
सर्वाङ्गवेपनं वेपथुस्तु(?) कण्डूयनं तथाङ्गानाम् ।
विक्षिप्तहस्तगात्रं दाहं नाट्ये प्रयुञ्जीत ॥ १०९ ॥
उद्वृत्तनिमेषत्वादुद्गारच्छर्दनैस्तथाक्षेपैः ।
अव्यक्ताक्षरकथनैर्विलह्लिकामभिनयेदेवम् ॥ ११० ॥
वमनोद्गारनिपातैः शिरसश्च विलोडनैरनेकविधैः ।
फेनस्य(?)भिनेतव्यो निसंज्ञितया निमेषश्च ॥ १११ ॥
अंशकपोलस्पर्शाच्छिरसश्च विनामनाच्छिरोभङ्गात् ।
सर्वेन्द्रियमूढतया जडतामेवं प्रयुञ्जीत ॥ ११२ ॥
संमीलितनेत्रत्वाद्व्याधिविवृद्ध्या भुजङ्गदशनाद्वा ।
एवं हि नाट्ययोगे मरणानि बुधैः प्रयोज्यानि ॥ ११३ ॥
संभ्रमेष्वथ रोषेषु शोकवेगकृतेषु च ।
यानि काव्यानि युञ्जीत पुनरुक्तं न तेष्विह ॥ ११४ ॥

साध्वतो मुञ्च हा हेति किं किं मा मा वदेति च ।
एतानि वचनानीह द्वित्रिसंख्यानि कारयेत् ॥ ११५ ॥
प्रत्यं(ति)गृहीतं यत्काव्यं विकृतं च प्रयुज्यते ।
न लक्षणकृतस्तस्य कार्यस्त्वभिनयो बुधैः ॥ ११६ ॥
भावा ये उत्तमानां तु न तान्मध्येषु योजयेत् ।
ये भावाश्चैव मध्यानां न तान्नीचेषु योजयेत् ॥ ११७ ॥
पृथक्पृथग्भावचेष्टैरात्मचेष्टासमुत्थितैः ।
ज्येष्ठमध्यमनीचेषु भवेन्नाट्ये तु रागकृत् ॥ ११८ ॥
अभिनयपरिशेषाः कर्तव्याः सर्वभावसंयुक्ताः ।
अन्येऽपि लोकतो ये ते सर्वे लोकतः साध्याः ॥ ११९ ॥
नानाविधैर्यथा पुष्पैर्माल्यं ग्रथ्नाति माल्यकृत् ।
अङ्गोपाङ्गै रसैर्भावैस्तथा नाट्यं प्रयोजयेत् ॥ १२० ॥
या यस्य लीला नियता गतिश्च रङ्गप्रवृत्तस्य विधानयुक्ताः ।
तामेव कुर्यादविमुक्तसत्त्वो यावन्न रङ्गात्प्रतिनिःसृतः स्यात् ॥ १२१ ॥
एवमेते मया प्रोक्ता भावा ह्यभिनयं प्रति ।
नोक्ता येऽपि तु तेऽप्यत्र लोकाद्ग्राह्यास्तु पण्डितैः ॥ १२२ ॥
लोको वेदस्तथाध्यात्मं प्रमाणं त्रिविधं स्मृतम् ।
लोकाध्यात्मपदार्थेषु प्रायो नाट्यं व्यवस्थितम् ॥ १२३ ॥
तदाध्यात्माभिसंभूतं छन्दःशब्दसमन्वितम् ।
लोकसिद्धं भवेत्सिद्धं नाट्यं लोकात्मकं त्विदम् ॥ १२४ ॥
देवतानामृषीणां च राज्ञां लोकस्य चैव हि ।
पूर्ववृत्तानुचरितं नाम(१)मित्यभिधीयते ॥ १२५ ॥
लोकस्य चरितं यत्तु नानावस्थान्तरात्मकम् ।
तदङ्गाभिनयोपेतं नाट्यमित्यभिधीयते ॥ १२६ ॥
एवं लोकस्य या वार्ता नानावस्थान्तरात्मिका ।
सा नाट्ये संविधातव्या नाट्यहेतोः प्रयोक्तृभिः ॥ १२७ ॥

---

१. 'नाट्यम्' इति भवेत्.

यानि शास्त्राणि ये धर्मा यानि शिल्पानि याः क्रियाः ।
लोकधर्मप्रवृत्तानि नाट्यमित्यभिसंज्ञितम् ॥ १२८ ॥
न च शक्यं हि लोकस्य स्थावरस्य चरस्य च ।
शास्त्रेण नियमं कर्तुं नानाचेष्टाविधिं प्रति ॥ १२९ ॥
नानाशीलाः प्रकृतयः शीले नाट्यं प्रतिष्ठितम् ।
तस्माल्लोकप्रमाणं हि ज्ञेयं नाट्यं प्रयोक्तृभिः ॥ १३० ॥
नाट्यप्रकाराः कथिता मयैते विज्ञाय सम्यङ्मनुजैः प्रयोज्याः ।
नाट्यस्य तत्त्वानुगतः प्रयोगः संमानमग्र्यं लभते हिरण्यम् ॥ १३१ ॥

इति भारतीये नाट्यशास्त्रे चित्राभिनयाध्यायः[1] पञ्चविंशः ।

---

षड्विंशोऽध्यायः ।

अनुरूपा बृहद्रूपा[2] अविरूपानुरूपिणी ।
त्रिप्रकारा भवेन्नाट्ये प्रकृतिस्तु विभूषिता ॥ १ ॥
स्त्रियास्तु स्त्रीकृतो भावः पौरुषः पुरुषस्य च ।
यथा वयस्तथा तस्मिन्ननुरूपा तु सा भवेत् ॥ २ ॥
यो बालः स्थाविरीं भूमिं वृद्धो वा बालभूमिकाम् ।
तद्भावैः कुरुते नाट्ये विरूपेति हि सा स्मृता ॥ ३ ॥
पुरुषः स्त्रीगतं भावं यत्र प्रकुरुते पुनः ।
रूपानुरूपा[3] सा ज्ञेया प्रयोगे प्रकृतिस्तथा ॥ ४ ॥
छन्दतः पौरुषीं कुर्याद्भूमिकां स्त्रीप्रयोगतः ।
न परस्परचेष्टाभिः कुर्यातां वृद्धबालिशौ ॥ ५ ॥
भूयिष्ठं सुकुमारं तु वृत्तं स्त्रीभिरधिष्ठितम् ।
इत्यर्थे(?) प्रकृतीनां तु दिव्यमानुषयोस्तथा ॥ ६ ॥
रम्भोर्वशीप्रभृतिभिः स्वर्गे नाट्यं प्रवर्तते[4] ।
तथैव मानुषे लोके पार्थिवानां गृहेषु च ॥ ७ ॥

---

१. 'चित्राभिनयः षड्विंशतितमोऽध्यायः' क-ख. २. 'विरूपा च तथा रूपानुरूपिणी' इति पाठो भवेदुत्तरलक्षणग्रन्थानुसारात्. ३. 'रूपानुरूपिणी' इति भवेत्. ४. 'प्रवर्तिते' क-ख.

उपदेष्टव्यमाचार्यैः शास्त्रबुद्ध्यङ्गनास्वपि ।
.............................................. ॥ ८ ॥
संगीतमरिक्केशो नित्यं प्रमदाजनस्य गुण एव ।
यन्मधुरकर्कशत्वं भजते नाट्यं प्रयोगेण ॥ ९ ॥
न[1] स्वयं भूमिकान्यासं बुधः स्त्रीणां प्रयोजयेत् ।
तुल्यावस्थक्रियोपेतो भूमिका प्रकृतिस्तथा ॥ १० ॥
भृशमुद्द्योतयेन्नाट्यं स्वभावकरणाश्रया ।
स्त्रीषु योज्यः प्रयत्नेन प्रयोगः पुरुषाश्रयः ॥ ११ ॥
यस्मात्स्वभावोपगतो विलासः स्त्रीषु दृश्यते ।
तस्मात्स्वभावमधुरस(म)ङ्गं सुलभसौष्ठवम् ॥ १२ ॥
ललितं पौरुषं यच्च सोऽलंकारः परो भवेत् ।
बहुवाह्वो(?) बहुमुखास्तथा च विकृताननाः ॥ १३ ॥
पशुश्वापदवक्त्राश्च खरोष्ट्राश्वाननास्तथा ।
एते चान्ये च बहवो नानारूपा भवन्ति ये ॥ १४ ॥
आहार्ययुक्ताः कार्यास्तैर्मृत्काष्ठजतुमर्मभिः ।
स्वाभाविकेन रूपेण प्रविशेद्रङ्गमण्डले ॥ १५ ॥
आत्मरूपं समाच्छास(द्य) वर्णकैर्भूषणैरपि ।
यादृशं यस्य यद्रूपं प्रकृत्या तस्य तादृशम् ॥ १६ ॥
वयोवेषानुरूपेण प्रयोज्यं नाट्यकर्मणि ।
यथाजीवस्वभावस्य परित्यज्यान्यदैहिकम् ॥ १७ ॥
परभावं प्रकुरुते परदेहं समाश्रितः ।
एवं बुधः परं भावं सोऽस्मीति मनसा स्मरन् ॥ १८ ॥
वेषवागङ्गलीलाभिश्चेष्टाभिश्च समाचरेत् ।
.............................................. ॥ १९ ॥
प्रयोगो द्विविधश्चैव विज्ञेयो नाट्यमाश्रितः ।
सुकुमारस्तथाविद्धो नानाभावरसाश्रयः ॥ २० ॥

१. 'ना' ख.

नाटकं सप्रकरणं भाणो वीथ्यङ्क एव च ।
ज्ञेयानि सुकुमाराणि मानुषैराश्रितानि तु ॥ २१ ॥
सुकुमाराः प्रयोगा ये राज्ञामामोदकारकाः ।
शृङ्गाररसमासाद्य स्त्रीणां भाणं प्रयोजयेत् ॥ २२ ॥
युद्धोद्धता वेगकृताः सरम्भबहुलाश्च ये ।
न ते स्त्रीभिः प्रयोक्तव्याः प्रयोज्याः पुरुषैस्तु ते ॥ २३ ॥
अनुद्भव(ट)मसंभ्रान्तमनाविद्धाङ्गचेष्टितम् ।
लयतालकलोपेतं प्रमाणनियताक्षरम् ॥ २४ ॥
सुविभक्तपदालापमनिष्टरसकाहलम् ।
यदीदृशं भवेन्नाट्यं नारीणां तु प्रयोजयेत् ॥ २५ ॥
एवं कार्यं प्रयोगज्ञैर्भूमिकानां विकल्पनम् ।
अतः परं प्रवक्ष्यामि सिद्धीनामपि लक्षणम् ॥ २६ ॥

इति भारतीये नाट्यशास्त्रे प्रकृतिविकल्पनाध्यायः षड्विंशः ।

---

## सप्तविंशोऽध्यायः ।

सिद्धीनां तु प्रवक्ष्यामि लक्षणं नाटकाश्रयम् ।
यस्मात्प्रयोगः सर्वोऽयं सिद्ध्यर्थः संप्रदर्शितः ॥ १ ॥
सिद्धिस्तु द्विविधा ज्ञेया मानुषी दैविकी तथा ।
वाङ्मनःकायसंभूता नानाभावरसाश्रया ॥ २ ॥
दशाङ्गा मानुषी सिद्धिर्दैवी तु द्विविधा स्मृता ।
नानासत्त्वाश्रयकृता शारीरी वाङ्मयी तथा ॥ ३ ॥
स्मितार्धहासा विज्ञेया सावहो कष्टमेव च ।
प्रवृद्धनादा वकुष्टा सिद्धिर्ज्ञेया च वाङ्मयी ॥ ४ ॥
पुलकैश्च सरोमाञ्चैरभ्युत्थानैस्तथैव च ।
चैलादाङ्गुलिविक्षेपैः शारीरी सिद्धिरिष्यते ॥ ५ ॥
किंचिच्छ्लिष्टो रसो हास्यो नृत्यद्भिर्यैः प्रयुज्यते ।
स्मितेन संप्रतिग्राह्यं प्रेक्षकैर्नित्यमेव च ॥ ६ ॥

किंचिदस्पष्टहास्यं यत्तथा वचन एव च ।
अर्धहास्येन तद्ग्राह्यं प्रेक्षकैर्नित्यमेव हि ॥ ७ ॥
विदूषकोच्छेककृतं भवेच्छिल्पकृतं च यत् ।
अतिहास्येन तद्ग्राह्यं प्रेक्षकैर्नित्यमेव हि ॥ ८ ॥
यद्वर्गपदसंयुक्तं तथातिशयसंभवम् ।
तत्र साध्विति सद्वाक्यं प्रयोक्तव्यं हि साधकैः ॥ ९ ॥
अहंकारस्तदा कार्यो नृणां प्रकृतिसंभवः ।
विस्मयादिषु भावेषु प्रहर्षार्थे तथैव च ॥ १० ॥
करुणेषु प्रयोक्तव्यं कष्टं शास्त्रकृतेन तु ।
प्रवृद्धनादः कर्तव्यो विस्मयोत्थो हि सर्वदा ॥ ११ ॥
साधिक्षेपेषु वाक्येषु प्रस्पन्दिततनूरुहैः ।
कुतूहलोत्तरावेधैर्बहुमानेन साध्यते ॥ १२ ॥
दीप्तप्रदेशं यत्कार्यं छेद्यभेद्याहवात्मकम् ।
सविद्रवमथोत्फुल्लं तथा युद्धनियुद्धकम् ॥ १३ ॥
प्रकम्पितात्समरसं साश्रमोत्थानमेव च ।
तत्प्रेक्षकैस्तु कुशलैः साध्यमेवं विधानतः ॥ १४ ॥
एवं साधयितव्ये या तज्ज्ञैः सिद्धिस्तु मानुषी ।
दैवीमपि तथा सिद्धिं संप्रवक्ष्यामि तत्त्वतः ॥ १५ ॥
या भावातिशयोपेता सत्ययुक्ता तथैव च ।
सा प्रेक्षकैस्तु मन्तव्या दैवी सिद्धिः प्रयोगतः ॥ १६ ॥
न शब्दो नैव च क्षोभो न चोत्पातनिदर्शनम् ।
संपूर्णता च रङ्गस्य सा सिद्धिर्दैविकी स्मृता ॥ १७ ॥
दैविकी मानुषी चैव सिद्धिरेषा मयोदिता ।
अत ऊर्ध्वं प्रवक्ष्यामि घातान्वै दिव्यमानुषान् ॥ १८ ॥
दैवपरात्मसमुत्थास्त्रिविधा घाताः समासतो ज्ञेयाः ।
औत्पातिकश्चतुर्थः कादाचित्कः स विज्ञेयः ॥ १९ ॥

---

१. 'विस्मयार्थे' क.

वाताग्निवर्षकुञ्जरभुजङ्गसंक्षोभमण्डपनिपाताः ।
कीटव्यालपिपीलिकपशुवेशनजास्तथैव···· ॥ २० ॥
मात्सर्याद्द्वेषाद्वा तत्पक्ष्यत्वात्तथार्थभेदाद्वा ।
एते परप्रयुक्ता ज्ञेया घाता बुधैर्नित्यम् ॥ २१ ॥
अररितवामतविस्फुरितानाथोकुष्टतालिकापाता(?) ।
गोमयलोष्टतृणोपलविक्षेपाश्चारिसंभूताः ॥ २२ ॥
औत्पातिकाश्च घाताः पशुवेषोन्मत्तलिङ्गकृताः ।
पुनरात्मसमुत्थाः स्युर्घाता लक्ष्या बुधैश्चापि ॥ २३ ॥
वैलक्षण्यमचेष्टाविभूमिकत्वं स्मृतिप्रसूतिश्च ।
अन्यवचनं च काव्यं तथार्तनादौ विहस्तत्वम् ॥ २४ ॥
अतिहसितरुदितविश्वर(?)पिपीलिकाविटकीटगवाश्च ।
उभयचरणनिपातः पुष्करवातातदोषाश्च (?) ॥ २५ ॥
अतिरटितहसितानि सिद्धेर्भावस्य दूषणानि स्युः ।
कीटपिपीलिकपाताः सिद्धिं सर्वात्मना घ्नन्ति ॥ २६ ॥
विस्वररज्यतताल(?)वर्णस्वरसंपदादप(?)विहीनम् ।
अज्ञातस्थानलयं स्वरगतमेवंविधन्यायात् ॥ २७ ॥
मुकुटाभरणनिपातः प्रबद्धनादस्य नाशनो भवति ।
पशुवेशनं तथा स्याद्बहुवचनघ्नं प्रयोगेषु ॥ २८ ॥
विषमं मार्गविहीनं विमार्जनं बहुलप्रहारं च ।
अविभक्तग्रहमोक्षं पुष्करगतमारशं(?) हन्ति ॥ २९ ॥
पुनरुक्तं ह्यसमासो विभक्तिभेदो विसंधयो पार्थः(?) ।
त्रिलिङ्गजाश्च दोषाः प्रत्यक्षपरोक्षसंमोहाः ॥ ३० ॥
छन्दोवृत्तत्यागा गुरुलाघवसंकरोत्पातभेदाः ।
एतानि यथास्थूलं घातस्थानानि काव्यस्य ॥ ३१ ॥
ज्ञेयौ तु काव्यजातौ द्वौ घातौ यः प्रतिकृतो नित्यम् ।
प्रकृतिव्यसनसमुत्थः शेषोदकनालिकत्वं च ॥ ३२ ॥

---

१. 'विश्वर' ख.

अतिभानः स्खलनं····विस्वरमुच्चारणं च काव्यस्य ।
अस्थानभूषणत्वं पतनं मुकुटस्य च भ्रंशः ॥ ३३ ॥
व्याप्तिस्पन्दनकुञ्जरखरोष्ट्रशिबिकाविमानगानानाम् ।
आरोहणावतरणैरनभिज्ञत्वं विहस्तत्वम् ॥ ३४ ॥
प्रहरणमनेकवचनानम्यग्रहणं(?)विचारणं वापि ।
अस्फुटभूषणयोगश्चिरप्रवेश····वाचाङ्के ॥ ३५ ॥
एभिः स्थानविशेषैश्च(?)तिलक्ष्यास्तु········स्वरिभिः कुशलैः ।
रूपाग्निवचनदर्भा········भाण्डपरिग्रहान्मुक्ताः ॥ ३६ ॥
सिद्ध्या मिश्रो घातः सर्वगतश्चैकदेशजो वापि ।
सिद्धिकुशलैः स लेख्यः सिद्धिर्वास्या विधानो वा ॥ ३७ ॥
नालेख्या बहुदिनतः सर्वगतो यस्तु लक्षणविशेषः ।
································································ ॥ ३८ ॥
जर्जरमोक्षस्यान्ते सिद्धेर्मोक्षस्तु नालिकायास्तु ।
कर्तव्यस्त्विह सततं नाट्यज्ञैः प्राश्निकैर्विधिना ॥ ३९ ॥
योऽन्यस्य[1] महेशमूढो नान्दीश्लोकं पठेद्धि देवस्य ।
सुवसन(?)पूर्वरङ्गे सिद्धेर्घातः प्रयोक्तव्यः ॥ ४० ॥
यो देशवेषभाषारहितं काव्यं प्रयोजयेद्दुष्टम् ।
तस्याप्यभिलेख्यः स्याद्घातस्तज्ज्ञैरदोषजः(?) ॥ ४१ ॥
कः शक्तो नाट्यविधौ यथावदुपपादने प्रयोगस्य ।
कर्तव्यं वाग्रसना यथावदुक्तं परिज्ञातुम् ॥ ४२ ॥
तस्माद्गम्भीरार्थाः शब्दा ये वेदलोकसंसिद्धाः ।
सर्वजनग्राह्यास्ते संयोज्या नाटकैर्विधिवत् ॥ ४३ ॥
न च किंचिद्गुणहीनं दोषैः पाठैरवर्जितं च न कदाचित्(?) ।
तस्मान्नाट्यप्रकृतौ दोषा नात्यर्थतो ग्राह्याः ॥ ४४ ॥
न च नारदस्तु कार्यो नटेन वागङ्गसत्त्वनेपथ्ये ।
रसभावगीतनृत्ये घातोद्यैर्लोकयुक्ते तु ॥ ४५ ॥

---

१. 'योऽन्यसेशान्मूढो' इति भवेत्.

एवमेतद्धि विज्ञेयं सिद्धीनां लक्षणं बुधैः ।
अत ऊर्ध्वं प्रवक्ष्यामि प्राश्निकानां तु लक्षणम् ॥ ४६ ॥
चारित्राभिनयोपेताः श्रान्तवृत्तश्रुतान्विताः ।
यशोधर्मरताश्चैव मध्यस्था वचसान्विताः ॥ ४७ ॥
षडङ्गनाट्यकुशला अलुब्धाः शुचयः समाः ।
चतुरातोद्यकुशला वृत्तज्ञास्तत्त्वदर्शिनः ॥ ४८ ॥
देशभाषाविधानज्ञाः कलाशिल्पप्रयोजकाः ।
चतुर्धाभिनयज्ञाश्च रसभावविकल्पने ॥ ४९ ॥
शब्दच्छन्दोविधानज्ञा नानाशास्त्रविचक्षणाः ।
एवंविधास्तु कर्तव्याः प्राश्निका दश रूपतः ॥ ५० ॥
अव्यग्रैरिन्द्रियैः शुद्ध ऊहापोहविशारदः ।
व्यक्तादोषोऽनुरागी च स नाट्ये प्रेक्षकः स्मृतः ॥ ५१ ॥
यस्तुष्टे तुष्टिमायाति शोके शोकमुपैति च ।
दैन्ये दीनत्वमभ्येति स नाट्ये प्रेक्षकः स्मृतः ॥ ५२ ॥
नवैवैते गुणाः सर्वे एकस्मिन्प्रेक्षके स्मृताः ।
विज्ञेयस्याप्रमेयत्वादल्पत्वादायुषस्तथा ॥ ५३ ॥
उत्तमाधममध्यानां संकीर्णायां च संसदि ।
अशक्यमधमैर्ज्ञातुमुत्तमानां तु चेष्टितम् ॥ ५४ ॥
यद्यस्य शिल्पं नेपथ्यं कर्म वाक्चेष्टितं तथा ।
तस्य तेनैव तत्साध्यं स्वकर्मविषयीकृतम् ॥ ५५ ॥
नानाशीलाः प्रकृतयः शीलान्नाट्यं विनिर्मितम् ।
उत्तमाधममध्यानां वृद्धबालस्य योषिताम् ॥ ५६ ॥
तुष्यन्ति तरुणाः कामे विदग्धाः समयान्विते ।
अर्थेष्वर्थपराश्चैव मोक्षे वाथ विरागिणः ॥ ५७ ॥
शूरा बीभत्सरौद्रेषु नियुद्धेष्वाहवेषु च ।
धर्माख्यानपुराणेषु वृद्धास्तुष्यन्ति सर्वदा ॥ ५८ ॥

एवं भावानुकरणे यो यस्मिन्प्रविशेन्नरः ।
स तत्र प्रेक्षको ज्ञेयो गुणैरेतैरलंकृतः ॥ ५९ ॥
एवं हि प्रेक्षका ज्ञेयाः प्रयोगे दशरूपतः ।
संहर्षे च समुत्पन्ने प्राश्निकान्संनिबोधत ॥ ६० ॥
यज्ञविन्नर्तकश्चैव छन्दोविच्छेदवित्तथा ।
अस्त्रविद्भावैश्च................. ॥ ६१ ॥
(?)लेखगणकसभ्यैर्लेख्याः सह सिद्धिभिर्याता ।
नात्यासन्ने दूरेऽनलसस्थि(मि)तैः प्रेक्षकैश्च भवितव्यम् ॥ ६२ ॥
तेषामासनयोगा द्वादशहस्तस्थितौ ज्ञेयाः ।
यान्युक्तानि हि पूर्वं सिद्धिस्था[ना]नि तानि लक्ष्याणि ॥ ६३ ॥
घाताश्च लक्षणीया यथोत्थिता नाट्यवेदेषु ।
दैवोत्पातसमुत्थास्तथा परोत्था बुधैर्नवैर्लेख्याः ॥ ६४ ॥
घाता नाट्यसमुत्था आत्मसमुत्थाश्च लेख्याः स्युः ।
घाता यस्य त्वल्पाः संख्याताः सिद्धयश्च बहुलाः स्युः ॥ ६५ ॥
विदितं कृत्वा राज्ञस्तस्मै देया पताका हि ।
सिद्ध्यतिशयात्पताका समसिद्धौ पार्थिवाज्ञया देयाः ॥ ६६ ॥
(?)अथ नरपतिः समः स्यादुभयोरपि सा तदा ज्ञेया ।
............................................ ॥ ६७ ॥

एवं विधिज्ञैर्द्रष्टव्यो व्यवहारः समञ्जसम् ।
स्वस्थचित्तैः सुखासीनैः सुविशिष्टैर्गुणादिभिः ॥ ६८ ॥
विमृश्य प्रेक्षकैर्ग्राह्यं सर्वरागपराङ्मुखैः ।
साधनं दूषणाभासः प्रयोगसमयाश्रितैः ॥ ६९ ॥
समत्वमङ्गमाधुर्यं पाठ्यं प्रकृतयो रसाः ।
गानं वाद्यं सनेपथ्यमेतज्ज्ञेयं प्रयत्नतः ॥ ७० ॥
गीतवादित्रतालेन कलान्तरकलासु ।
यदङ्गं क्रियते नाट्ये समन्तात्सममुच्यते ॥ ७१ ॥
अङ्गोपाङ्गसमायोगं गीततालल्यान्वितम् ।
भाण्डवाद्यं समं चैव यस्मिंस्तत्सममुच्यते ॥ ७२ ॥

सनिर्भुग्नमुरः कृत्वा चतुरस्रकृतौ करौ ।
ग्रीवाञ्चिता तथा कार्या त्वङ्गमाधुर्यमुच्यते ॥ ७३ ॥
पूर्वोक्तानीह शेषाणि यानि प्रेक्ष्याणि साधकैः ।
वाद्यं प्रकृतयो ज्ञानं वक्ष्यमाणानि निर्दिशेत् ॥ ७४ ॥
यानि स्थानानि सिद्धीनां तैः सिद्धिं तु प्रकाशयेत् ।
हर्षादङ्गसमुद्भूतां नानारससमुत्थिताम् ॥ ७५ ॥
वारकालाश्च विज्ञेया नाट्यज्ञैर्विविधाश्रयाः ।
दिवसश्चैव रात्रिश्च तयोर्वारं निबोधत ॥ ७६ ॥
पूर्वाह्णेष्वथ मध्याह्ने ह्यपराह्णे तथैव च ।
दिवासमुत्था विज्ञेया नाट्यवाराः प्रयोगतः ॥ ७७ ॥
प्रदोषिकार्धरात्रं च तथा प्राभातिकोऽपरः ।
नाट्यवारा भवन्त्येते रात्रिजा ह्यनुपूर्वशः ॥ ७८ ॥
एतेषां यत्र यद्योज्यं नाट्यकार्यं रसाश्रयम् ।
तदहं संप्रवक्ष्यामि वारकालसमाश्रयम् ॥ ७९ ॥
यच्छ्रोत्ररमणीयं स्याद्धर्मोत्थानकृतं च यत् ।
पूर्वाह्णे तत्प्रयोक्तव्यं शुद्धं वा विकृतं च यत् ॥ ८० ॥
सत्त्वोत्थाने गुणैर्युक्तं वाक्यभूयिष्ठमेव च ।
पुष्कलं सत्त्वसंयुक्तमपराह्णे प्रयोजयेत् ॥ ८१ ॥
कैशिकीवृत्तिसंयुक्तं शृङ्गाररससंश्रयम् ।
नृत्तवादित्रगीताढ्यं प्रदोषे नाट्यमिष्यते ॥ ८२ ॥
यत्र माहात्म्यसंयुक्तं करुणप्रायमेव च ।
प्रभातकाले तत्कार्यं नाट्यं निद्राविनाशनम् ॥ ८३ ॥
न प्रयुञ्जीत मध्याह्ने नार्धरात्रे कथंचन ।
संध्याभोजनकाले च न नाट्यं संप्रयोजयेत् ॥ ८४ ॥
एवं कालं च देशं च [1]पर्णदं च समीक्ष्य तु ।
नाट्यं नित्यं प्रयुञ्जीत यथासत्त्वं यथारसम् ॥ ८५ ॥

---

१. 'वर्णनं च' इति भवेत्.

अथवा देशकालौ च न परीक्ष्यौ प्रयोक्तृभिः ।
यदैवाज्ञापयेद्भर्ता तदा योज्यमसंशयम् ॥ ८६ ॥
तथा समुदिताश्चैव विज्ञेया नाटकाश्रयाः ।
पात्रं प्रयोगमर्थश्च विज्ञेयास्तु त्रयो गुणाः ॥ ८७ ॥
बुद्धिः सत्त्वं सुरूपत्वं लयतालज्ञ(?)नान्यथा ।
रसभावज्ञता चैव वयःस्वत्त्वकुतूहलम् ॥ ८८ ॥
ग्रहणं धारणं चैव गात्रवैकल्यमेव च ।
जितसाध्वसतोत्साह इति पात्रगतो विधिः ॥ ८९ ॥
सुचये(चेय)ता सुगानत्वं सुपाठ्यत्वं तथैव च ।
शास्त्रकर्मसमायोगः **प्रयोगः** संप्रकीर्तितः ॥ ९० ॥
सुविभूषणता या तु सुमाल्याम्बरता तथा ।
विचित्रा रचना चैव **समृद्धि**रिति सा स्मृता ॥ ९१ ॥
यदा समुदयाः सर्वे एकीभूता भवन्ति हि ।
अलंकारः स तु तदा मन्तव्यो नाटकाश्रयः ॥ ९२ ॥
एतदुक्तं द्विजश्रेष्ठाः सिद्धीनां लक्षणं मया ।
अत ऊर्ध्वं प्रवक्ष्याम्यातोद्यानां च विकल्पनम् ॥ ९३ ॥
इति भारतीये नाट्यशास्त्रे सिद्धिव्यञ्जको नामाध्यायः सप्तविंशतितमः ।

---

अष्टाविंशतितमोऽध्यायः ।

अथातोद्यविधिमिदानीं वक्ष्यामः—

ततं चैवावनद्धं च घनं शुषिरमेव च ।
चतुर्वि[धं] ज्ञेयमस्यापकर्षे श्रुति(त)मेव च ॥ १ ॥

पञ्चमवशात्षड्जग्रामिकीं कुर्यात् । एवं श्रुतिरपकृष्टा भवति । पुनरपि तद्वदेवापकर्षयेत् । यथा—गान्धारनिषादवन्तावितरस्यामृषमधैवतौ प्रवेक्ष्यतो द्विश्रुत्यभ्यधिकत्वात् । तद्वत्पुनरपकृष्टायां तस्यां पञ्चममध्यमषड्जा इतरस्यां मध्यमगान्धारनिषादवन्तः प्रवेक्ष्यन्ति चतुःश्रुत्यभ्यधिकत्वात् । एवतेन श्रुतिनिदर्शनेन द्वैग्रामिक्यौ द्वाविति श्रुतयः प्रत्यवगन्तव्याः ।

तत्र श्लोकौ भवति(तः)—

षड्जश्चतुःश्रुतिर्ज्ञेय ऋषभस्त्रिश्रुतिस्तथा ।
द्विश्रुतिश्चैव गान्धारो मध्यमश्च चतुःश्रुतिः ॥ २ ॥
चतुःश्रुतिः पञ्चमः स्याद्धैवतस्त्रिश्रुतिस्तथा ।
निषादो द्विश्रुतिश्चैव षड्जग्रामे भवन्ति हि ॥ ३ ॥

शुद्धमूर्छना द्वैग्रामिक्यश्चतुर्दश । यथा—

आदावुत्तममन्द्रा स्याद्रजनी चोत्तरायता ।
चतुर्थी शुद्धषड्जा च पञ्चमी मत्सरीकृता ॥ ४ ॥
अश्वक्रान्ता तथा षष्ठी सप्तमी चाभिरुद्गता ।
षड्जग्रामाश्रिता चैव विज्ञेयाः सप्त मूर्छनाः ॥ ५ ॥
आस(?)षड्जनिषण्णाश्च यस्मात्(?)कालोपना तथा ।
शुद्धमध्य[ा] तथा चैव मार्गी स्यात्पौरवी तथा ॥ ६ ॥
दूष्यका(ती)वेति विज्ञेया सप्तमी द्विजसत्तमाः ।
मध्यमग्रामजा धत्त्येत्(?) विज्ञेयाः सप्त मूर्छनाः ॥ ७ ॥

आसी(सां) मध्यमगान्धारऋषभषड्जनिषादधैवतपञ्चमा आनुपूर्व्या आद्यग[ा]ः । तत्र षड्जग्रामे—षड्जेनोत्तरमन्द्रा, निषादेन रजनी, धैवतेनोत्तरायता, पञ्चमेन शुद्धषड्जा, मध्यमेन मत्सरीत्यते(कृता), गान्धारेणाश्वक्रान्ता, ऋषभेणाभिरुद्धता, इति ।

अथ मध्यमसा(ग्रा)मे—मध्यमेन सौवीरी, गान्धारेण हरिणाश्वा, ऋषभेण कलोपनता, षड्जेन शुद्धमध्यमा, निषादेन मार्गी, धैवतेन पौरवी, पञ्चमेन दूष्यती, इति । एवमेताः क्रमयुक्ताः [पूर्ण]षाडवोडवितकृताः साधारणकृतास्य मूर्छनाश्चतुर्दश भवन्ति ।

अपि च—

क्रमयुक्ताः स्वराः सप्तमूर्छनास्त्वभिसंज्ञिताः ।
वस्वङ्कस्वरकास्थानाः षाडवोडविताः स्वराः ॥ ८ ॥
साधारणकृताश्चैव काकलीसमलंकृताः ।
प्र····ता स्वरसंयुक्ता मूर्छना ग्रामयोर्द्वयोः ॥ ९ ॥

द्विविधैव मूर्छनासिद्धिः। तत्र—षड्जग्रामे द्विश्रुत्युत्कर्षाद्धैवतीकृते गान्धारे मूर्छनाग्रामयोरव्यक्तान्तं तत्तद्वं(दं)शाश्च मध्यमादयो यथासंख्येन निषा(दो)दादित्वं प्रतिपद्यन्ते, तद्वन्मध्यमग्रामा(?) धैवतमाद्वैवा(?) द्वैविध्यम्, तुल्यश्रुत्यन्तरत्वाच्च संज्ञान्यत्वम्, मध्यमपञ्चमग्रामे हि चतुःश्रुतिकमन्तरं पञ्चमधैवतयोस्तद्गान्धारोत्कर्षाच्चतुःश्रुतिकमेव भवति। शेषाश्चापि मध्यमपञ्चमधैवतनिषादषड्जऋषभगान्धारमध्यमत्वं[1] प्राप्नुवन्ति। तुल्यश्रुत्यन्तरत्वात्। अन्तरनिदर्शनमपि श्रुतिनिदर्शने प्रोक्तमिति।

तत्र मूर्छनासंश्रितास्तानाश्चतुरशीतिः, तत्रैकोनपञ्चाशत्स्वराः, पञ्चत्रिंशत्पञ्चस्वराः। लक्षणं तु षट्स्वराणां सप्तविधम्। षड्जऋषभनिषादपञ्चमहीनाश्चत्वारः षड्जग्रामे। मध्यमग्रामे तु षड्जऋषभगान्धारहीनास्त्रयः। एवमेते सर्वासु मूर्छनासु क्रियमाणा भवन्त्येकोनपञ्चाशत्तानाः। पञ्चस्वराणां तु पञ्चविधमेव लक्षणम्। षड्जग्रामे—षड्जपञ्चमहीनो गान्धारनिषादवद्धीन इति त्रयः। मध्यमग्रामे तु गान्धारनिषादवद्धीन ऋषभधैवतहीन इति द्वितीयः। एवमेते पञ्च स्वराः। सर्वासु मूर्छना[सु] क्रियमाणास्तानाः[2]। पञ्चत्रिंशद्भवन्ति। द्विविधा च तानक्रिया तन्त्र्या-वंशा[3]न्निग्रहाच्च। तत्र—प्रवेशनमधुर[4]स्वरविप्रकर्षादुत्तरमार्दवाच्च निग्रहत्वात्संस्पर्शो मध्यमस्वरेण तुयै(वै)णेन। मूर्छनानिर्देशकार्या भवत्यनाशित्वान्मध्यगनते निग्रहोपग्रहे वा। इदं च प्रयोक्तश्रोतृसुखार्थं तानमूर्छनानानात्वम्। मूर्छनानानाप्रयोजनमपि स्थानप्राप्त्यर्थम्। स्थानं च त्रिविधं पूर्वोक्तलक्षणं काकुविधाविति साधारणविधिमिदानीं वक्ष्यामः। तत्र—साधारणं नामान्तरस्वरता। कस्याः। द्वयोरन्तरे भवति यत्तत्साधारणम्। यथा—

छायासु भवति शीत प्रस्वेदो भवति वातस्थस्य····।
नच नागतो(?) वसती(न्तो) न च निःशेषः शिशिरकालः॥ १०॥

इति कालसाधारणता।

तत्र द्वे साधारणे—स्वरसाधारणं जातिसाधारणं च। स्वरसाधारणं

---

१. 'मध्यमपञ्चमत्वं' क. २. 'स्तानाः एवं पञ्च' क. ३. 'प्रवेशात्' इति भवेत्. ४. 'मधर' इति भवेत्.

काकल्यन्तस्वरौ । तत्र द्विश्रुतिकृष्टो निषादः काकलीसंज्ञो भवति । तत्र षड्जधारान्तरस्वरसंज्ञ इति ।

जातिसाधारणमेका[द]शानामविशेषाजातीनां समवायात्प्रशंसालक्षणं संज्ञानमिति । स्वरलो(?)(तो) साधारणमिति द्विविधै(धं) ग्रामिकम् । कस्मात् । साधारणा(?)मत्र स्वरविरोध इति कृत्वा षड्जसाधारणमुच्यते । एवं मध्यमेऽपि । अस्य तु मायोगसौक्ष्म्यात्कैशिकमिति द्वितीयं नाम । कलत्वाच्च काकलीसंज्ञा भवति, विकृतत्वाच्चानशः (?) । आत्मोपदेशप्राप्तेभ्यो नान्यो निषादवानेव । यथा हि षण्णां रसानामन्यतमः क्षारसंज्ञितः, तथा निषादः काकलीसंज्ञः । गान्धारश्चात्त(न्त)रस्वरसंज्ञो भवति । तस्य चाल्पनिषादगान्धारजातिषु प्रयोगो भवति ।

भवति चात्र—

'अन्तरस्वरसंयोगो नित्यमारोहिसंश्रयः ।<br>
कार्यस्त्वल्पो विशेषेण नावरोही कदाचन ॥ ११ ॥<br>
क्रियमाणोऽवरोही स्यादल्पो वा यदि वा बहुः ।<br>
जातिं रागं श्रुतिं चैव नाययेदन्तरस्वरे ॥ १२ ॥' इति ।

जाति(ती)रिदानीं वक्ष्यामः—

जातयोऽष्टादशेत्येवं ब्रह्मणाभिहिताः पुरा ।<br>
तास्वदं(स्त्वहं) वर्तयिष्यामि ग्रहांशादिविभागतः ॥ १३ ॥<br>
षड्जी चैवार्षभी चैव धैवती सनिषादिनी ।<br>
षड्जोदीव्य(च्य)वती चैव तथा वै षड्जकौशिकी ॥ १४ ॥<br>
षड्जमध्या तथा चैव षड्जग्रामसमाश्रया ।<br>
अत ऊर्ध्वं प्रवक्ष्यामि मध्यमग्रामसंभवाः ॥ १५ ॥<br>
गान्धारी मध्यमा चैव गान्धारी दिव्यवा तथा ।<br>
पञ्चमी रक्तगान्धारी तथा गान्धारपञ्चमी ॥ १६ ॥<br>
मध्यमोदीव्यवा चैव नन्दयन्ती तथैव च ।<br>
कर्मारवी च विज्ञेया तथान्ध्री कैशिकी तथा ॥ १७ ॥

१. 'स्वरकालोभयसाधारण' इति भवेत्.

अतिभानः स्खलनं····विस्वरमुच्चारणं च काव्यस्य ।
अस्थानभूषणत्वं पतनं मुकुटस्य च भ्रंशः ॥ ३३ ॥
व्याप्तिस्पन्दनकुञ्जरखरोष्ट्रशिबिकाविमानगानानाम् ।
आरोहणावतरणैरनभिज्ञत्वं विहस्तत्वम् ॥ ३४ ॥
प्रहरणमनेकवचनानभ्यग्रहणं(?) विचारणं वापि ।
अस्फुटभूषणयोगश्चिरप्रवेश····वाचाङ्के ॥ ३५ ॥
एभिः स्थानविशेषैश्च(?)तिलक्ष्यास्तु····स्वरिभिः कुशलैः ।
रूपाश्चिवचनदर्भा·········भाण्डपरिग्रहान्मुक्ताः ॥ ३६ ॥
सिद्ध्या मिश्रो घातः सर्वगतश्चैकदेशजो वापि ।
सिद्धिकुशलैः स लेख्यः सिद्धिर्वास्या विधानो वा ॥ ३७ ॥
नालेख्या बहुदिनतः सर्वगतो यस्तु लक्षणविशेषः ।
········································ ॥ ३८ ॥
जर्जरमोक्षस्यान्ते सिद्धेर्मोक्षस्तु नालिकायास्तु ।
कर्तव्यस्त्विह सततं नाट्यज्ञैः प्राश्निकैर्विधिना ॥ ३९ ॥
योऽन्यस्य[1] महेशमूढो नान्दीश्लोकं पठेद्धि देवस्य ।
सुवसन(?)पूर्वरङ्गे सिद्धेर्घातः प्रयोक्तव्यः ॥ ४० ॥
यो देशवेषभाषारहितं काव्यं प्रयोजयेद्दुष्टम् ।
तस्याप्यभिलेख्यः स्याद्धातस्तज्ज्ञैरदोषजः(?) ॥ ४१ ॥
कः शक्तो नाट्यविधौ यथावदुपपादने प्रयोगस्य ।
कर्तव्यं वाग्रसना यथावदुक्तं परिज्ञातुम् ॥ ४२ ॥
तस्माद्गम्भीरार्थाः शब्दा ये वेदलोकसंसिद्धाः ।
सर्वजनग्राह्यास्ते संयोज्या नाटकैर्विधिवत् ॥ ४३ ॥
न च किंचिद्गुणहीनं दोषैः पाठैरवर्जितं च न कदाचित्(?) ।
तस्मान्नाट्यप्रकृतौ दोषा नात्यर्थतो ग्राह्याः ॥ ४४ ॥
न च नारदस्तु कार्यो नटेन वागङ्गसत्त्वनेपथ्ये ।
रसभावगीतनृत्ये घातोद्यैर्लोकयुक्ते तु ॥ ४५ ॥

१. 'योऽन्यस्येशान्मूढो' इति भवेत्.

एवमेतद्धि विज्ञेयं सिद्धीनां लक्षणं बुधैः ।
अत ऊर्ध्वं प्रवक्ष्यामि प्राश्निकानां तु लक्षणम् ॥ ४६ ॥
चारित्राभिनयोपेताः श्रान्तवृत्तश्रुतान्विताः ।
यशोधर्मरताश्चैव मध्यस्था वचसान्विताः ॥ ४७ ॥
षडङ्गनाट्यकुशला अलुब्धाः शुचयः समाः ।
चतुरातोद्यकुशला वृत्तज्ञास्तत्त्वदर्शिनः ॥ ४८ ॥
देशभाषाविधानज्ञाः कलाशिल्पप्रयोजकाः ।
चतुर्धाभिनयज्ञाश्च रसभावविकल्पने ॥ ४९ ॥
शब्दच्छन्दोविधानज्ञा नानाशास्त्रविचक्षणाः ।
एवंविधास्तु कर्तव्याः प्राश्निका दश रूपतः ॥ ५० ॥
अव्यग्रैरिन्द्रियैः शुद्ध ऊहापोहविशारदः ।
व्यक्तादोषोऽनुरागी च स नाट्ये प्रेक्षकः स्मृतः ॥ ५१ ॥
यस्तुष्टे तुष्टिमायाति शोके शोकमुपैति च ।
दैन्ये दीनत्वमभ्येति स नाट्ये प्रेक्षकः स्मृतः ॥ ५२ ॥
नवैवैते गुणाः सर्वे एकस्मिन्प्रेक्षके स्मृताः ।
विज्ञेयस्याप्रमेयत्वादल्पत्वादायुषस्तथा ॥ ५३ ॥
उत्तमाधममध्यानां संकीर्णायां च संसदि ।
अशक्यमधमैर्ज्ञातुमुत्तमानां तु चेष्टितम् ॥ ५४ ॥
यद्यस्य शिल्पं नेपथ्यं कर्म वाक्चेष्टितं तथा ।
तस्य तेनैव तत्साध्यं स्वकर्मविषयीकृतम् ॥ ५५ ॥
नानाशीलाः प्रकृतयः शीलान्नाट्यं विनिर्मितम् ।
उत्तमाधममध्यानां वृद्धबालस्य योषिताम् ॥ ५६ ॥
तुष्यन्ति तरुणाः कामे विदग्धाः समयान्विते ।
अर्थेष्वर्थपराश्चैव मोक्षे वाथ विरागिणः ॥ ५७ ॥
शूरा बीभत्सरौद्रेषु नियुद्धेष्वाहवेषु च ।
धर्माख्यानपुराणेषु वृद्धास्तुष्यन्ति सर्वदा ॥ ५८ ॥

एवं भावानुकरणे यो यस्मिन्प्रविशेन्नरः ।
स तत्र प्रेक्षको ज्ञेयो गुणैरेतैरलंकृतः ॥ ५९ ॥
एवं हि प्रेक्षका ज्ञेयाः प्रयोगे दशरूपतः ।
संहर्षे च समुत्पन्ने प्राश्निकान्संनिबोधत ॥ ६० ॥
यज्ञविन्नर्तकश्चैव छन्दोविच्छेदवित्तथा ।
अस्त्रविद्बुद्धभावैश्च ................ ॥ ६१ ॥
(?)लेखगणकसद्ध्यैर्लेख्याः सह सिद्धिभिर्याता ।
नात्यासन्ने दूरेऽनलसस्थि(मि)तैः प्रेक्षकैश्च भवितव्यम् ॥ ६२ ॥
तेषामासनयोगा द्वादशहस्तस्थितौ ज्ञेयाः ।
यान्युक्तानि हि पूर्वं सिद्धिस्था[ना]नि तानि लक्ष्याणि ॥ ६३ ॥
घाताच्च लक्षणीया यथोत्थिता नाट्यवेदेषु ।
दैवोत्पातसमुत्थास्तथा परोत्था बुधैर्नवैर्लेख्याः ॥ ६४ ॥
घाता नाट्यसमुत्था आत्मसमुत्थाश्च लेख्याः स्युः ।
घाता यस्य त्वल्पाः संख्याताः सिद्धयश्च बहुलाः स्युः ॥ ६५ ॥
विदितं कृत्वा राज्ञस्तस्मै देया पताका हि ।
सिद्ध्यतिशयात्पताका समसिद्धौ पार्थिवाज्ञया देयाः ॥ ६६ ॥
(?)अथ नरपतिः समः स्यादुभयोरपि सा तदा ज्ञेया ।
.................................................. ॥ ६७ ॥
एवं विधिज्ञैर्द्रष्टव्यो व्यवहारः समञ्जसम् ।
स्वस्वचित्तैः सुखासीनैः सुविशिष्टैर्गुणादिभिः ॥ ६८ ॥
विमृश्य प्रेक्षकैर्ग्राह्यं सर्वरागपराङ्मुखैः ।
साधनं दूषणाभासः प्रयोगसमयाश्रितैः ॥ ६९ ॥
समत्वमङ्गमाधुर्यं पाठ्यं प्रकृतयो रसाः ।
गानं वाद्यं सनेपथ्यमेतज्ज्ञेयं प्रयत्नतः ॥ ७० ॥
गीतवादित्रतालेन कलान्तरकलासु [च] ।
यदङ्गं क्रियते नाट्ये समन्तात्समभुच्यते ॥ ७१ ॥
अङ्गोपाङ्गसमायोगं गीततालल्याान्वितम् ।
भाण्डवाद्यं समं चैव यस्मिंस्तत्समभुच्यते ॥ ७२ ॥

सनिर्भुग्नमुरः कृत्वा चतुरस्रकृतौ करौ ।
ग्रीवाञ्चिता तथा कार्या त्वङ्गमाधुर्यमुच्यते ॥ ७३ ॥
पूर्वोक्तानीह शेषाणि यानि प्रेक्ष्याणि साधकैः ।
वाद्यं प्रकृतयो ज्ञानं वक्ष्यमाणानि निर्दिशेत् ॥ ७४ ॥
यानि स्थानानि सिद्धानां तैः सिद्धिं तु प्रकाशयेत् ।
हर्षादङ्गसमुद्भूतां नानारससमुत्थिताम् ॥ ७५ ॥
वारकालाश्च विज्ञेया नाट्यज्ञैर्विविधाश्रयाः ।
दिवसश्चैव रात्रिश्च तयोर्वारं निबोधत ॥ ७६ ॥
पूर्वाह्णेष्वथ मध्याह्ने ह्यपराह्णे तथैव च ।
दिवासमुत्था विज्ञेया नाट्यवाराः प्रयोगतः ॥ ७७ ॥
प्रदोषिकार्धरात्रं च तथा प्राभातिकोऽपरः ।
नाट्यवारा भवन्त्येते रात्रिजा ह्यनुपूर्वशः ॥ ७८ ॥
एतेषां यत्र यद्योज्यं नाट्यकार्यं रसाश्रयम् ।
तदहं संप्रवक्ष्यामि वारकालसमाश्रयम् ॥ ७९ ॥
यच्छ्रोत्ररमणीयं स्याद्धर्मोत्थानकृतं च यत् ।
पूर्वाह्णे तत्प्रयोक्तव्यं शुद्धं वा विकृतं च यत् ॥ ८० ॥
सत्त्वोत्थाने गुणैर्युक्तं वाक्यभूयिष्ठमेव च ।
पुष्कलं सत्त्वसंयुक्तमपराह्णे प्रयोजयेत् ॥ ८१ ॥
कैशिकीवृत्तिसंयुक्तं शृङ्गाररससंश्रयम् ।
नृत्तवादित्रगीताढ्यं प्रदोषे नाट्यमिष्यते ॥ ८२ ॥
यत्र माहात्म्यसंयुक्तं करुणप्रायमेव च ।
प्रभातकाले तत्कार्यं नाट्यं निद्राविनाशनम् ॥ ८३ ॥
न प्रयुञ्जीत मध्याह्ने नार्धरात्रे कथंचन ।
संध्याभोजनकाले च न नाट्यं संप्रयोजयेत् ॥ ८४ ॥
एवं कालं च देशं च पैर्णदं च समीक्ष्य तु ।
नाट्यं नित्यं प्रयुञ्जीत यथासत्त्वं यथारसम् ॥ ८५ ॥

१. 'वर्णनं च' इति भवेत्.

अथवा देशकालौ च न परीक्ष्यौ प्रयोक्तृभिः ।
यदैवाज्ञापयेद्भर्ता तदा योज्यमसंशयम् ॥ ८६ ॥
तथा समुदितौश्चैव विज्ञेया नाटकाश्रयाः ।
पात्रं प्रयोगमर्थश्च विज्ञेयास्तु त्रयो गुणाः ॥ ८७ ॥
बुद्धिः सत्त्वं सुरूपत्वं लयतालज्ञ(?)नान्यथा ।
रसभावज्ञता चैव वयःस्वत्त्वकुतूहलम् ॥ ८८ ॥
ग्रहणं धारणं चैव गात्रवैकल्यमेव च ।
जितसाध्वसतोत्साह इति **पात्रगतो** विधिः ॥ ८९ ॥
सुचर्ये(चेय)ता सुगानत्वं सुपाठ्यत्वं तथैव च ।
शास्त्रकर्मसमायोगः **प्रयोगः** संप्रकीर्तितः ॥ ९० ॥
सुविभूषणता या तु सुमाल्याम्बरता तथा ।
विचित्रा रचना चैव **समृद्धि**रिति सा स्मृता ॥ ९१ ॥
यदा समुदयाः सर्वे एकीभूता भवन्ति हि ।
अलंकारः स तु तदा मन्तव्यो नाटकाश्रयः ॥ ९२ ॥
एतदुक्तं द्विजश्रेष्ठाः सिद्धीनां लक्षणं मया ।
अत ऊर्ध्वं प्रवक्ष्याम्यातोद्यानां च विकल्पनम् ॥ ९३ ॥

इति भारतीये नाट्यशास्त्रे सिद्धिव्यञ्जको नामाध्यायः सप्तविंशतितमः ।

अष्टाविंशतितमोऽध्यायः[1] ।

आतोद्यविधिमिदानीं वक्ष्यामः । तद्यथा—

ततं चैवावनद्धं च घनं सुषिरमेव च ।
चतुर्विधं तु विज्ञेयमातोद्यं लक्षणान्वितम् ॥ १ ॥
ततं तन्त्रीकृतं ज्ञेयमवनद्धं तु पौष्करम् ।
घनं तालस्तु विज्ञेयः सुषिरो वंश एव च ॥ २ ॥
प्रयोगस्त्रिविधो ह्येषां विज्ञेयो नाटकाश्रयः ।
ततं चैवावनद्धं च तथा नाट्यकृतश्च यः ॥ ३ ॥

---

१. अध्यायोऽयं पारिसनगरस्थैः जे. ग्रोसेट् पण्डितैर्विरचितात् "La Musique Hindoue" इत्याख्यातपुस्तकादुत्तरितः. पुस्तकं चेदं तैरस्मभ्यं सबहुमानं प्रेषितमिति तेषामुपकारगौरवं शिरसा वहामः.

तते कुतपविन्यासो गायनः सपरिग्रहः ।
वैपञ्चिको वैणिकश्च वंशवादस्तथैव च ॥ ४ ॥
मार्दङ्गिकः पाणविकस्तथा दार्दुरिको बुधैः ।
अवनद्धविधावेषः कुतपः समुदाहृतः ॥ ५ ॥
उत्तमाधममध्याभिस्तथा प्रकृतिभिर्युतः ।
कुतपो नाट्ययोगे तु नानादेशसमाश्रयः ॥ ६ ॥
एवं गीतं च वाद्यं च नाट्यं च विविधाश्रयम् ।
अलातचक्रप्रतिमं कर्तव्यं नाट्ययोक्तृभिः ॥ ७ ॥
यत्तु तन्त्रीकृतं प्रोक्तं नानातोद्यसमाश्रयम् ।
गान्धर्वमिति तज्ज्ञेयं स्वरतालपदाश्रयम् ॥ ८ ॥
अत्यर्थमिष्टं देवानां तथा प्रीतिकरं पुनः ।
गन्धर्वाणां च यस्माद्धि तस्माद्गान्धर्वमुच्यते ॥ ९ ॥
अस्य योनिर्भवेद्गात्रं वीणा वंशस्तथैव च ।
एतेषां चैव वक्ष्यामि विधिं स्वरसमुत्थितम् ॥ १० ॥
गान्धर्वं त्रिविधं विद्यात्स्वरतालपदात्मकम् ।
त्रिविधस्यापि वक्ष्यामि लक्षणं कर्म चैव हि ॥ ११ ॥
द्व्यधिष्ठानाः स्वरा वैणाः शारीराश्च प्रकीर्तिताः ।
उभाभ्यामपि वक्ष्यामि विधानं लक्षणान्वितम् ॥ १२ ॥
स्वरा ग्रामौ मूर्च्छनाश्च नानास्थानानि वृत्तयः ।
स्वनसाधारणे वर्णा ह्यलंकाराः सधातवः ॥ १३ ॥
श्रुतयो जातयश्चैव विधिस्वरसमाश्रयाः ।
दारव्यां समावायोऽयं वीणायां समुदाहृतः ॥ १४ ॥
स्वरा ग्रामावलंकारा वर्णाः स्थानानि जातयः ।
साधारणे च शारीर्यां वीणायामेष संग्रहः ॥ १५ ॥
व्यञ्जनानि स्वरा वर्णाः संधयोऽथ विभक्तयः ।
नामाख्यातोपसर्गाश्च निपातास्तद्धितास्तथा ॥ १६ ॥
छन्दोविधानं च तथा ज्ञेयः पदगतो विधिः ॥ १७ ॥

अनिबद्धं निबद्धं च द्विविधं तत्पदं स्मृतम् ।
अतस्तालगतस्यापि संप्रवक्ष्यामि वै द्विजाः ॥ १८ ॥
आवापस्त्वथ निष्क्रामो विक्षेपोऽथ प्रवेशनम् ।
शम्यातालः संनिपातः परिवर्तः सवस्तुकः ॥ १९ ॥
मात्राप्रमाणबीजानि विदारी च यतिर्लयः ।
गीतयोऽवयवा मार्गाः पादभागाः सपाणयः ॥ २० ॥
इत्येकविंशको ज्ञेयो विधिस्तालगतो बुधैः ।
गान्धर्वसंग्रहो ह्येष विस्तरं तु निबोधत ॥ २१ ॥

तत्र स्वराः—

षड्जश्च ऋषभश्चैव गान्धारो मध्यमस्तथा ।
पञ्चमो धैवतश्चैव सप्तमश्च निषादवान् ॥ २२ ॥
चतुर्विधत्वमेतेषां विज्ञेयं श्रुतियोगतः ।
वादी चैवाथ संवादी ह्यनुवादी विवाद्यपि ॥ २३ ॥

तत्र यो यत्रांशः स तत्र वादी । ययोश्च नवत्रयोदशकं परस्परतः श्रुत्यन्तरे तावन्योन्यसंवादिनौ । यथा—षड्जपञ्चमौ ऋषभधैवतौ गान्धारनिषादवन्तौ षड्जमध्यमाविति षड्जग्रामे । मध्यमग्रामेऽप्येवमेव षड्जपञ्चमवर्ज्यं पञ्चमर्षभयोश्चात्र संवाद इति । अत्र श्लोकः—

संवादो मध्यमग्रामे पञ्चमस्यर्षभस्य च ।
षड्जग्रामे च षड्जस्य संवादः पञ्चमस्य च ॥ २४ ॥

विवादिनस्तु ये तेषां स्याद्विंशतिकमन्तरम् । तद्यथा—ऋषभगान्धारौ धैवतनिषादौ । एवं वादिसंवादिविवादिषु स्थापितेषु शेषा ह्यनुवादिनः संज्ञकाः । यथा—षड्जस्यर्षभगान्धारधैवतनिषादाः । ऋषभस्य मध्यमपञ्चमनिषादाः । गान्धारस्यापि मध्यमपञ्चमधैवताः । मध्यमस्य धैवतपञ्चमनिषादाः । पञ्चमस्य धैवतषड्जौ । धैवतस्य षड्जमध्यमपञ्चमाः षड्जग्रामे । मध्यमग्रामेऽपि मध्यमस्य पञ्चमधैवतनिषादाः । पञ्चमस्यर्षभषड्जगान्धाराः । धैवतस्य षड्जर्षभगान्धाराः । निषादस्य षड्जर्षभगान्धाराः । वदनाद्वादी संवदनात्संवादी विवदनाद्विवाद्यनुवदनादनुवादीति । एतेषां च स्वराणां

न्यूनाधिकत्वं तन्त्रीवादनदण्डेन्द्रियवैगुण्यादुपजायते । स्वरविधानमेतच्चतुः-प्रकारमिति ।

अथ ग्रामौ—षड्जग्रामो मध्यमग्रामश्चेति । तत्र वा द्वाविंशतिश्रुतयः । यथा—

तिस्रो द्वे च चतस्रश्च चतस्रस्तिस्र एव च ।
द्वे चतस्रश्च षड्जाख्ये ग्रामे श्रुतिनिदर्शनम् ॥ २५ ॥

मध्यमग्रामे तु श्रुत्यपकृष्टः पञ्चमः कार्यः । पञ्चमश्रुत्युत्कर्षादपकर्षाद्वा यदन्तरं मार्दवादायतत्वाद्वा तत्प्रमाणश्रुतिः । निदर्शनं त्वासामभिव्याख्यास्यामः । यथा—द्वे वीणे तुल्यप्रमाणतन्त्र्युपवादनदण्डमूर्च्छने षड्जग्रामाश्रिते कार्ये । तयोरेकतरस्यां मध्यमग्रामिकीं कृत्वा पञ्चमस्यापकर्षे श्रुतिं तामेव पञ्चमवशात्षड्जग्रामिकीं कुर्यात् । एवं श्रुतिरपकृष्टा भवति । पुनरपि तद्वदेवापकर्षाद्गान्धारनिषादवन्तावितरस्यां धैवतर्षभौ प्रविशतो द्विश्रुत्यधिकत्वात् । पुनस्तद्वदेवापकर्षाद्धैवतर्षभावितरस्यां पञ्चमषड्जौ प्रविशतः श्रुत्यधिकत्वात् । तद्वत्पुनरपकृष्टायां तस्यां पञ्चममध्यमषड्जा इतरस्यां मध्यमगान्धारनिषादवन्तः प्रवेक्ष्यन्ति चतुःश्रुत्यधिकत्वात् । एवमनेन श्रुतिनिदर्शनेन द्वैग्रामिक्यो द्वाविंशतिश्रुतयः प्रत्यवगन्तव्याः ।

अत्र श्लोका भवन्ति—

षड्जश्चतुःश्रुतिर्ज्ञेय ऋषभस्त्रिश्रुतिस्तथा ।
द्विश्रुतिश्चैव गान्धारो मध्यमश्च चतुःश्रुतिः ॥ २६ ॥
चतुःश्रुति पञ्चमः स्याद्धैवतस्त्रिश्रुतिस्तथा ।
निषादो द्विश्रुतिश्चैव षड्जग्रामे भवन्ति हि ॥ २७ ॥
चतुःश्रुतिस्तु विज्ञेयो मध्यमः पञ्चमः पुनः ।
त्रिश्रुतिर्धैवतस्तु स्याच्चतुःश्रुतिक एव हि ॥ २८ ॥
निषादषड्जौ विज्ञेयौ द्विचतुःश्रुतिसंभवौ ।
ऋषभस्त्रिश्रुतिश्च स्याद्गान्धारो द्विश्रुतिस्तथा ॥ २९ ॥

अन्तरनिदर्शनमपि व्याख्यातम् ।

अथ मूर्छनाः—द्वैग्रामिक्यश्चतुर्दश । यथा—

आदावुत्तरमन्द्रा स्याद्रजनी चोत्तरायता ।
चतुर्थी शुद्धषड्जा च पञ्चमी मत्सरीकृता ॥ ३० ॥
अश्वक्रान्ता तथा षष्ठी सप्तमी चाभिरुद्गता ।
षड्जग्रामाश्रिता ह्येता विज्ञेयाः सप्त मूर्छनाः ॥ ३१ ॥

आसां षड्जनिषादधैवतपञ्चमध्यमगान्धारर्षभाद्याः स्वरा इति ।

अथ मध्यमग्रामे—

सौवीरी हरिणाश्वाथ स्यात्कलोपनता तथा ।
शुद्धमध्या तथा चैव मार्गी स्यात्पौरवी तथा ॥ ३२ ॥
हृष्यका चेति विज्ञेया सप्तमी द्विजसत्तमाः ।
मध्यमग्रामजा ह्येता विज्ञेयाः सप्त मूर्छनाः ॥ ३३ ॥

आसां मध्यमगान्धारर्षभषड्जनिषादधैवतपञ्चमा आनुपूर्व्याद्याः स्वराः । तत्र षड्जग्रामे—षड्जेनोत्तरमन्द्रा, निषादेन रजनी, धैवतेनोत्तरायता, पञ्चमेन शुद्धषड्जा, मध्यमेन मत्सरीकृता, गान्धारेणाश्वक्रान्ता, ऋषभेणाभिरुद्गता, इति ।

अथ मध्यमग्रामे—मध्यमेन सौवीरी, गान्धारेण हरिणाश्वा, ऋषभेण कलोपनता, षड्जेन शुद्धमध्यमा, निषादेन मार्गी, धैवतेन पौरवी, पञ्चमेन हृष्यका, इति । एवमेताः प्रक्रमयुक्ताः पूर्णाः षाडवौडवितीकृताः साधारणकृताश्चेति चतुर्विधाश्चतुर्दश मूर्च्छनाः ।

क्रमयुक्ताः स्वराः सप्त मूर्छनास्त्वभिसंज्ञिताः ।
सत्पञ्चकस्वरास्तासां षाडवौडविताः स्मृताः ॥ ३४ ॥
साधारणकृताश्चैव काकलीसमलंकृताः ।
अन्तरस्वरसंयुक्ता मूर्छना ग्रामयोर्द्वयोः ॥ ३५ ॥

द्विविधैकमूर्छनासिद्धिः । तत्र—द्विश्रुतिप्रकर्षाद्धैवतीकृते गान्धारे मूर्छनाग्रामयोरन्यत्र षड्जग्रामे । मध्यमग्रामेऽपि धैवतमार्दवान्निषादोत्कर्षाद्वैविध्यं भवति । तुल्यश्रुत्यन्तरत्वाच्च संज्ञान्यत्वम् । चतुःश्रुतिकमन्तरं

पञ्चमधैवतयोः । तद्वद्गान्धारोत्कर्षाच्चतुःश्रुतिकमेव भवति । शेषाश्चापि मध्यमपञ्चमधैवतनिषादषड्जर्षभा मध्यमादित्वं प्राप्नुवन्ति । तुल्यश्रुत्यन्तरत्वात् । अन्तरनिदर्शनमपि श्रुतिनिदर्शने प्रोक्तम् ।

तत्र मूर्छनासंश्रितास्तानाश्चतुरशीतिः । तत्र—एकोनपञ्चाशत्षट्स्वराः, पञ्चत्रिंशत्पञ्चस्वराः । लक्षणं तु षट्स्वराणां सप्तविधम् । यथा—षड्जर्षभपञ्चमनिषादहीनाश्चत्वारस्तानाः षड्जग्रामे । मध्यमग्रामे तु षड्जर्षभगान्धारहीनास्त्रयस्तानाः । एवमेते सर्वासु मूर्छनासु क्रियमाणा भवन्त्येकोनपञ्चाशत्तानाः । पञ्चस्वराणां तु पञ्चविधमेव लक्षणम् । यथा—षड्जपञ्चमहीना ऋषभपञ्चमहीना गान्धारनिषादवद्धीना इति त्रयस्तानाः षड्जग्रामे । मध्यमग्रामे तु गान्धारनिषादवद्धीनावृषभधैवतहीनाविति द्वौ तानौ । एवं पञ्च स्वराः सर्वासु मूर्छनासु क्रियमाणास्तानाः पञ्चत्रिंशद्भवन्ति । षड्जग्राम एकविंशतिर्मध्यमग्रामे चतुर्दश । एवमेत एकत्र गम्यमानाश्चतुरशीतिर्भवन्ति । द्विविधा तानक्रिया तन्त्र्याम्—प्रवेशो निग्रहश्च । अत्र—प्रवेशो नामाधरस्वरप्रकर्षनादुत्तरमार्दवाच्च निग्रहश्चासंस्पर्शः । मध्यमस्वरासंस्पर्शः । मध्यमस्वरेण तु वैणेन मूर्छनानिर्देशो भवत्यनाशित्वात् । मध्यमस्वरस्य निग्रहः प्रवेशो वा । इत्थं प्रयोक्तुः श्रोतुः सुखार्थं तानमूर्छनातत्त्वम् । मूर्छनाप्रयोजनमपि स्थानप्राप्त्यर्थः । स्थानं तु त्रिविधं पूर्वोक्तलक्षणं काकुविधाविति ।

साधारणविधिमिदानीं वक्ष्यामः । तत्र—साधारणं नामान्तरस्वरता । कस्मात् । द्वयोरन्तरे योऽर्थो भवति स साधारणः । यथात्र्वन्तरे—

छायासु भवति शीतं प्रस्वेदो भवति चातपस्थस्य ।
न च नागतो वसन्तो न च निःशेषः शिशिरकालः ॥ ३६ ॥

इति कालसाधारणता ।

द्वे साधारणे—स्वरसाधारणं जातिसाधारणं चेति । स्वरसाधारणं काकल्यन्तरस्वरौ । तत्र—द्विश्रुतिप्रकर्षनान्निषादवान्काकलीसंज्ञो निषादः, न षड्जः । द्वाभ्यामन्तरस्वरत्वात् । साधारणत्वं प्रतिपद्यते । एवं गान्धारोऽप्यन्तरस्वरसंज्ञो गान्धारो न मध्यमः । तयोरन्तरस्वरत्वात् । अत एव स्वरसाधा-

रणम् । कस्मात् । निषादः काकलीसंज्ञः । कलत्वात्काकली कष्टत्वाद्वातिसौक्ष्म्यादथवा काक्षित्वात् । उभयसंबन्धात्काकलीसंज्ञाय । यथा—षण्णां रसानां मध्ये लवणः क्षारसंज्ञः, एवं निषादः काकलीसंज्ञो गान्धारश्चान्तरसंज्ञो भवति ।

जातिसाधारणमेकांशानां विशेषाज्जातीनां तु समवायात् । प्रत्यक्षेण संज्ञा इति । स्वरसाधारणं द्विविधं द्वैग्रामिक्यम् । कस्मात् । षड्जग्रामे षड्जसाधारणं मध्यमग्रामे मध्यमसाधारणम् । साधारणोऽत्र स्वरविशेष इति षड्जसाधारणम् । एवं मध्यमग्रामेऽपि साधारणत्वम् । अस्य तु प्रयोगसौक्ष्म्यात्कैशिकमिति नाम निष्पद्यते । एवं स्वरसाधारणम् । अस्याल्पनिषादगान्धारासु जातिषु प्रयोगः ।

अत्र श्लोकौ—

अन्तरस्वरसंयोगो नित्यमारोहिसंश्रयः ।
कार्यः स्वल्पविशेषेण नावरोही कदाचन ॥ ३७ ॥
क्रियमाणोऽवरोही स्यादल्पो वा यदि वा बहुः ।
जातिरागं श्रुतिं चैव नयन्ते त्वन्तरस्वराः ॥ ३८ ॥

जातीरिदानीं वक्ष्यामः—

स्वरसाधारणगतास्तिस्रो ज्ञेयास्तु जातयः ।
मध्यमा पञ्चमी चैव षड्जमध्या तथैव च ॥ ३९ ॥
आसामङ्गास्तु विज्ञेयाः षड्जमध्यमपञ्चमाः ।
यथा[स्वं दुर्लभतरं] व्यक्ता सा पञ्चमी तथा ॥ ४० ॥
जातयोऽष्टादशेत्येव पूर्वं या गदिता मया ।
तास्त्वहं वर्तयिष्यामि न्यासापन्याससंयुताः ॥ ४१ ॥
षाड्जी चैवार्षभी चैव धैवती सनिषादिनी ।
षड्जोदीच्यवती चैव तथा वै षड्जकैशिकी ॥ ४२ ॥
षड्जमध्या तथा चैव षड्जग्रामसमाश्रया ।
अत ऊर्ध्वं प्रवक्ष्यामि मध्यमग्रामसंश्रयाः ॥ ४३ ॥

गान्धारी मध्यमा चैव गान्धारोदीच्यवा तथा।
पञ्चमी रक्तगान्धारी तथा गान्धारपञ्चमी ॥ ४४ ॥
मध्यमोदीच्यवा चैव नन्दयन्ती तथैव च।
कर्मारवी च विज्ञेया तथान्ध्री कैशिकी तथा ॥ ४५ ॥

एतासामष्टादशानां सप्त स्वराख्याः। तच्च द्विविधाः—शुद्धा विकृताश्च। तत्र शुद्धाः—षड्जग्रामे षाड्जार्षभी धैवती निषादवती च। गान्धारी मध्यमा पञ्चमी चेति मध्यमग्रामे। शुद्धा अन्यूनस्वराः स्वरांशग्रहन्यासाः। एषामन्यतमेन द्वाभ्यां बहुभिर्वापि लक्षणैर्विक्रियामुपगता न्यासवर्जं विकृतसंज्ञा भवन्ति। तेन ता एव शुद्धास्ता एव च विकृताः। न्यासविधावप्यासां मन्द्रो नियमाद्भवति शुद्धासु विकृतास्वनियमात्। तत्रैकादश संसर्गजा विकृताः। परस्परं संयोगादेकादश निर्वर्तयन्ति। यथा—

शुद्धा विकृताश्चैव हि समवायाज्जातयस्तु जायन्ते।
ता एव शुद्धविकृता भवन्ति चैकादशान्यास्तु ॥ ४६ ॥
तासां या निर्वृत्ता स्वरेष्वथांशेषु जातिषु च जातिः।
तां वक्ष्यामि यथावत्संक्षेपेण क्रमेणेह ॥ ४७ ॥
स्यात्षड्जमध्यमाभ्यां निर्वृत्ता षड्जमध्यमा जातिः।
गान्धारीषाड्जीभ्यां संयोगात्षड्जकैशिकी वापि ॥ ४८ ॥
षाड्जीगान्धारीभ्यां धैवत्याश्चापि या विनिष्पन्ना।
संसर्गाद्विज्ञेया सा षड्जोदीच्यवा जातिः ॥ ४९ ॥
षाड्जी गान्धारी पञ्चमी तथा धैवती च खलु जातिः।
गान्धारोदीच्यवतीं जातिं निर्वर्तयन्त्येताः ॥ ५० ॥
गान्धारपञ्चमाभ्यां मध्यमया विरचिता च धैवत्या।
जातिस्तु मध्यमोदीच्यवेति सद्भिः सदा ज्ञेया ॥ ५१ ॥
गान्धारीपञ्चमयोः सप्तम्याश्चैव रक्तगान्धारी।
गान्धार्यार्षभीभ्यामान्ध्री संजायते जातिः ॥ ५२ ॥
योनिस्तु नन्दयन्त्यास्त्वार्षभी पञ्चमी सगान्धारी।
कर्मारवीं निषादी सार्षभी पञ्चमी कुर्युः ॥ ५३ ॥

गान्धारीपञ्चमयोर्योगाद्गान्धारपञ्चमी जातिः ।
धैवत्यार्षभीभ्यां हीनां खलु कैशिकीं कुर्युः ॥ ५४ ॥
एवं परस्परोत्पन्ना विज्ञेया जातयो बुधैः ।
पृथग्लक्षणसंयुक्ता द्वैग्रामिक्यः स्वराश्रयाः ॥ ५५ ॥
आभ्यश्चतस्रो नियमाज्ज्ञेयाः सप्तस्वरा बुधैः ।
दश पञ्चस्वरा ज्ञेयाश्चतस्रश्चैव षट्स्वराः ॥ ५६ ॥
मध्यमोदीच्यवा चैव तथा च षड्जकैशिकी ।
कर्मारवी च संपूर्णास्तथा गान्धारपञ्चमी ॥ ५७ ॥
षाड्जान्ध्री नन्दयन्ती च गान्धारोदीच्यवा तथा ।
चतस्रः षट्स्वरा शेषाः पञ्चवस्तुस्वरा दश ॥ ५८ ॥
निषादिन्यार्षभी चैव धैवती षड्जमध्यमा ।
षड्जोदीच्यवती चैव पञ्च षड्जाश्रिताः स्मृताः ॥ ५९ ॥
गान्धारी रक्तगान्धारी मध्यमा पञ्चमी तथा ।
कैशिकी चैव पञ्चैता मध्यमग्रामसंश्रयाः ॥ ६० ॥
यास्ताः पञ्चस्वराः प्रोक्ता याश्चैताः षट्स्वराः स्मृताः ।
कदाचिदौडवीभूताः कदाचित्षाडवीकृताः ॥ ६१ ॥
षड्जग्रामे तु संपूर्णा विज्ञेया षड्जकैशिकी ।
षट्स्वरा चैव विज्ञेया षाड्जी वै गानयोक्तृभिः ॥ ६२ ॥
संपूर्णा मध्यमग्रामे ज्ञेया कर्मारवी बुधैः ।
गान्धारपञ्चमी चैव मध्यमोदीच्यवा तथा ॥ ६३ ॥
पुनश्च षट्स्वरा ज्ञेया गान्धारोदीच्यवा बुधैः ।
आन्ध्री च नन्दयन्ती च मध्यमग्रामसंश्रयाः ॥ ६४ ॥
एवमेता बुधैर्ज्ञेया द्वैग्रामिक्यश्च जातयः ।
अत ऊर्ध्वं प्रवक्ष्यामि तासामंशविकल्पनम् ॥ ६५ ॥
षट्स्वरी सप्तमे त्वंशे नेष्यते षड्जमध्यमा ।
संवादिलोपाद्गान्धारस्तत्रैव न भविष्यति ॥ ६६ ॥

गान्धारीरक्तगान्धारीकैशिकीनां तु पञ्चमः ।
षाड्जायां चैव गान्धारमनंशं विद्धि षाडवे ॥ ६७ ॥
षड्जोदीच्यवत्याश्चैव धैवतांशे न षाडवम् ।
संवादिलोपात्सप्तैताः षाट्स्वर्ये तु विवर्जिताः ॥ ६८ ॥
गान्धारीरक्तगान्धार्योः षड्जमध्यमपञ्चमाः ।
सप्तमश्चैव विज्ञेया येषु चौडवितं भवेत् ॥ ६९ ॥
द्वौ षड्जमध्यमांशौ तु गान्धारोऽथ निषादवान् ।
ऋषभश्चैव पञ्चम्यां कैशिक्यां चैव धैवतः ॥ ७० ॥
एवं हि द्वादशैते स्युर्वर्ज्याः पञ्चस्वरे सदा ।
तास्त्वनौडविता नित्यं कर्तव्या जातयो बुधैः ॥ ७१ ॥
सर्वस्वराणां नाशस्तु विहितस्त्वथ जातिषु ।
न मध्यमस्य नाशस्तु कर्तव्यो हि कदाचन ॥ ७२ ॥
सप्तस्वराणां प्रवरो ह्यनाशी चैव मध्यमः ।
गान्धर्वकल्पे विहितः सामगैरपि मध्यमः ॥ ७३ ॥

दशविधं जातिलक्षणम्—

ग्रहांशौ तारमन्द्रौ च न्यासोपन्यास एव च ।
अल्पत्वं च बहुत्वं च षाडवौडविते तथा ॥ ७४ ॥

अथ ग्रहाः—

ग्रहास्तु सर्वजातीनामंशवत्परिकीर्तिताः ।
यः प्रवृत्तौ भवेदंशः सोंऽशो ग्रहविकल्पितः ॥ ७५ ॥

तत्रांशो नाम—

रागश्च यस्मिन्वसति यस्माच्चैव प्रवर्तते ।
मन्द्रतारविषया च पञ्चस्वरपरागतिः ॥ ७६ ॥
अनेकस्वरसंयोगे योऽत्यर्थमुपलभ्यते ।
अन्यश्च बलिनो यस्य संवादी चानुवाद्यपि ॥ ७७ ॥
ग्रहापन्यासविन्यासन्याससंन्यासगोचरः ।
परिचार्य स्थितो यस्तु सोंऽशः स्याद्दशलक्षणः ॥ ७८ ॥

पञ्चस्वरपरा तारगतिः । यथा—

अंशात्तारगतिं विन्द्यादा चतुर्थस्वरादिह ।
आ पञ्चमात्पञ्चमाद्वा नातः परमिहेष्यते ॥ ७९ ॥

त्रिविधा मन्द्रगतिः—अंशपरा न्यासपरापन्यासपरा चेति ।

मन्द्रस्त्वंशपरो नास्ति न्यासे तु द्वौ व्यवस्थितौ ।
गान्धारे न्यासलिङ्गे तु दृष्टमृषभधैवतम् ॥ ८० ॥

अथ न्यासः—एकविंशतिविधो ह्यङ्गसमाप्तौ । तद्वदपन्यासोऽप्यङ्गमध्ये षट्पञ्चाशत्संख्यः । यथा—

न्यासो ह्यङ्गसमाप्तौ स चैकविंशतिविधो विधातव्यः ।
षट्पञ्चाशत्संख्योऽङ्गमध्येऽपन्यास एव स्यात् ॥ ८१ ॥

द्विविधमल्पत्वम्—लङ्घनादनभ्यासाच्चातत्र षाडवौडवितकरणत्वमंशानां गीतानामन्तरमार्गमुपगतानां स्वराणां लङ्घनादनभ्यासाच्च सकृदुच्चारणं यथाजातिः । तद्वद्बहुत्वमल्पत्वविपर्ययाद्द्विविधमेवान्येषामपि बलिनां संचारः ।

अल्पत्वे च बहुत्वे च तथा पूर्वविनिश्चयात् ।
जातिस्वरैस्तु नित्यं स्याज्जात्यल्पत्वं द्विधा च तत् ॥ ८२ ॥
संचारोंऽशबलस्थानामल्पत्वं दुर्बलासु च ।
द्विविधान्तरमार्गस्तु जातीनां व्यक्तिकारकः ॥ ८३ ॥

षट्स्वरं षाडवितं चतुर्दशविधं सप्तचत्वारिंशत्प्रकारम् । पूर्वोक्तविधानं यथाजात्यंशप्रकारैरिति ।

पञ्चस्वरमौडवितं विज्ञेयं दशविधं प्रयोगज्ञैः ।
त्रिंशत्प्रकारविहितं पूर्वोक्तं लक्षणं त्वस्य ॥ ८४ ॥
षट्स्वरस्य प्रयोगोऽस्ति तथा पञ्चस्वरस्य च ।
चतुःस्वरप्रयोगोऽस्ति ह्यवकृष्टध्रुवास्वथ ॥ ८५ ॥
द्वैग्रामिकीनां जातीनां सर्वासामपि नित्यशः ।
त्रिषष्टिरंशा विज्ञेयास्तासां चैव तथा ग्रहाः ॥ ८६ ॥

अंशग्रहानिदानीं व्याख्यास्यामः । तत्र—

मध्यमोदीच्यवायास्तु नन्दयन्त्यास्तथैव च ।
तथा गान्धारपञ्चम्याः पञ्चमोंऽशो ग्रहस्तथा ॥ ८७ ॥
धैवत्याश्च तथैवांशौ विज्ञेयौ धैवतर्षभौ ।
पञ्चम्यास्तु ग्रहावंशौ भवतः पञ्चमर्षभौ ।
गान्धारोदीच्यवायास्तु ग्रहांशौ षड्जमध्यमौ ॥ ८८ ॥
आर्षभ्यां तु निषादस्तु तथा चर्षभधैवतौ ।
निषाद्यां च निषादस्तु गान्धारश्चर्षभस्तथा ॥ ८९ ॥
तथा च षड्जकैशिक्यां षड्जगान्धारपञ्चमाः ।
तिसृणामपि जातीनां ग्रहास्त्वंशाश्च कीर्तिताः ॥ ९० ॥
षड्जश्च मध्यमश्चैव निषादो धैवतस्तथा ।
षड्जोदीच्यवतीजातेर्ग्रहास्त्वंशाश्च कीर्तिताः ॥ ९१ ॥
पञ्चमेनर्षभश्चैव निषादो धैवतस्तथा ।
कर्मारव्या बुधैरंशा ग्रहाश्च परिकीर्तिताः ॥ ९२ ॥
गान्धारश्चर्षभश्चैव पञ्चमोऽथ निषादवान् ।
चत्वारोंऽशा भवन्त्यान्ध्रया ग्रहाश्चैते तथैव हि ॥ ९३ ॥
ऋषभश्चैव षड्जश्च मध्यमः पञ्चमस्तथा ।
मध्यमाया ग्रहा ज्ञेया अंशाश्चैव सधैवताः ॥ ९४ ॥
निषादषड्जगान्धारा मध्यमः पञ्चमस्तथा ।
गान्धारीरक्तगान्धार्योर्ग्रहांशाः परिकीर्तिताः ॥ ९५ ॥
षाड्जाया षड्जगान्धारौ मध्यमः पञ्चमस्तथा ।
धैवतश्चापि विज्ञेया ग्रहाश्चांशाः प्रकीर्तिताः ॥ ९६ ॥
कैशिक्यां चर्षभहीना ग्रहांशाः षट्स्वराः स्मृताः ।
सर्वस्वरग्रहांशाश्च विज्ञेयाः षड्जमध्यमाः ॥ ९७ ॥
एवं त्रिषष्टिर्विज्ञेयाः ग्रहाश्चांशाश्च जातिषु ।
अंशवच्च ग्रहास्त्वासां सर्वासामेव नित्यशः ॥ ९८ ॥

सर्वासामेव जातीनां त्रिजातिस्तु गणाः स्मृताः ।
सर्वथा चैव विज्ञेया वर्धमानस्वरा यथा ॥ ९९ ॥
एकस्वरो द्विस्वरश्च त्रिस्वरोऽथ चतुःस्वरः ।
पञ्चस्वरः षट्स्वरश्च तथा सप्तस्वरोऽपि च ॥ १०० ॥
पूर्वमुक्तमिदं त्वासां ग्रहांशपरिकल्पनम् ।
मध्यमोदीच्यवा जातिस्तथा गान्धारपञ्चमी ॥ १०१ ॥
नन्दयन्ती रतिश्रेष्ठा परमेकांशकाः स्मृताः ।
धैवती पञ्चमी चैव षाडवेन्द्रे प्रकीर्तिते ॥ १०२ ॥
गान्धारोदीच्यवा चाभ्यां समा स्याद्द्व्यंशकेत्यपि ।
आर्षभ्यामृनिधा अंशा निषादी रिनिगास्त्रयः ॥ १०३ ॥
सगपाः षड्जकैशिक्यास्तिस्रोंऽशकाः प्रकीर्तिताः ।
चतुरंशा समनिधा षड्जोदीच्यवती स्मृता ॥ १०४ ॥
कर्मारवी रिपनिधैरान्ध्री रिपनिगः स्मृता ।
सगमपधैः षाड्जी स्यात्पञ्चभिश्चापि मध्यमा ॥ १०५ ॥
सपरिमधैरंशैः स्याद्गान्धारी समगानिपैः ।
तद्वत्स्याद्रक्तगान्धारी चतस्रोंऽशैश्च पञ्चभिः ॥ १०६ ॥
कैशिकी च षडंशा स्यात्सगमपनिधैः स्मृता ।
षड्जमध्या तु सप्तांशा त्रिषष्टिरिति तेंऽशकाः ॥ १०७ ॥
अंशकैः.................................प्रीतिजाः ।
आस्तां प्रयोगकाले तु पुरमाश्रावणाविधिः ॥ १०८ ॥
मार्गैस्त्रिभिः प्रयोक्तव्यश्चित्रवार्तिकदक्षिणैः ।
चतुर्भिर्गीतिभिश्च स्यान्मागध्यादिभिरेव च ॥ १०९ ॥
पूर्वरङ्गे कृते शुद्धे काण्डिकाश्रावणाविधिः ।
आसारितानि पश्चाच्च ततो जात्यंशजल्पनम् ॥ ११० ॥
स्वराणामङ्गहारैः स्यात्पदेष्वभिनयक्रमैः ।
वर्धमापभौविता (?)........................॥ १११ ॥

अंशाः स्युः पञ्च षाड्जाया निषादर्षभवर्जिताः ।
अपन्यासो भवत्यत्र गान्धारः पञ्चमस्तथा ॥ ११२ ॥
न्यासश्चात्र भवेत्षड्जो लोप्यः सप्तम एव तु ।
षाडवं सप्तमोपेतमल्पौ वै सप्तमर्षभौ ॥ ११३ ॥
षड्जगान्धारसंचारस्तथा धैवतषड्जयोः ।
गान्धारस्य च बाहुल्यं त्वत्र कार्यं प्रयोक्तृभिः ॥ ११४ ॥
आर्षभ्यां तु भवन्त्यंशा धैवतर्षभसप्तमाः ।
एत एव ह्यपन्यासा न्यासश्च ऋषभः स्मृतः ॥ ११५ ॥
अल्पत्वं च विशेषेण भवेत्षाडवकारिणः ।
लङ्घनं पञ्चमस्यैव स्यादारोहणसंश्रयात् ॥ ११६ ॥
षट्स्वरं सप्तमहीनं पञ्चस्वर्ये च पञ्चमः ।
विवादिनां स्वराणां च संचारोऽत्र विधीयते ॥ ११७ ॥
धैवत्यां धैवतर्षभावंशौ न्यासः स्याद्धैवतः ।
अपन्यासा भवन्त्यत्र धैवतर्षभमध्यमाः ॥ ११८ ॥
षड्जपञ्चमहीनं च पञ्चस्वर्यं विधीयते ।
पञ्चमेन विना चैव षाडवं परिकीर्तितम् ॥ ११९ ॥
आरोहिणौ च तौ कार्यौ लङ्घनीयौ तथैव च ।
निषादश्चर्षभश्चैव गान्धारो बलवांस्तथा ॥ १२० ॥
निषादिन्यां निषादोंऽशा गान्धारस्त्वर्षभः स्मृतः ।
एत एव ह्यपन्यासा न्यासश्चैवात्र सप्तमः ॥ १२१ ॥
धैवत्या इव कर्तव्यौ षाडवौडविते तथा ।
तद्वच्च लङ्घनीयौ तु बलवन्तौ तथैव च ॥ १२२ ॥
अंशास्तु षड्जकैशिक्यां षड्जगान्धारपञ्चमाः ।
अपन्यासा भवन्त्यत्र षड्जसप्तमपञ्चमाः ॥ १२३ ॥
गान्धारश्च भवेन्न्यासो हीनस्वर्यं न चात्र तु ।
दौर्बल्यं चात्र कर्तव्यं धैवतस्यर्षभस्य च ॥ १२४ ॥

षड्जश्च मध्यमश्चैव निषादो धैवतस्तथा ।
स्युः षड्जोदीच्यवत्यंशा न्यासश्चैव तु मध्यमः ॥ १२५ ॥
अपन्यासो भवत्यस्या धैवतः षड्ज एव च ।
परस्परमिहांशानां संचारश्च विधीयते ॥ १२६ ॥
पञ्चमर्षभहीनं तु पञ्चस्वर्यं तु तत्र वै ।
ऋषभः षाडवे हीनो गान्धारश्च बली भवेत् ॥ १२७ ॥
सर्वेऽशाः षड्जमध्याया अपन्यासास्त एव च ।
षड्जो वा मध्यमो वापि न्यासः कार्यः प्रयोक्तृभिः ॥ १२८ ॥
गान्धारसप्तमोपेतं पञ्चस्वर्यं तु तत्र वै ।
षाडवं सप्तमोपेतं चात्र कार्यं प्रयोगतः ॥ १२९ ॥
सर्वस्वराणां संचार इष्टस्तस्यां प्रयोक्तृभिः ।
षड्जग्रामाश्रया ह्येता विज्ञेयाः सप्त जातयः ॥ १३० ॥
अतः परं प्रवक्ष्यामि मध्यमग्रामसंश्रिताः ।
गान्धार्याः पञ्च स्युरंशा धैवतर्षभवर्जिताः ॥ १३१ ॥
अपन्यासो भवेच्चात्र षड्जः पञ्चम एव च ।
गान्धारोऽत्र भवेन्न्यासः षाडवं चर्षभं विना ॥ १३२ ॥
ऋषभधैवतोपेतं तथा चौडवितं भवेत् ।
लङ्घनीयौ च तौ नित्यमृषभो धैवतं व्रजेत् ॥ १३३ ॥
गान्धारीविहितं न्यासं हीनस्वर्यं च लक्षणम् ॥ १३४ ॥
सर्वं च रक्तपूर्वाया गान्धार्याश्च विनिर्दिशेत् ।
बलिनौ भवतश्चात्र धैवतः सप्तमस्तथा ॥ १३५ ॥
गान्धारषड्जयोश्चैव संचारश्चर्षभं विना ।
अपन्यासस्तथा चात्र एको वै मध्यमः स्मृतः ॥ १३६ ॥
गान्धारोदीच्यवांशौ च विज्ञेयौ षड्जमध्यमौ ।
पञ्चस्वर्यं न चास्त्यत्र षाट्स्वर्यमृषभं विना ॥ १३७ ॥
अस्यास्त्वल्पबहुत्वस्य न्यासापन्यासयोस्तथा ।
यः षड्जोदीच्यवायास्तु सर्वोऽत्र स विधिः स्मृतः ॥ १३८ ॥

मध्यमायां भवन्त्यंशा विना गान्धारसप्तमौ ।
एत एव ह्यपन्यासा न्यास एव हि मध्यमः ॥ १३९ ॥
गान्धारसप्तमोपेतं पञ्चस्वर्यं विधीयते ।
षाट्स्वर्यं चाप्यगान्धारं कर्तव्यं तु प्रयोगतः ॥ १४० ॥
षड्जमध्यमयोश्चात्र कार्यं बाहुल्यमेव च ।
गान्धारलङ्घनं चात्र नित्यं कार्यं प्रयोक्तृभिः ॥ १४१ ॥
मध्यमोदीच्यवायास्तु पञ्चमोंऽशः प्रकीर्तितः ।
शेषो विधिस्तु कर्तव्यो गान्धारोदीच्यवां गतः ॥ १४२ ॥
द्वावंशावथ पञ्चम्या ऋषभः पञ्चमस्तथा ।
संनिषादावपन्यासौ न्यासश्चैवात्र पञ्चमः ॥ १४३ ॥
मध्यमायां तु कर्तव्ये षाडवौडविते तथा ।
दौर्बल्यं चात्र विज्ञेयं षड्जगान्धारपञ्चमैः ॥ १४४ ॥
कुर्यादस्यां च संचारं पञ्चमस्यर्षभस्य च ।
गान्धारगमनं चैव कार्यमल्पश्च सप्तमः ॥ १४५ ॥
अथ गान्धारपञ्चम्याः पञ्चमोंऽशः प्रकीर्तिताः ।
पञ्चमश्चर्षभश्चैव अपन्यासौ प्रकीर्तितौ ॥ १४६ ॥
न्यासश्चात्र तु गान्धारः स च पूर्णस्वरो भवेत् ।
गान्धारपञ्चमाभ्यां च संचारोऽत्र विधीयते ॥ १४७ ॥
ऋषभः पञ्चमश्चैव गान्धारोऽथ निषादवान् ।
चत्वारोंऽशा भवन्त्यान्ध्यामपन्यासास्त एव तु ॥ १४८ ॥
गान्धारश्च भवेन्न्यासः षड्जोपेतं च षाडवम् ।
गान्धारर्षभयोश्चापि संचारस्तु परस्परम् ॥ १४९ ॥
सप्तमस्य च षड्जस्य न्यासो गत्यनुपूर्वशः ।
षड्जस्य लङ्घनं कार्यं नास्ति चौडवितं सदा ॥ १५० ॥
नन्दयन्त्याः क्रमान्न्यासस्त्वपन्यासोंऽश एव च ।
गान्धारो मध्यमश्चैव पञ्चमश्चेति नित्यशः ॥ १५१ ॥

षड्जेनांशो लङ्घनीय आन्ध्रीसंचार इष्यते ।
लङ्घनमृषभस्यात्र तच्च मन्द्रगतं स्मृतम् ॥ १९२ ॥
तारगत्या तु षड्जः स्यात्कदाचिन्नातिवर्तते ।
गान्धारश्च ग्रहः कार्यस्तथा न्यासश्च नित्यशः ॥ १९३ ॥
कर्मारव्याः स्मृता ह्यंशा ऋषभः पञ्चमस्तथा ।
धैवतश्च निषादश्चाप्यपन्यासास्त एव तु ॥ १९४ ॥
पञ्चमश्च भवेन्न्यासो हीनस्वर्यं न चात्र तु ।
गान्धारस्य विशेषेण सर्वतो गमनं भवेत् ॥ १९५ ॥
कैशिक्यांशास्तु विज्ञेयाः स्वराः सर्वेऽर्षभं विना ।
एत एव ह्यपन्यासा न्यासौ गान्धारसप्तमौ ॥ १९६ ॥
धैवतेंऽशे निषादे च न्यासः पञ्चम इष्यते ।
अपन्यासः कदाचिच्च ऋषभोऽपि भवेदिह ॥ १९७ ॥
आर्षभ्यं षाडवं चात्र धैवतर्षभवर्जितम् ।
तथा चौडवितं कार्यं बलिनौ षड्जपञ्चमौ ॥ १९८ ॥
दौर्बल्यमृषभस्यात्र लङ्घनं च विशेषतः ।
षड्जमध्यावदत्रापि संचारस्तु भवेदिह ॥ १९९ ॥
एवमेता बुधैर्ज्ञेया जातयो दशलक्षणाः ।
स्वस्वैश्च करणैर्योज्याः पदेष्वभिनयैरपि ॥ १६० ॥
आसामिदानीं वक्ष्यामि रसभावविल्पनम् ।
यथा यस्मिन्रसे यश्च तत्त्वं मे संनिबोधत ॥ १६१ ॥

इति भारतीये नाट्यशास्त्रे जातिलक्षणो नामाध्यायोऽष्टाविंशतितमः ।

---

एकोनत्रिंशत्तमोऽध्यायः ।

षड्जोदीच्यकरं चैव बहुमध्यं तथैव च ।
मध्यपञ्चमबाहुल्यात्कार्यं शृङ्गारहास्ययोः ॥ १ ॥
षाड्जी त्वथार्षभी चैव स्वरांशपरितस्पृहात् ।
वीररौद्राद्भुतेष्वेते प्रयोज्यो(ज्या) गानयोक्तृभिः ॥ २ ॥

निषादं शेषनैवादी गान्धारो(?) षड्जकैशिकी ।
करुणे च रसे कार्या जातिर्गानविशारदैः ॥ ३ ॥
धैवती धैवतांशे तु बीभत्से सभयानके ।
धैवती करुणे योज्या चोन्मादे षड्जमध्यमाः ॥ ४ ॥
ध्रुवा विधाने कर्तव्या जातिगाने प्रयत्नतः ।
षड्जग्रामाश्रिता ह्येताः प्रयोज्या जातयो बुधैः ॥ ५ ॥
अतः परं प्रवक्ष्यामि मध्यमग्रामसंश्रयाः ।
गान्धारीरक्तगान्धार्यागान्धारांशोपपत्तितः ॥ ६ ॥
करुणे तु रसे कार्यो निषादेंऽशे तथैव च ।
मध्यमा पञ्चमी चैव नन्दयन्ती तथैव च ॥ ७ ॥
गान्धारपञ्चमी चैव मध्योदीच्यवती तथा ।
मध्यपञ्चमबाहुल्यात्कार्यो(?) शृङ्गारहास्ययोः ॥ ८ ॥
कर्मारवी तथा चान्ध्री गान्धारोदीच्यवा तथा ।
वीररौद्रेऽद्भुते कार्या षड्जर्षभांशयोजिता ॥ ९ ॥
कैशिकी धैवतांशा स्याद्बीभत्से सभयानके ।
एकैव षड्जमध्या ज्ञेया सर्वरससंश्रया जातिः ।
तस्यास्त्वंशा सर्वे स्वरास्तुविज्ञेया(स्तु गेयाः) प्रयोगविधौ ॥ १० ॥
यो यदा बलवान्यस्मिन्स्वरो जातिसमाश्रयः ।
तत्प्रवृत्ते रसे कार्यं गानं गेये प्रयोक्तृभिः ॥ ११ ॥
मध्यपञ्चमभूयिष्ठं गानं शृङ्गारहास्ययोः ।
षड्जर्षभप्रायकृतं वीररौद्राद्भुतेषु च ॥ १२ ॥
गान्धारः सप्तमप्रायः करुणे गानमिष्यते ।
तथा धैवतभूयिष्ठं बीभत्से सभयानके ॥ १३ ॥
एकैव षड्जमध्या ज्ञेया तु सकलरसाश्रया जातिः ।
तस्या ह्यंशाः सर्वे स्वराश्च विहिताः [1]प्रयोगविधौ ॥ १४ ॥

---

१. 'प्रयोगविहिताः प्रयोगविधौ' क-ख.

सर्वेष्वंशेषु रसा नियमविधानेन संप्रयोक्तव्याः ।
काकल्यन्तरविहिता विशेषयुक्तास्तु बलवन्तः ॥ १५ ॥
एवमेता बुधैर्ज्ञेया ज्ञातयो नाट्यसंश्रयाः ।
अत ऊर्ध्वं प्रवक्ष्यामि वर्णालंकारलक्षणम् ॥ १६ ॥
आरोही चावरोही च स्थायी(यि)संचारिणौ तथा ।
वर्णाश्चत्वार एवैते ह्यलंकारास्तदाश्रयाः ॥ १७ ॥
आरुहन्ति स्वरा यत्र **आरोही** स तु संज्ञितः ।
यत्र [1]चैवावरोही च **सोऽवरोही**ति भण्यते ॥ १८ ॥
स्थिराः स्वराः समा यत्र **स्थायी** वर्णः स उच्यते ।
संचरन्ति स्वरा यत्र स **संचारी**ति कीर्तितः ॥ १९ ॥
शारीरस्वरसंभूतस्त्रिस्थानगुणगोचरः ।
चत्वारो लक्षणोपेता वर्णास्तत्र प्रकीर्तिताः ॥ २० ॥
एवं लक्षणसंयुक्तं यदा वर्णौ तु कर्षति ।
तदा वर्णस्य निष्पत्तिर्विज्ञेया रससंभवा ॥ २१ ॥
एते वर्णास्तु विज्ञेयाश्चत्वारो गीतयोजकाः ।
एतानेवाश्रुतो(तान्) भूयो ह्यलंकारान्निबोधत ॥ २२ ॥
प्रसन्नादिः प्रसन्नान्तः प्रसन्नाद्यन्त एव च ।
प्रसन्नमध्यश्च तथा क्रमरो(रे)चित एव च ॥ २३ ॥
प्रस्तारश्च प्रसादश्च **स्थायिवर्ण**समाश्रयः ।
अथ **संचारिता**न्भूयः कीर्त्यमानान्निबोधत ॥ २४ ॥
मन्द्रस्तथा प्रसन्नादिबिन्दुः प्रेङ्खोलितस्तथा ।
संनिवृत्तप्रवृत्तश्च रेचितः कम्पितः स यः ॥ २५ ॥
[2]कुंदरश्चैव वेणुश्च रञ्जिता ह्यवलोकितः ।
आवर्तितः परावृत्तौ ज्ञेयः **संचारिण**स्तथा ॥ २६ ॥
निष्कर्षोऽत्युच्चयश्चैव हसितो बिन्दुरेव च ।
प्रेङ्खोलितस्तथाक्षिप्तो विस्तीर्णो व्यालितस्तथा ॥ २७ ॥

---

१. 'चैवावरोहन्ति' इति भवेत्. २. 'कुहर' इति त्वग्रे.

[नि]स्पन्दमानः संप्रदानः संधिः प्रच्छादनस्तथा ।
प्रसन्नादिः प्रसन्नान्त इति **वारोहिणः** स्मृताः ॥ २८ ॥
विधूतः स्यान्त्रिवर्णश्च तथोद्वाहित एव च ।
ऊहितश्च तथा वेणिर्विज्ञेया **ह्यवरोहिणः** ॥ २९ ॥
सप्तरूपगता ज्ञेया अलंकारास्त्विमे बुधैः ।
नैतेऽस्माकं ध्रुवास्विष्टा अतिवर्णप्रकर्षणैः ॥ ३० ॥
ते ध्रुवाणां प्रयोगे तु कार्या ह्यारोहिणः स्वराः ।
यस्मादर्थानुरूपादिध्रुवा काव्यार्थदर्शिकाः ॥ ३१ ॥
वर्णानां तु मुने कार्यं कृशत्वं पदसंश्रयम् ।
यत्र प्रयोगे यच्छन्ति तांश्च वर्णान्निबोधत ॥ ३२ ॥
प्रसन्नादिः प्रसन्नान्तः प्रसन्नाद्यन्त एव च ।
प्रसन्नमध्यश्च तथा बिन्दुः कम्पितरेचितौ ॥ ३३ ॥
प्रेङ्खोलितस्तथा मन्द्रो मन्द्रतारः समस्तथा ।
स्यान्निवृत्तः प्रवृत्तश्च प्रसादोऽपाङ्ग एव च ॥ ३४ ॥
ऊर्मिखोषावलोकश्चेत्पि(?)त्येके सर्ववर्णगाः ।
**स्थायि**वर्णा इवैतेषां संप्रवक्ष्यामि लक्षणम् ॥ ३५ ॥
क्रमशो दीपितो यः स्यात्**प्रसन्नादिः** स कथ्यते ।
व्यस्तोच्चारित एवैष **प्रसन्नान्तो** विधीयते ॥ ३६ ॥
आद्यन्तयोः प्रसम(द)नात्**प्रसन्नाद्यन्त** इष्यते ।
**प्रसन्नमध्यो** मध्ये तु प्रसन्नः स्यादुदाहृतः ॥ ३७ ॥
सर्वसाम्यात्**समो** ज्ञेयः स्थितस्त्वेकस्वरेऽपि यः ।
श्रुतयोऽन्या द्वितीयस्या मृदुमध्यायताः स्मृताः ॥ ३८ ॥
**आयतत्वं** तु चेन्नीचं **मृदुत्वं** तु विपर्ययम् ।
स्वस्वरे **मध्यमत्वं** च श्रुतीनामेष निर्णयः ॥ ३९ ॥
दीप्त्यायते करुणानां मृदुमध्यमयोस्तथा ।
**बिन्दु**रेककलो ज्ञेयः **कम्पित**श्च कलाद्वयम् ॥ ४० ॥

[1]
.............................................. ।
गतागतप्रवृत्तो यः स **प्रेङ्खोलित** इष्यते ।
यस्य कण्ठे स्वरोऽथ स्यात्स तु **तारः** प्रकीर्तितः ॥ ४१ ॥
उरोगतस्तथा **मन्द्रो** मूर्ध्नि मन्द्रप्रचारतः ।
क्रमागतस्तु यस्तारः षष्ठः पञ्चम एव च ॥ ४२ ॥
तारमन्द्रप्रसन्नेसु(षु) ज्ञेयो मन्द्रगतस्य च ।
लङ्घयित्वा परान्मन्दात्परां तारगतिं गतः ॥ ४३ ॥
**मन्द्रतारः** प्रसन्नस्तु विज्ञेयो ह्यवरोहणात् ।
[2]प्रसन्नान्तःस्वरो यत्र **प्रसादः** स तु संज्ञितः ॥ ४४ ॥
**अपाङ्गिकस्तु** विज्ञेयः स्वराणामथ संचरात् ।
रेचितः शिरसि ज्ञेयः कम्पितस्तु कलात्रयम् ॥ ४५ ॥
कण्ठे निरुद्धपवनः [3]**कुहरो** नाम जायते ।
एवमेते त्वलंकारा विज्ञेया वर्णसंश्रयाः ॥ ४६ ॥
अथातः संप्रवक्ष्यामि छन्दोक्षरसमन्विताः ।
शशिना रहितेव निशा विजलेव नदी लता विपुष्पेव ।
[4]अनलक्ष्यते च नारीगीतिरलंकारहीना स्यात् ॥ ४७ ॥
प्रथमा मागधी ज्ञेया द्वितीया त्वर्धमागधी ।
संभाविता तृतीया च चतुर्थी पृथुला स्मृता ॥ ४८ ॥
विनिवृत्तप्रवृत्ता या सा ज्ञेया **मागधी** बुधैः ।
अर्धतः संनिवृत्ता च विज्ञेया **ह्यर्धमागधी** ॥ ४९ ॥
**संभाविता** च विज्ञेया गुर्वक्षरसमन्विता ।
लघ्वक्षरकृता या तु **पृथुला** सा प्रकीर्तिता ॥ ५० ॥
एतास्तु गीतयो ज्ञेया ध्रुवयोगं विनैव हि ।
गीतयो गदिताः सम्यग्धातूंश्चैव निबोधत ॥ ५१ ॥

---

१. रेचितलक्षणं त्रुटितं भवेत्. २. इतः प्राक् प्रवृत्त-निवृत्तलक्षणं त्रुटितं भवेत्. ३. 'कुदरः' इति प्राक्. ४. 'अभावे नह्यनो नापि' इत्यत्र "अनशब्दोऽपि निषेधे 'अनोपमा ते बुद्धिः' इति मुकुटपीयूषव्याख्यायामुपलम्भात् 'न लक्ष्यते' इत्येवार्थः प्रतिभाति.

विस्तारः करणश्च स्यादाविद्धो व्यञ्जनस्तथा ।
चत्वारो धातवो ज्ञेयाश्चाद्यन्तकरणाश्रयाः ॥ ९२ ॥
संघातजोऽथ समवायजश्च विस्तारजोऽनुबन्धकृतः ।
ज्ञेयश्चतुःप्रकारो धातुर्विस्तारसंज्ञश्च ॥ ९३ ॥
विधयस्तु स्मृतास्तस्य पूर्वं विस्तार एव च ।
संघातसमवायौ तु विज्ञेयौ च द्विकत्रिकौ ॥ ९४ ॥
पूर्वश्चतुर्विधस्तत्र पश्चिमोऽष्टविधः स्मृतः ।
करणानां विशेषेण विज्ञेया वै पृथक्पृथक् ॥ ९५ ॥
अधश्चोर्ध्वे च विज्ञेयावधरोत्तरजौ स्वरौ ।
संघातजो विधिस्त्वेष विज्ञेया वदनं प्रति ॥ ९६ ॥
द्वावृ(वु)त्तरौ द्विरधरस्व(?)धरादिस्वात्तरावसानश्च ।
ज्ञेयः प्रयोत्तरादिः(?) पुनरप्यधरावसानश्च ॥ ९७ ॥
समवायजस्तथा स्यात्रिरुत्तरधरश्च विज्ञेयः ।
द्विरथोत्तराधरान्तौ द्विरधरश्चोत्तरविरामश्च ॥ ९८ ॥
द्विरथोत्तरर(त्तरा)वसानोऽधरादिरुत्तरमुखो द्विरधरश्च ।
मध्योत्तरो द्विरधरो द्विरुत्तरोऽप्यधरमध्यश्च ॥ ९९ ॥
अनुबन्धस्तु ज्ञेयो व्याससमासात्त्व(?)नियतमेवादि ।
एवं चतुर्दशविधौ नित्यं **विस्तार**धातुः स्यात् ॥ ६० ॥
(?)रिमिदितोघनीचरदितहृदोस्वतथानुबन्ध एवं स्यात् ।
(?)एवंविधोऽपि विज्ञेयो वीणावाद्ये करणधातुः ॥ ६१ ॥
त्रिकपञ्चसप्तनवकैर्यथाक्रमं स मुनो(?)भवेद्वाद्ये ।
सर्वैरनुबन्धकृतैर्गुर्वन्तः स्यात्**करण**धातुः ॥ ६२ ॥
क्षेपः स्तु(प्लु)ता····नियतोऽतिकीर्णमनुबन्धसंज्ञितश्चैव ।
आविद्धो विज्ञेयो धातुर्वै पञ्चविध एव ॥ ६३ ॥
द्विस्त्रिश्चातुष्कनवकैः प्रहारैः क्रमशः शनैः ।
**आविद्ध**धातुर्विज्ञेयः सानुबन्धविभूषितः ॥ ६४ ॥

**व्यञ्जनधातोः** पुष्पं कलतलनिष्कोटितं तमोघृ(थोद्धृ)ष्टम् ।
रेफानुबन्धसंज्ञोऽनुस्वनितं बिन्दुरवमृष्टम् ॥ ६५ ॥
कनिष्ठाङ्गुष्ठसंयुक्तं **पुष्प**मित्यभिधीयते ।
अङ्गुष्ठाभ्यां समं तत्रो(?) स्पर्शनं य(त्)**कलं** तु तत् ॥ ६६ ॥
वामेन पीडनं कृत्वा दक्षिणेनाहति**स्तले**(**लम्**) ।
सव्याङ्गुष्ठप्रहारस्तु **निष्कोटित**मिहेष्यते ॥ ६७ ॥
प्रहारो वामतर्जन्या**मङ्गु**(**मुद्धृ**)**ष्ट**मिति संज्ञितम् ।
सर्वाङ्गुलिसमाक्षेपे **रेफ** इत्यभिसंज्ञितः ॥ ६८ ॥
तलस्थानेऽथ तन्त्रीणा**मनुस्तनित**मुच्यते ।
गुर्वक्षरकृता तन्त्री **बिन्दु**रित्यभिसंज्ञितः ॥ ६९ ॥
कनिष्ठाङ्गुष्ठकाभ्यां तु दक्षिणा····मधोमुखम् ।
तन्त्रीषु त्रिप्रहारं वा**प्यवमृष्टं** प्रकीर्तितम् ॥ ७० ॥
व्याससमासा देष्टा(?)**मनुबन्धः** सर्वधातुको ज्ञेयः ।
इति दशविधः प्रयोज्यो वीणायां **व्यञ्जको** धातुः ॥ ७१ ॥
इत्येते धातवः प्रोक्ताश्चत्वारो लक्षणान्विताः ।
तिसृणामपि वृत्तीनां यस्तु(त्तु) वाद्यं प्रतिष्ठितम् ॥ ७२ ॥
तिस्रस्तु वृत्तयश्चित्रा दक्षिणावृत्तिसंज्ञिताः ।
वाद्यगीतोभयगुणा निर्दिष्टास्ता यथाक्रमम् ॥ ७३ ॥
सर्वासामेव वृत्तीनां ललिताद्यास्तु जातयः ।
धातुभिः सह संभक्ता भवन्ति गुणवत्तराः ॥ ७४ ॥
एतेषां धातूनां समवाया[ज्]जातयस्तु जायन्ते ।
स्यात्स्वादुदात्तललितरिभितघनसंज्ञाश्चतस्रश्च ॥ ७५ ॥
**तत्रोदात्ता** विस्तारधातुविषया बहुविषयत्वाद्वा ।
**ललिता** व्यञ्जनहेतोर्ललितत्वादेव संप्रोक्ता ॥ ७६ ॥
आविद्धधातुविषया **रिभित**र्घातसंचयाद्विनिर्दिष्टा ।
करणविषया **घन**संज्ञा गुरुलघुसंचयात्तस्य ॥ ७७ ॥

त्रिविधं गीते कार्यं वाद्यं वीणासमुद्भवं तज्ज्ञैः ।
तत्त्वं [तथा] ह्यनुगतमोघश्चानेककरणसमायुक्ताः ॥ ७८ ॥
लयतालवर्णपदयतिगीत्यक्षरभावकं च यत्तत्त्वम् ।
गीतं तु यदनुगच्छत्यनुगतमिति तज्झे(ज्ज्ञ)वनवाद्यम् ॥ ७९ ॥
आविद्धकरणबहुलं ह्युपर्युपरिपाणिकं द्रुतलयं च ।
अनपेक्षितगीतार्थं वाद्यं त्वोघे विधातव्यम् ॥ ८० ॥
एवं ज्ञेया वैणवाद्यविधाने तु धातवस्तज्ज्ञैः ।
वक्ष्याम्यतःपरमहं निगीतविधानसमवायम् ॥ ८१ ॥
आश्रावणातथारम्भो वक्रपाणिस्तथैव च ।
संखोटता तथा कार्या मुनेश्च परिदेवनम् ॥ ८२ ॥
मार्गासारितमन्यत्स्याल्लीलाकृतमथापि च ।
आसारितानि च तथा त्रिप्रकारकृतानि तु ॥ ८३ ॥
एतानि च बहिर्गीतान्यादौ योज्यानि योक्तृभिः ।
सत्त्वान्यलापतालानि त्त्रित्तवृत्तौ स्मृतानि च ॥ ८४ ॥
प्रयोजनं च तज्ज्ञेयं पूर्वरङ्गविधौ मया ।
एतेषां संप्रवक्ष्यामि दर्शनानि यथाक्रमम् ॥ ८५ ॥

त(अ)थाश्रावणा नाम—

विस्तारधातुविहितैः करणैः प्रविभागशो द्विरभ्यस्तैः ।
द्विस्यपि(?)संनिवृत्तैः करणो(?)पञ्चमैः क्रमेण स्यात् ॥ ८६ ॥
गुरुणात्यदा(?)वेकादशं च सचतुर्दशं सपञ्चदशम् ।
सचतुर्विंशकामयद्विगुणीकृतमेतदेव स्यात् ॥ ८७ ॥
लघुगुरुणी च ततः स्यादष्टं तथाष्टमं गुरु भवेत्तथा च पुनः ।
षट् च लघूनि तथान्त्यं गुरु बाह्याश्रावणायां तु ॥ ८८ ॥
(?)त्रिःशम्योपरिपाणौ पित्त्वोववाममेव चैककवान ।
(?)समपाणौ द्वे साम्यतालौ वाम्ये वमे वाथ भूषय ॥ ८९ ॥

---

१. 'पुनश्च परिघट्टना' इत्यग्रिमग्रन्थानुसारी पाठः.

(?)शम्या तालावचयाणापुत्वरस्तथा चैव ।
(?)वच्चत्पुरस्तथा स्यादेवं ह्याश्रावणातालः ॥ ९० ॥

अत्रोदाहरणम्—

(?) क्रुंदुं जगति यवलितकजम्बुकञ्रंरतितिसलकुचसलवादिर्द्रिंगणपति । पशुपति कञ्चुकदिंद्देपरभुञ्जदिगिनिगिवादिगिवादिगिवादिगिगिनि[1] च पशुपति ति च ॥

अथारम्भः—

दीर्घाण्यादावष्टौ द्वादश च लघूनि नैधनं चैव ।
चत्वारि गुरूणि तथा ह्रस्वान्यष्टौ च दीर्घं च ॥ ९१ ॥
लघुसंज्ञानि चतुर्था निधनद्विगुणीकृतानि दीर्घ(र्घोऽ)न्ते ।
अष्टौ लघूनि नैधनमित्यारम्भेक्षरविधानम् ॥ ९२ ॥

यथा—

कार्यं त्रिपर्वविहितैरुद्वहनैरप्यधःसमवरोहैः ।
तलरिभि तद्भादयुतैः करणैर्विस्तारभूयिष्ठैः ॥ ९३ ॥
अपचययुक्तैर्द्विस्त्रिस्तथा निवृत्तैस्तथा द्विरभ्यस्तैः ।
आरम्भोऽस्य वतरणत्रिपर्वयुक्तैश्च कर्तव्यः ॥ ९४ ॥

[अस्योदाहरणम्—]

ञ्रंजं दुड्ड जगति अवलिनकदिगिवा दिंजेतिनिकालकुचकुशजम्बुकं तिनिवा । आगणपति पशुपति [वा[2] आगणपति पशुपति] वा ॥

अस्य तु वाद्यम्—

तालस्त्रिकलस्त्वादो[3] शम्यैककला कलाद्वये तालाः ।
द्विकला च पुनर्व्यञ्जनधातुविधिर्वक्रपाणौ तु ॥ ९५ ॥
द्विकालमद्रके यत्र शम्यातालादि योजितम् ।
तत्सर्वं वक्रपाणौ तु कार्यमष्टकलान्वितम् ॥ ९६ ॥

---

१. 'दिनिनि च' ख.　२. ख-पुस्तके दृश्यते.　३. 'स्त्वादौ' इति भवेत्.

अथवा—

द्विकले मद्रके यत्र शम्यातालादियोजितम् ।
तत्सर्वं वैंक्रपाणौ तु कार्यमष्टकले मुखे ।
तस्याधस्तात्पुनः कार्यं पञ्चपाणिचतुष्टयम् ॥ ९७ ॥

अथ संखोटना[ना]सु—

गुरुणी लघून्यथाष्टौ दीर्घं द्विगुणं तथा च कर्तव्यम् ।
लघुदीर्घे लघु च पुनश्चतुर्गुणं संप्रकर्तव्यम् ॥ ९८ ॥
पुनरष्टौ ह्रस्वानि स्युरिह तथा नैधनं च कर्तव्यम् ।
संखोटनवस्तुविधौ ह्रस्वगुरुविधिः समुद्दिष्टः ॥ ९९ ॥

अस्य वाद्यविधिः—

अधिदण्डहस्तशम्या ताला·········द्विकलश्च कर्तव्यः ।
द्विकलश्च संनिपातः पुनः पितापुत्रकम्पपपूर्वः(?) ॥ १०० ॥
विश्वक्पुरस्तथा चेत्यारम्भे तालयोगस्तु ।
........................................................ ॥ १०१ ॥

अथ वैंक्रपाणिः—

गुरूणि पञ्च ह्रस्वानि षट् स्वरश्च [च]तुर्गुणः ।
गुरुणी द्वे लघु त्वेकं चत्वार्यथ गुरूणि च ॥ १०२ ॥
चत्वार्यथ गुरूणि स्युस्त्रीणि दीर्घाणि चैव हि ।
लघून्यष्टौ च दीर्घं च वैंक्रपाणौ भवेद्विधिः ॥ १०३ ॥

अत्रोदाहरणम्—

दिग्भिःकुंदुंजंबुकगजपतियाः ऋतुङ्गादिद्र्येड्डघिषि ट्टुनकिटिङ्नादुंघट्टु-वट्टकिटिमटदु ॥

अस्य वाद्यम्—

आविद्धकरणयुक्ताद्वाङ्गः स्यादेककः प्रवृत्तो वा ।
संखोटय स्वरं यादिना तु संवादिना तथाधिवलम् ॥ १०४ ॥

---

१–२–३. 'चक्र' क-ख.

समवायिभिश्च शेषा नतु वादिभिरल्पकैश्चांशैः ।
विस्तारकरणे चित्रद्वित्रिविभिषवर्ती तो द्विरभ्यस्तैः ।
उपाश्रययुक्तौ च सदा वदन्ति संखोटनावाद्यम् ॥ १०५ ॥

अस्य लघुक्रिया—

गुरुणी लघून्यथाष्टौ दीर्घे द्विगुणे तथा च कर्तव्या ।
लघुदीर्घे लघु च पुनश्चतुर्गुणं संप्रवक्तव्यम् ॥ १०६ ॥
पुनरस्यैद्भ्रस्याणिस्यस्तूतै नैधनं तथा कार्यम् ।
संखोटनवस्तुविप्रत्वमशोधनं········ ॥ १०७ ॥

झंडं जगति यवलितकडुंटुडुंटुं महायोगिक्षुकक्रपलयासुपतिगणपतिक ।

अस्यास्तानः—शीर्षकवपाणिविहितः ।

अथ परिघट्टना—

········समुत्थं वाद्यं········ऊहस्तु वादनाकार्यम् ।
व्यञ्जनधातुसमुत्थं नानाकरणायोवत···· ॥ १०८ ॥
दीर्घाण्यादावष्टौ लघूनि कुर्यात्पुनर्द्विगुणितानि ।
ह्रस्वान्यपि चत्वारि द्विगुणानि स्युः सदीर्घाणि ॥ १०९ ॥
षोडश लघूनि च स्युः सह निधनगतेन वात्र कार्याणि ।
एष परिघट्टनायां गुरुलघुवसुक्रमः प्रोक्तः ॥ ११० ॥
वाद्यं चास्य तु तज्ज्ञैः सोद्वहनं हस्तलाघवात्कार्यम् ।
व्यञ्जनधातुसमुत्थं नानाकारणाश्रयोपेतम् ॥ १११ ॥
संपिष्टकवज्ञास्यास्तालः करणैस्तु धातुसंयुक्तैः ।
गुरुलघुयोगादेवं विहितं कार्यं बुधैर्नित्यम् ॥ ११२ ॥
**मार्गासारितपाद्यं**[1] विस्ताराविद्धकरणसंयुक्तम् ।
तालैः सकलैरथ गुरुलघुसंचयस्यायम् ॥ ११३ ॥
चत्वारि गुरूणि लघूनि च चत्वारि च गुणितानि ।
ह्रस्वानि गुरूणि तथा स्युर्मार्गासारिते ह्येवम् ॥ ११४ ॥

अत्रोदाहरणम्—

दिग्लत्संटुं जगति पचतिनकदिह्ले संटुं ।

---

१. 'माद्यं' इति भवेत्.

अथ वा ।

चत्वारि तु गुरूणि स्युर्ह्रस्वान्यष्टौ भवन्ति हि ।
गुरूणि तव ह्रस्वाणि दीर्घमत्यमथापि वा ॥ ११५ ॥

अत्राप्युदाहरणम्—

दिकंटुं जगति यवति यवलि । ऋंदुं तिति ऋल कुलतिति वा ॥
बालासारितवश्चैव ताभौ(?)स्य परिकीर्तिता ।
........................................॥ ११६ ॥

श्रवणमधुराणि **लीलाकृता**नि सृतपरिसृतेतरकृतानि ।
तान्यप्यर्थवशादिह कर्तव्यानि प्रयोगज्ञैः ॥ ११७ ॥

अथासारितानि ज्येष्ठमध्यकनिष्ठानि तलप्रमाणनिर्दिष्टानि तानि च तालविधाने व्याख्या[स्या]मः—

एवमेतत्स्वरकृतं ज्ञेयं वीणाशरीरजम् ।
विपञ्च्याद्यनुवक्तानि (?) करणानि निबोधत ॥ ११८ ॥
रूपं कृतप्रतिकृतं प्रतिभेदो रूपशेषमोघश्च ।
षष्ठी वै प्रतिशुक्ला त्वेवं विज्ञेयं करणजातम् ॥ ११९ ॥
वीणावाद्यद्विगुणं गुरुलाघववादनं भवेद्रूपम् ।
(?) रूपमेवानुकृत**प्रतिन्यून**मित्युच्यते वाद्यम् ॥ १२० ॥
युगपत्कृतेऽन्यविकरणं **प्रतिभो(भेदो)** दीर्घलाघवकृतः स्यात् ।
कृतमेकस्यान्त आ····**प्रतिशुक्ं** नाम विज्ञेयम् ॥ १२१ ॥
वीणावाद्यविरामेऽस्य विरतकरणं तु **रूपशेषं** स्यात् ।
आविद्धकरणयोगादुपर्युपरिपाणिकैश्चोद्यः ॥ १२२ ॥
कार्यं ध्रुवाविधानेन प्रायेण हि कोणवादनं तज्ज्ञैः ।
स्थानप्राप्त्यर्थं चेद्यत्तत्त भवेदयं नियमः ॥ १२३ ॥
सप्ततन्त्रीभवे चिन्ता विपञ्चीभिभवे तथा ।
कोणवाद्या **विपञ्ची** स्याद्वित्रा चाङ्गुलिवादनात् ॥ १२४ ॥
ततवाद्यविधानमिदं सर्वं प्रोक्तं मया समासेन ।
वक्ष्याम्यतश्च भूयाः शुषिरातोद्यस्य लक्षणम् ॥ १२५ ॥

इति भारतीये नाट्यशास्त्रे ततोद्यतिजातिविधानो नामाध्याय एकोनत्रिंशत्तमः ।

---

१. 'कृतप्रतिकृत' इति भवेत्.

त्रिंशत्तमोऽध्यायः ।

आतोद्यं शुषिरं नाम ज्ञेयं वंशगतं बुधैः ।
वैण एव विधिस्तत्र स्वरग्राम्यसमाश्रयः ॥ १ ॥
द्विकत्रिकचतुष्कास्तु ज्ञेया वंशगताः स्वराः ।
कम्पमानार्धमुक्ताश्च व्यक्तमुक्तास्तथैव च ॥ २ ॥
तत्रोपरि यथा ह्येकः स्वरो वैणः स्वरोत्तरे ।
प्राप्नोत्यन्यत्वमेवाह तथा वंशगतोऽपि हि ॥ ३ ॥
द्विकस्त्रिकश्चतुष्को वा श्रुतिसंख्या भवेत्स्वरः ।
अनीरणात्तु शेषाणां स्वराणां श्रुतिसंभवः ॥ ४ ॥
अङ्गुलीवादनकृतस्तच्चामे संनिबोधत ।
व्यक्तमुक्ताङ्गुलिस्तत्र स्वरो ज्ञेयश्चतुःश्रुतिः ॥ ५ ॥
कम्पमानाङ्गुलिश्चैव त्रिश्रुतिः परिकीर्त्यते ।
द्विकार्धाङ्गुलिमुक्तः स्यादिति श्रुत्याश्रिताः स्वराः ॥ ६ ॥
एते स्युर्मध्यमग्रामे भूयः षड्जाश्रिताः पुनः ।
व्यक्तमुक्ताङ्गुलिकृताः षड्जमध्यमपञ्चमाः ॥ ७ ॥
धैवतश्चार्षभश्चापि कम्पमानाङ्गुलीकृतौ ।
अर्धमुक्ताङ्गुलिश्चैव गान्धारोऽथ निषादवान् ॥ ८ ॥
स्वरसाधारणं चापि ञ्यन्तरस्वरसंस्थया ।
निषादगान्धारकृतौ षड्जमध्यमयोरपि ॥ ९ ॥
विपर्ययः संनिकर्षे श्रुतिलक्षणसिद्धिदः ।
वैणकं तु प्रवेशेन सिद्धाः कण्ठाश्रिताः स्वराः ॥ १० ॥
येयं[1] गीता स्वरं गच्छेत्तं तं वंशेन वादयेत् ।
शारीरवैणवंशानामेकीभावः प्रशस्यते ॥ ११ ॥
अविचलितमविकृष्टं वर्णालंकारसंयुतं विधिवत् ।
ललितं मधुरं स्निग्धं वेणोरेवंविधं वाद्यम् ॥ १२ ॥

---

१. 'यं यं गाता' इति भवेत्.

एवमेतत्स्वरकृतं विज्ञेयं गानयोक्तृभिः ।
अत ऊर्ध्वं प्रवक्ष्यामि तालवाद्यविकल्पनम् ॥ १३ ॥

इति भारतीये नाट्यशास्त्रे शुषिरातोद्याधिकारो नामाध्यायस्त्रिंशत्तमः ।

---

एकत्रिंशोऽध्यायः ।

वाद्यं तूर्यायनं प्रोक्तं कलापातलयान्वितः ।
कलास्तस्य प्रमाणं हि विज्ञेयं तालयोगतः ॥ १ ॥
या लौकिकी कला काष्ठा निमेषश्च स्मृतो बुधैः ।
न सा तालकला ज्ञेया ह्यन्यैषा तालजा कला ॥ २ ॥
निमेषाः पञ्च विज्ञेया गीतकाले कलान्तरम् ।
ततः कलाकालकृतो लय इत्यभिसंज्ञितः ॥ ३ ॥
त्रयो लयास्तु विज्ञेया द्रुतमध्यविलम्बिताः ।
यस्तत्र तु लयो मध्यस्तत्प्रमाणकला स्मृता ॥ ४ ॥
कलाकालप्रमाणेन ताल इत्यभिसंज्ञितः ।
त्रिविधा सा च विज्ञेया त्रिमार्गनियमा बुधैः ॥ ५ ॥
चित्रे द्विमात्रा कर्तव्या वृत्तौ सा द्विगुणा स्मृता ।
चतुर्गुणा दक्षिणे स्यादित्येवं त्रिविधा कला ॥ ६ ॥
त्र्यस्रश्च चतुरस्रश्च स तालो द्विविधः स्मृतः ।
द्विविधस्यापि तालस्य त्वेका प्रकृतिरिष्यते ॥ ७ ॥
तथा योनिद्वयं ताला चान्यामानं निबोधत ।
चञ्चूपुटस्तु विज्ञेया तथा चायपुटा बुधैः ॥ ८ ॥
चतुरस्रस्तु विज्ञेयस्तालश्चञ्चूपुटो बुधैः ।
त्र्यस्रश्चञ्चूपुटश्चैव गुरुलघ्वक्षरान्वितः ॥ ९ ॥
आदौ द्वे गुरुणी यस्य लघ्वेकं प्लुतमेव च ।
अक्षराणां निवेशेन स तु चञ्चूपुटस्तदा ॥ १० ॥
आदौ गुर्वक्षरं यत्र अन्ते लघुनि चैव हि ।
त्र्यस्रः स खलु विज्ञेयस्तालश्चञ्चूपुटाश्रयः ॥ ११ ॥

---

१. 'कालस्तस्य' ख.

संनिपातस्ततः शम्या तालः शम्यामथापि वा ।
संनिपातादिको ज्ञेयः शम्यादिश्च तथापरः ॥ १२ ॥
तालादिश्च त्रिभिर्भेदैः पुनश्चञ्चूपुटो भवेत् ।
शम्यादिकस्तु विज्ञेयस्तज्ज्ञैरासारितादिषु ॥ १३ ॥
तालादिकस्तथा प्रोक्तो विद्वद्भिः पाणिकादिषु ।
चञ्चूपुटस्य ये भावाः संनिपातादयस्तु ये ॥ १४ ॥
त एव भेदा विज्ञेया बुधैश्चञ्चूपुटस्य च ।
संनिपातादिकः स्वस्य बलवान्नेतरस्तथा ॥ १५ ॥
षट्कलोऽष्टकलश्चैव तालो ह्यस्मात्प्रवर्तते ।
द्विप्रकारः पुनश्चायं निःशब्दः शब्दवांस्तथा ॥ १६ ॥
अनयोर्मिश्रभावं तु मिश्रस्तालः प्रकीर्तितः ।
शम्यातालप्रवेशेन अन्योस्तेपि(?) विधीयते ॥ १७ ॥
षट्पितापुत्रककृतः पञ्चपाणिरुदाहृतः ।
आद्यं प्लुतं द्वितीयं च लघु यत्राक्षरं भवेत् ॥ १८ ॥
तृतीयं च चतुर्थं च गुरूणि पञ्चमं लघु ।
प्लुतान्तः षट्पितापुत्रो गुरुलाघवसंयुतः ॥ १९ ॥
पञ्चपाणिः स विज्ञेयः षट्पातस्तु षडक्षरः ।
संनिपातस्ततस्तालः शम्या तालस्तथैव च ॥ २० ॥
शम्या चैव हि तालश्च षट्पातस्तस्य कीर्तितः ।
तालादिरूयस्रभेदोऽन्यः संपत्केष्टकसंज्ञितः ॥ २१ ॥
गुरुपञ्चाक्षराद्यन्तप्लुतमात्रासमन्वितः ।
त्र्यस्रं सर्वगुरुं कृत्वा निष्कामं त्वत्र योजयेत् ॥ २२ ॥
शम्याद्वयं ततस्तेषु उद्घट्टः कथितो बुधैः ।
व्युदस्य युग्मतो ये च पञ्चताला भवन्ति हि ॥ २३ ॥
मिश्रा गीताङ्गसंयुक्ता ज्ञेया ह्युद्घट्टकादयः ।
कलाः पञ्च तथा सप्त पुनर्नव च कीर्तिताः ॥ २४ ॥

दशैकादश चैवैते संकीर्णाः समुदाहृताः ।
नह्येषामुपयोगोऽस्ति सप्तरूपे ध्रुवासु च ॥ २५ ॥
प्रवृत्तादिषु कर्तव्या एते भूयः प्रयोक्तृभिः ।
यथाक्षरोऽथ द्विकलस्तथैव च चतुष्कलः ॥ २६ ॥
त्रयो भेदा हि तालस्य लस्याथ(?) द्विगुणाः स्मृताः ।
चतुरस्रस्त्रिभिर्भेदैस्तालस्तु परिकीर्तितः ॥ २७ ॥
चतुःकलो ह्यष्टकलः कलाः षोडश चैव हि ।
त्र्यस्रतालस्तु षड्भेदस्त्रिकलः षट्कलस्तथा ॥ २८ ॥
कला द्वादश चैवास्याश्चतुर्विंशतिरेव च ।
चत्वारिंशत्तथाष्टौ च तथा षण्णवतिः कलाः ॥ २९ ॥
तालो नवविधश्चायं समासात्परिकीर्तितः ।
तत्र [1]चालापनिष्क्रामौ विक्षेपोऽथ प्रवेशनम् ॥ ३० ॥
चतुर्द्विकल इत्येवं **निःशब्दः** परिकीर्तितः ।
शम्यातालो ध्रुवश्चैव संनिपातस्तथापरे ॥ ३१ ॥
इति शब्देन संयुक्तो विज्ञेयस्तु चतुर्विधः ।
एतेषां चैव वक्ष्यामि हस्ताङ्गुलिविकल्पनम् ॥ ३२ ॥
उत्तानाङ्गुलिसंकोच **आलाप** इति संज्ञितः ।
**निष्क्रमो**ऽधोगतस्य(तानां) स्यादङ्गुलीनां प्रसारणात् ॥ ३३ ॥
तस्य दक्षिणतः क्षेपो **विक्षेप** इति संज्ञितः ।
निवर्तनं च हस्तस्य **प्रवेशो**ऽधोमुखस्य तु ॥ ३४ ॥
यदा चतुष्कलो योगस्तदा त्वेष विधिः स्मृतः ।
निष्क्रमश्च प्रवेशश्च द्विकले परिकीर्तितौ ॥ ३५ ॥
एषामन्तरपातास्तु पातसंज्ञाः प्रकीर्तिताः ।
सहव्यस्तनिपातस्तु सम्यनालश्च वामतः ॥ ३६ ॥
हस्तयोस्तु समः पातः संनिपात इति स्मृतः ।
कला या त्रिविधा प्रोक्ता तस्याः पातो ध्रुवः स्मृतः ॥ ३७ ॥

---

१. 'चात्माथ' क-ख.

यथाक्षरस्य तालस्य सरा(?) गुर्वक्षरे स्मृतः ।
यथाक्षरकृतैः पातैस्ताले ज्ञेयो यथाक्षरः ॥ ३८ ॥
गुर्वक्षरैस्तु विश्लिष्टैः स नवद्विकलः स्मृतः ।
द्विर्भावा द्विकलस्यात्र विज्ञेयस्तु चतुष्कलः ॥ ३९ ॥
त्र्यस्रश्च चतुरस्रश्च षट्कलोऽष्टकलस्तथा ।
ध्रुवाणां तु भवेत्तालैस्तं च वक्ष्यामि तत्त्वतः ॥ ४० ॥
कनिष्ठाङ्गुलिनिष्क्रामः सम्या चैव ततो भवेत् ।
कनिष्ठानामिकाभ्यां तु निष्क्रामोऽतो विधीयते ॥ ४१ ॥
ततश्च तालः कर्तव्या शम्या चैव तु पञ्चमी ।
प्रवेशो ह्यष्टमो(?)षष्ठः कर्तव्यस्तर्जनीकृतः ॥ ४२ ॥
निष्क्रामसंनिपातान्ते नित्यमष्टकलो भवेत् ।
एष युग्मे कलापातविकल्पोऽङ्गुलिभिः कृतः ॥ ४३ ॥
कनिष्ठाङ्गुलिनिष्क्रामः प्रथमे तु कलो भवेत् ।
शम्यापातो द्वितीया च तृतीया ताल एव च ॥ ४४ ॥
शम्या तत्र चतुर्थी च पञ्चमी तर्जनीक्रमात् ।
षष्ठश्च संनिपातः स्यादेष वै षट्कलो विधिः ॥ ४५ ॥
एष त्र्यस्रे कलापाते विकल्पोऽङ्गुलिभिः कृतः ।
कनिष्ठाङ्गुलिनिष्क्रामे प्रवेशश्च तथा भवेत् ॥ ४६ ॥
कनिष्ठानामिकास्थाने तालो ज्ञेयस्तृतीयके ।
शम्यापातश्चतुर्थी स्यान्निष्क्रामो मध्यमाकृतः ॥ ४७ ॥
षष्ठतालस्तथा ज्ञेयो निष्क्रामस्तर्जनीकृतः ।
शम्याष्टमी ततस्तालो नवमी तु कला स्मृता ॥ ४८ ॥
कनिष्ठिकाप्रवेशस्तु दशमी तु कला भवेत् ।
निष्क्रामश्चैव तर्जन्यास्तदनन्तरमिष्यते ॥ ४९ ॥
संनिपातस्तथा ते च कलाद्वादशकं भवेत् ।
एष तो वापविक्षेपव्यवधानश्च पण्डितैः ॥ ५० ॥

विधिश्चतुष्कलो ज्ञेयः प्रागुक्ताङ्गुलिभिः कृतः ।
द्विकलश्चतुष्कलश्च पादभागः प्रकीर्तितः ॥ ९१ ॥
चत्वारः पादभागाश्च मात्रे(?) हि परिनाव्यते ।
चञ्चत्पुटस्य तालस्य तथा चञ्चुपुटस्य च ॥ ९२ ॥
पञ्चबाणैश्च विज्ञेया भेदा ह्येते पृथक्पृथक् ।
एवमेष मया तालः समासात्परिकीर्तितः ॥ ९३ ॥
आसारिते वर्धमाने गीतेष्वपि हि यः स्मृतः ।
अथासारितकानां तु संप्रवक्ष्यामि लक्षणम् ॥ ९४ ॥
भेदो च(दश्च)ञ्चत्पुटस्यादौ तथा गुरुलघुप्लुतैः ।
पञ्चपाणिं ततः कुर्याद्द्विरभ्यस्तं प्रयोगवित् ॥ ९५ ॥
यथाक्षरं तु सर्वत्र यथावद्विनिवेशयेत् ।
शम्यातालः पुनश्चैव शम्यातालमथापि च ॥ ९६ ॥
आद्येऽक्षरे संनिपातं पञ्चबाणश्च यो भवेत् ।
तालं शम्यां च तालं च शम्यातालौ ततः परम् ॥ ९७ ॥
एष एव द्वितीयेऽपि पञ्चबाणो विधिः स्मृतः ।
प्लुतच्छेदेऽपि तस्येष्टः संनिपातः प्रयोक्तृभिः ॥ ९८ ॥
एवं यथाक्षरं ज्ञेयं कनिष्ठासारितं बुधैः ।
यथाक्षरस्याक्षरैश्च तालपातान्निबोधत ॥ ९९ ॥
चकारे तु भवेच्छम्या द्वितीये ताल एव च ।
पुकारे तु भवेच्छम्या टकारे ताल एव च ॥ ६० ॥
एवं चञ्चुपुटे ज्ञेयं पञ्चपाणेरतः परम् ।
षडारे संनिपातः स्यात्पिकारे ताल एव च ॥ ६१ ॥
तकारे तु भवेच्छम्या एकारे ताल एव च ।
त्रकारे तु भवेच्छम्या ककारे ताल एव च ॥ ६२ ॥
द्वितीयेऽप्येवमेव स्यात्संनिपातस्ततः परम् ।
गुर्वक्षराणां विश्लेषादेवमेव तु मध्यमम् ॥ ६३ ॥

विश्लेषितानामेषां तु द्विर्भावे या कला भवेत् ।
पातान्ते सा प्रयोक्तव्या यथावदनुपूर्वशः ॥ ६४ ॥
द्विर्भावान्मध्यमस्येव ज्येष्ठमित्यभिधीयते ।
मध्यमस्य विधानेन न्यसेच्च द्विगुणाः कलाः ॥ ६५ ॥
संनिपातैर्निपातैश्च तेषां वस्तु प्रकीर्तितम् ।
समानलक्षणांश्चैव गदतो मे निबोधत ॥ ६६ ॥
निहत्य दानवं घोरं रुद्रेणामिततेजसा ।
नृत्तमुत्पादितं चित्रं पूर्वं ताण्डवसंज्ञितम् ॥ ६७ ॥
अथ भूतगणैः सर्वैस्तस्मिन्काले महात्मभिः ।
वर्धमानमिदं दृष्टं पिण्डीबन्धैर्विभूषितम् ॥ ६८ ॥
परितुष्टश्च तद्दृष्ट्वा सपत्नीको वृषध्वजः ।
प्रददौ तु वरं श्रेष्ठं सह देवगणाधिपैः ॥ ६९ ॥
लक्ष्यलक्षणसंपन्ना मार्गयुक्तिविधि(ः) क्रमैः ।
वर्धमानप्रयोक्तारो यास्यन्ति शिवगोचरम् ॥ ७० ॥
एवमेतन्मया दृष्टं पिण्डीबन्धनिमित्ततः ।
अधुना तु प्रवक्ष्यामि लक्षणं शृणुत द्विजाः ॥ ७१ ॥
वृत्तिदक्षिणचित्रेषु मार्गेषु विनियोजितम् ।
द्विविधं वर्धमानं स्यात्स्वप्रमाणविनिर्मितम् ॥ ७२ ॥
अतालं च सतालं च तत्प्रमाणं द्विजाः स्मृतम् ।
चतस्रः काण्डिकाश्चैव तावन्त्यासारितानि तु ॥ ७३ ॥
ध्रुवकेण कलाभिस्तु कण्डिका देवकल्पिता ।
वर्धमानशरीरे तु क्रियते मार्गयोजना ॥ ७४ ॥
आद्या नवकला तु स्यादष्टाभिस्तत्परा स्मृता ।
दश षट् च तथा चैव तृतीया कण्डिकेष्यते ॥ ७५ ॥
चतुर्थी कण्डिका चैव द्वात्रिंशत्कलिका स्मृता ।
कलाभिरेवं निर्दिष्टा कण्डिका वर्धमानके ॥ ७६ ॥

केवलं मार्गसंभूता स्वालयोपाङ्गवर्जिता ।
एकद्वित्रिचतुर्योगात्ताभिरासारितानि तु ॥ ७७ ॥
वर्धमाने प्रसूयन्ते मार्गतालाङ्गयोगतः ।
प्रथमां कण्डिकां कृत्वा बालतालप्रयोजितम् ॥ ७८ ॥
अन्तिमार्धकलाहीनं कुर्यादेवं कनिष्ठकम् ।
द्वितीयां कण्डिकां कृत्वा प्रथमा सकला यदि ॥ ७९ ॥
योज्यते पूर्वतालेन तदा तत्स्याल्लयान्तरम् ।
वर्धमानं विना चित्रे नहि वृत्तौ लयान्तरम् ॥ ८० ॥
बहिर्वा वर्धमाने वा कनिष्ठां नहि दक्षिणे ।
द्विगुणक्षीरसंयोगादन्यमार्गनियोजनात् ॥ ८१ ॥
नृत्तकालविशेषाच्च बालादन्यल्लयान्तरम् ।
तृतीया सद्वितीया च प्रथमा चैव तत्कला ॥ ८२ ॥
द्विकलं योगमाश्रित्य मध्यमासारितं तु तत् ।
चतुर्थीमादितः कृत्वा चतस्रः कण्डिका यथा ॥ ८३ ॥
चतुष्कलो न युद्यन्ते(?) ज्येष्ठमासारितं तु तत् ।
प्रयोगस्तु यदा त्वेषां पिण्डीबन्धैर्विकल्पते ॥ ८४ ॥
प्रत्येकं तु(त्व)ङ्गविन्यासस्तदा तेषां पृथक्पृथक् ।
मुखं प्रतिमुखं चैव देहसंहरणं तथा ॥ ८५ ॥
अङ्गान्येतानि चत्वारि सर्वेष्वासारितेष्विह ।
उपोहनं मुखं तेषां युग्मं प्रतिमुखं भवेत् ॥ ८६ ॥
ओजः शरीरसंहारावयमङ्गविधिक्रमः ।
इत्येव चतुरङ्गानि ज्ञेयान्यासारितानि तु ॥ ८७ ॥
चतुरासारितैर्बद्धं वर्धमानकमुच्यते ।
वर्णताललयग्रन्थवाद्याभिनयवर्धनात् ॥ ८८ ॥
पात्राणां वृद्धियोगाच्च वर्धमानकमुच्यते ।
वर्धमाने शरीरस्य भवेदासारितस्य च ॥ ८९ ॥

---

१. 'द्विगुणाक्षर' इति भवेत्.

कार्यकारणभावेन परस्परविकल्पनम् ।
यथा वृक्षाद्भवेद्बीजो बीजाद्वृक्षस्य संभवः ॥ ९० ॥
अन्योन्यहेतुसंयोगः प्रसर्तव्यस्तथैव तु ।
योगादेककलात्सूते कनिष्ठकलयान्तरे ।
द्विकलान्मध्यमं चैव ज्येष्ठं चैव चतुःकलात् ॥ ९१ ॥
चञ्चत्पुटपरिवर्तः शम्यादि द्वौ च पञ्चपाणिकृतौ ।
अन्ते च संनिपातः पातविधिरयं कनिष्ठस्य ॥ ९२ ॥
अयमेव तालयोगो विशेषसिद्धिश्च सूर्यवद्दिष्टा ।
भवतीह लयान्तरिते शब्दाद्भेदो लयश्चैव ॥ ९३ ॥
उत्तरकालान्कृत्वा त्वादौ विप्राः कलाः परित्यज्य ।
एतत्पातविधानं मध्यमकासारिते प्रोक्तम् ॥ ९४ ॥
ज्येष्ठस्य भवति नियमादादावेका चतुःकला मात्रा ।
मात्रा कंदुगता स्यात्कृत्वैतौ द्वौ च परिवर्तौ ॥ ९५ ॥
वालं नवकलं वेषां न तेषां साधु संमतम् ।
संनिपाताङ्गविन्यासं कलानियमतः कृतम् ॥ ९६ ॥
तेषां संमुखतालं ध्रुवपातैरेव नियमतात्मानम् ।
तस्य कलापाक्षरगुरुलघुवर्णस्थितिं वक्ष्ये ॥ ९७ ॥
ज्येष्ठस्य कला ह्यष्टौ मुखं भवेन्मध्यमस्य समूलकम् ।
षड्भिर्लयान्तरे स्यात्पञ्चैव कलाः कनिष्ठस्य ॥ ९८ ॥
आदावन्ते गुरुणी मध्ये च लघूनि बालतः प्रभृति ।
अष्टौ द्वादश षोडश विंशतिरपि वाक्षराणि स्युः ॥ ९९ ॥
आसारितोपवहनेष्वादावासारणानि युक्तानि ।
तान्यक्षराणि वक्ष्ये यानि पुरा ब्रह्मगीतानि ॥ १०० ॥

[यथा—]'कूहुं जगति यदि गिनि गिजं हुं प्रथमे लयान्तरे वापि तितिजलकुचकलयमध्ये इति तिकुचवलितकज्येष्ठे ।'

इत्यक्षरपतनकलागुरुलघुवर्णस्थितिप्रतिविभक्तः ।
आसारितमुखसंज्ञे उपवहनविधिः समुद्दिष्टः ॥ १०१ ॥

एवमेतत्सविस्तारं कथितं परिमाणकम् ।
चत्वारस्तु गुणा युग्मे ओजे षड्वा(ट्प)रिकीर्तिताः ॥ १०२ ॥
पञ्चपाणौ द्वितीये तु सार्धषट्परिकीर्तिताः ।
कनीय एवं कर्तव्यमकरौस्तालमानतः ॥ १०३ ॥

यथा—'देवं देवैः संस्तुतं नमितं दैत्यैर्यज्ञैर्नागैः पितृभिश्च नमितचरणं त्रैलोक्यहेतुमीशं रुद्रं शरणमस्म्यहमुपगतः ।'

अष्टावेव गणाः कार्याः पूर्वताले यथाविधि ।
द्वादशैव तु कर्तव्याः कथिताः पुत्रके गणाः ॥ १०४ ॥
अर्धत्रयोदशगणास्तृतीये वसुसंज्ञिताः ।
एवमक्षरविन्यासो मध्यमासारिते स्मृतः ॥ १०५ ॥

यथा—'भूताधिपतिं भगनेत्रहरं देवैर्वन्द्यं सुरवरमथनं रौद्रं भयदं गजचर्मवृतं शंभुं त्र्यक्षं ज्वलननिभजटम् । भुजगपरिकरं त्रिदशगणवृतं दैत्यैर्नित्यं परिपठितचरितममरपतिनमितमभिमतसुखदं शरणं सुरनुतचरणमहमुपगतः ।'

कार्याः षोडश युग्माख्ये ताले तु प्रथमे गणाः ।
चतुर्विंशतिरोजाख्ये द्वितीये वसुसंज्ञिते ॥ १०६ ॥
चतुर्विंशतिरर्धं च तृतीये वसुसंज्ञिके ।
ज्येष्ठेष्वासारिते कार्य एवमक्षरसंचयः ॥ १०७ ॥

[यथा—]'अमरप्रवरं मदनाङ्गहरं भुवनैकनाथमभयप्रदं त्रिपुरान्तकरं देवं तमहं प्रणतःसुरपितृगणनतचरणं पृथिवीसलिलज्वलनभैरवरूपं खट्वाङ्गकपालधरं पवनः सूर्यश्चन्द्रो यजारमाप्योमाख्याः कार्या मुनिभिर्यस्य प्रोक्तास्त्रैलोक्यगुरुं तमचिन्त्यमजं विद्यानिलयं भैरवरूपं खट्वाङ्गकपालधरं स्थित्युत्पत्तिप्रलयनिमित्तं चन्द्रार्धधरं तिलकार्धधरं रसनार्धधरं बहुभिर्विकृतैर्विविधैर्विकटैर्विद्यतिविमुखैः प्रमथैः परिवृतमीशं सुखदं सततं प्रणतः ॥'

आसारितानां सर्वेषां ये भेदाः परिकीर्तिताः ।
यथाक्षरं द्विसंख्यातं त्रिसंख्यातं यथापि वा ॥ १०८ ॥

तालच्छेदो द्विगुणितैः समवर्णगणैः कृतम् ।
अनिवृत्ताक्षरपदं यथाक्षरमिति स्मृतम् ॥ १०९ ॥
निवृत्त्या यत्समायुक्तं द्विसंख्यातं तमुच्यते ।
निर्वृत्तद्वयसंपन्नं त्रिसंख्यातमितीष्यते ॥ ११० ॥
चतुष्कादौ चतुर्मात्रा यथोक्तगुरुलाघवाः ।
यथायोगं गणाः कार्या गीतेष्वासारितेषु च ॥ १११ ॥
अक्षरैर्या चतुर्मात्रा द्विमात्रा वर्णतस्तु सा ।
चित्रे कला भवेद्या तु वृत्तौ सा द्विगुणा स्मृता ॥ ११२ ॥
वृत्तौ या वर्णमात्राभिश्चतुर्मात्राः प्रकीर्तिता ।
द्विगुणद[1]····णे सा तु कला ज्ञेया प्रयोक्तृभिः ॥ ११३ ॥
न मार्गभेदोऽक्षरेषु कश्चिदप्युपपद्यते ।
वर्णमात्राद्विगुणिताद्वर्णभेदः प्रकीर्तितः ॥ ११४ ॥
यथाक्षरेषु भूयिष्ठं गीतेष्वासारितेषु च ।
विधिरेष समुद्दिष्टो वर्णतालपदाश्रयः ॥ ११५ ॥
द्विसंख्याते निवृत्तिस्तु कार्याद्यस्यार्धयोगतः ।
द्विसंख्यातार्धयोगेन त्रिसंख्यातेऽपि चेष्यते ॥ ११६ ॥
न चित्रे द्वित्रिसंख्यातं कदाचिदपि योजयेत् ।
न च वृत्तित्रिसंख्यातं गीतेष्वासारितेषु च ॥ ११७ ॥
दक्षिणे स्यात्त्रिसंख्यातं द्विसंख्यातं च वार्तिके ।
चित्रे यथाक्षरं प्रोक्तमिति मार्गविनिश्चयः ॥ ११८ ॥
दक्षिणेनैव गत्वादौ निवृत्तौ वृत्तिवद्व्रजेत् ।
चित्रवच्च यथान्यायं त्रिसंख्याते विधिः स्मृतः ॥ ११९ ॥
अनेनैव विधानेन द्विसंख्यातमपीष्यते ।
वृत्तौ वा दक्षिणो वापि प्रयोगोऽस्य सदैव तु ॥ १२० ॥
वस्त्वादौ वस्तुमध्ये च वस्त्वन्ते या निवृत्तयः ।
प्रयोक्तव्यः प्रयोगज्ञैर्विचार्याङ्गबलाबलम् ॥ १२१ ॥

१. 'द्विगुणा दक्षिणे' इति भवेत्.

निवृत्तौ तु कला न्यूना यदा वस्तुवशाद्भवेत् ।
अकालपातनात्तस्या वर्णः कार्यो निवृत्तिमान् ॥ १२२ ॥
वर्णालंकारसौभाग्यं विच्छेदः करणस्य च ।
तत्त्वादीनां प्रयोगश्च निवृत्तीनां प्रयोजनम् ।
वर्णतालाक्षराणां तु संयोगोऽयं मया स्मृतः ॥ १२३ ॥
आसारितेषु गीतेषु वर्धमानेषु चैव हि ।
वर्धमानं तु विज्ञेयं चतस्रः कण्डिका बुधैः ॥ १२४ ॥
विशाला संगता चैव सुतदा(नन्दा)[1] सुमुखी तथा ।
उपोहनं विशालायाः कला[ः] पञ्च भवेदिह ॥ १२५ ॥
षडङ्ग(ट्संग)ताया विज्ञेयाः सुनन्दायाश्च सप्त च ।
सुमुख्याश्चोपवहनं नित्यमष्टकलं भवेत् ॥ १२६ ॥
आदौ गुरुद्वयं कार्यं चतुर्दश लघून्यथ ।
उपोहनं विशालायाः पुनरन्ते गुरुः स्मृतः ॥ १२७ ॥

यथा—झंदुं जगति अवलितकदिगिनिगिकुचक्कतितिति वा ।(?)

चतुर्भिरधिकैरेवं लघुभिर्गुरुसंस्तुतैः ।
सुनन्दायाश्च विज्ञेयो ह्युपोहनविधिर्बुधैः ॥ १२८ ॥

यथा—झंदुं जगति अवलितकदिगिति झलकुचलति विभो ।(?)

षड्विंशतिर्लघूनि स्युः सुमुख्याश्च गुरूणि च ।
उपोहनविधानेन ज्ञेयानि मुनिसत्तमाः ॥ १२९ ॥

यथा—झंदुं जगति अवलिकदिगिविगितितिझलझचकुलतिति जगतिति वा ।

उपोह्यन्ते श्व(स्व)रा यत्र येन गीतं प्रवर्तते ।
तस्मादुपोहनं प्रोक्तं शुष्काक्षरसमन्वितम् ॥ १३० ॥
अथवा मोह्यते यस्मात्प्रयोगसूचनादिभिः ।
तस्मादुपोहनं ह्येतज्ज्ञानभा(ता)ण्डसमाश्रयम् ॥ १३१ ॥

---

१. 'सुनादा' ख.

शम्या तालौ द्विरभ्यस्तौ संनिपातान्त्य एव च ।
उपोहनं विशा[[1]लायास्तालोऽयं परिकीर्तितः ॥ १३२ ॥
द्विकलः संगतायाश्च तालश्चञ्चुपुटः स्मृतः ।
त्रिकलो युक्तता]लादि सुनन्दायास्तथैव च ॥ १३३ ॥
चञ्चत्पुटस्तु द्विकलः सुमुख्याः स्यादुपोहने ।
[2]उपोहने द्विरभ्यस्तैस्ततः कार्या [3]तु कण्डिका ॥ १३४ ॥
एतान्युपोहनानीह चत्वारि गदितानि ह ।
आनुपूर्व्या प्रयोगं च कण्डिकानां निबोधत ॥ १३५ ॥
शम्या तालो(?) पुनः शम्या ततस्तालो यथाक्रमम् ।
त्रिकलः संनिपातश्च विशालायाः प्रकीर्तितः ॥ १३६ ॥
चञ्चत्पुटस्तु वि(द्वि)कलः संगताया अपि स्मृतः ।
चतुष्कलः सुनन्दायाः स एव गदितो बुधैः ॥ १३७ ॥
संनिपातद्वयोपेता द्विचित्रस्तु प्रयोक्तृभिः ।
कार्यश्चतुष्कलो युग्मः सुमुख्याश्च यथाक्रमम् ॥ १३८ ॥
वर्धमानस्य तालोऽयं कण्डिकानां पृथक्पृथक् ।
मया प्रोक्तो मुनेश्चैव संहतानां निबोधत ॥ १३९ ॥
पूर्वं विशाला कर्तव्या संगता तदनन्तरम् ।
संगतायां ग्रहं कृत्वा विशाला पुनरिष्यते ॥ १४० ॥
कनिष्ठासारिते तालो यो यथा परिकीर्तितः ।
स एव सर्वः कर्तव्यः प्रथमे कण्डिकोद्भवे ॥ १४१ ॥
सुनन्दा संगता चैव [वि[4]शाला च यथोदिता ।
सुनन्दायां ग्रहं कृत्वा ततश्चैव] प्रयोजयेत् ॥ १४२ ॥
मध्यमासारिते तालो यो मया परिकीर्तितः ।
शम्यात्रयस्य कर्तव्यः सुनन्दाद्यस्य पण्डितैः ॥ १४३ ॥

---

१. ख-पुस्तके त्रुटितः. २. 'उपोहनैर्' इति भवेत्. ३. 'सुकण्डिका' क.
४. ख-पुस्तके त्रुटितः.

सुमुखी च सुनन्दा च संगतप्रथमा तथा ।
सुमुख्यादौ ग्रहं कृत्वा यथोक्तं संप्रयोजयेत् ॥ १४४ ॥
ज्येष्ठासारितके तालो निःशब्दः शब्दवांस्तथा ।
स सर्व एव कर्तव्यो बुधैश्चतसृणामपि ॥ १४५ ॥
संयोगः कण्डिकानां तु तालोऽयं परिकीर्तितः ।
एवमासां समायोगाद्वर्धमानकमिष्यते ॥ १४६ ॥
वालं न सुक(चतुष्क)लं ज्ञेयं दशशब्दलयान्तरम् ।
पञ्चषष्टिकलं ज्येष्ठं त्रयस्त्रिंशत्तु मध्यमम् ॥ १४७ ॥
कलानां वृद्धिमासाद्य त्वक्षराणां तु वर्धनात् ।
लयस्य वर्धनाच्चापि वर्धमानकमुच्यते ॥ १४८ ॥
आसारितेषु गीतेषु वर्धमानेषु चैव हि ।
द्विगुणस्तालयोगेन कार्यो ह्यक्षरजो विधिः ॥ १४९ ॥
समासायान्तरयिनः(?) संनिपातो यदा भवेत् ।
अन्त्या कला द्विमात्रा तु तदा ज्ञेया प्रयोक्तृभिः ॥ १५० ॥
एवमेतन्मया प्रोक्तं वर्धमानस्य लक्षणम् ।
आसारितानां वक्ष्यामि विस्तारं लघुलक्षणम् ॥ १५१ ॥
अन्यूनायां कलायां तु ध्रुवं प्राज्ञो निवेदयेत् ।
अथ तालाक्षरवंशास्त्वेषां ये तांश्च योजयेत् ॥ १५२ ॥
प्लुते लघ्वक्षरे चैव ध्रुवे साम्यं न विद्यते ।
न विद्यते त्रिभिः पातैः समत्वमुपदिश्यते ॥ १५३ ॥
तालैश्च संनिपातैश्च शम्याभिश्च ध्रुवेण च ।
कनिष्ठासारितं कार्यं मध्यमं ज्येष्ठमेव च ॥ १५४ ॥
........................................ ।
द्विगुणोत्तरया वृद्ध्या ह्यस्यैव न मध्यमं विधातव्यम् ॥ १५५ ॥
प्रस्तारेण कलानां शम्यातालान्तरोपेतम् ।
पूर्वं शम्या कार्या द्विकलस्तालः कलाद्वयं शम्या ॥ १५६ ॥

---

१. 'वशाच्छेषानन्तांश्च' ख.

पुनरेककलस्तालस्त्रिकलः स्यात्संनिपातश्च ।
त्रिकलोऽन्यस्मिंस्तालः शम्यैकः ····कलाद्वये तालः॥ १९७॥
द्विकला च पुनः शम्या तालः क················ ।
································································ ॥ १९८ ॥
त्रिकलश्च संनिपातो भूयो विधिरेष कर्तव्यः ।
द्वादश कलास्तृतीये तस्यान्ते संनिपातश्च ॥ १९९ ॥
प्रथमस्त्वष्टकलः स्याद्वादशकलिकौ तथापरौ ज्ञेयौ ।
अन्त्यश्च संनिपातो मध्यस्यासारितस्योक्तः ॥ १६० ॥
ये पूर्वमङ्गुलिकृताः प्रवेशान्नि(शनि)ष्क्रामसंज्ञया गदिताः ।
ते सर्वे कर्तव्या मध्ये त्वासारिते तज्ज्ञैः ॥ १६१ ॥
अयं(?) ज्येष्ठे तु कर्तव्यं शम्यातालकलान्वितम् ।
शतत्रयोऽथ निष्क्रामो विक्षेपोऽथ प्रवेशनम् ।
अङ्गुलीनां तु कर्तव्यं कलामानं चतुष्कलम् ॥ १६२ ॥
पूर्वं शम्या कार्या चतुष्कलोऽन्यो भवेत्ततस्तालः ।
शम्या चतुष्कला स्याद्विकलस्तालस्तथा चैव॥ १६३ ॥
कार्यस्य संनिपातोऽपि षट्कलः षट्कलस्तु तालः स्यात् ।
द्विकला च पुनः शम्या चतुष्कलः स्यात्पुनस्तालः ॥ १६४ ॥
शम्या चतुष्कला स्याद्विकलस्तालश्च कर्तव्यः ।
पुनरेव संनिपातश्च षट्कलः संविधातव्यः ॥ १६५ ॥
विधिरेष एव कृत्स्नः पुनस्तृतीयेऽपि संनिपाते तु।
पुनरेष वेष(?)मङ्गुलिविक्षेपात्संप्रवक्ष्यामि ॥ १६६ ॥
पूर्वं शम्या तथावापो निष्क्रामश्च ततः पुनः ।
विक्षेपोऽथ पुनस्तालः पुनरावाप एव च ॥ १६७ ॥
अनामिकीकनीयस्यान्नि(स्योर्नि)ष्क्रामश्च पुनस्ततः ।
ताभ्यामेव हि विक्षेपः शम्याथो वापि एव च ॥ १६८ ॥

१. 'अग्रं' इति, 'अन्यं' इति वा भवेत्.

मध्यमायां ततस्तालो विक्षेपोऽथ प्रवेशनम् ।
आवापश्च पुनः कार्यस्तर्जनीनिष्क्रमः पुनः ॥ १६९ ॥
विक्षेपश्च पुनः कार्यः संनिपातस्तथैव वा ।
कलाः सप्तदशैवैताः संनिपातो भवेदयम् ॥ १७० ॥
आवापश्च पुनः कार्यः कनीयस्याथ निर्गमः ।
विक्षेपश्च प्रवेशश्च आवापश्च ततः पुनः ॥ १७१ ॥
अनामिकाकनीयस्योस्ततस्तालो भवेत्पुनः ।
विक्षेपश्च पुनस्ताभ्यां ततः शम्याः प्रकीर्तिताः ॥ १७२ ॥
आवापस्य कनीयस्यां ततस्तालं नियोजयेत् ।
विक्षेपश्च प्रवेशश्च पुनरावाप एव च ॥ १७३ ॥
प्रदेशिन्या च निष्क्रामो विक्षेपश्च पुनः स्मृतः ।
संनिपातः पुनश्चैव चतुर्विंशतिको भवेत् ॥ १७४ ॥
तृतीयः संनिपातस्य ऐष एव विधिः स्मृतः ।
एवं ज्येष्ठस्य विज्ञेयस्तालाङ्गुलिविकल्पितः ॥ १७५ ॥
प्रथमः षोडशकलश्चतुर्विंशतिकस्तथा ।
द्वितीयश्च तृतीयश्च संनिपातकलाधिकः ॥ १७६ ॥
प्रत्येकं पातनान्येषु दल्लाः सप्त भवन्ति हि ।
शम्यातालकृतानीह संनिपातकृतानि च ॥ १७७ ॥
हर्म्यं(?)मष्टमतालं त्रिसंनिपातं त्रिवस्तु चाप्येवम् ।
सप्तदशपातयुक्तं विद्यादासारितं सम्यक् ॥ १७८ ॥
आसारितानामित्येवं गदितं लक्षणं मया ।
गीतानां वस्तुकानां च प्रयोगः परिकल्पते ॥ १७९ ॥
अत ऊर्ध्वं प्रवक्ष्यामि गीतानां वस्तुकेष्वपि ।
विवधैककवृत्तानि त्रीण्यङ्गानि समासतः ॥ १८० ॥

---

१. 'त्वेष एव' ख.

ऐकैकं[1] तु विदार्येका ते तु मद्रिविधः स्मृतः ।
षट्परं त्र्यवरं वृत्तं व्यङ्गं सहरसं च तत् ॥ १८१ ॥
विवधैकककयोः प्रायो मद्रके तु प्रयोजनम् ।
प्रवर्याश्चापि[2] वस्व(स्त्व)र्धे पादे रोविन्दकस्य च ॥ १८२ ॥
रोविन्दकोत्तराभ्यां तु वृत्तमुल्लोपके तथा ।
पाणिकायां बहिर्गीता लास्ये वै परिकीर्तितम्(?) ॥ १८३ ॥
प्रवृत्तमवगाढं च द्विविधं स्तत्व(वृत्त)मुच्यते ।
आरोहित्वादवगाढं प्रवृत्तमवरोहतः ॥ १८४ ॥
आरोहणं च द्विविधं तथा चैवावरोहणम् ।
न्यासापन्यासविहितं मार्गान्नटकृतं तथा ॥ १८५ ॥
त्र्यवरैकादशपरा विदार्यः परिकीर्तिताः ।
चतुर्विंशतिरेतासां प्रमाणं परमं स्मृतम् ॥ १८६ ॥
अध्यर्द्धौद्धि तृतीयाच्च संनिपाताः प्रमाणतः ।
उल्लोप्यके विदारी तु स्मृता वैहायसे तथा ॥ १८७ ॥
विवधेन तु तत्कार्यो युग्मवृत्तेन चैव हि ।
नह्यर्धसंनिपाते तु भवेदङ्गसमापनम् ॥ १८८ ॥
गीतानि ससमद्रोकोल्लोप्यके च परान्तकम् ।
प्रकर्यो[3] वैणकं चैव रोविन्दकमथोत्तरम् ॥ १८९ ॥
द्विविधं मद्रकं तत्र चतुर्वस्तु त्रिवस्तु च ।
शीर्षकेण समायुक्तं तच्च ज्ञेयं त्रिवस्तुकम् ॥ १९० ॥
पञ्चषट्सप्त तानि स्युः शीर्षकं च परान्तके ।
प्रकर्यामथ चत्वारि स्युस्त्रीण्यर्धाधिकानि च ॥ १९१ ॥
रोविन्दकं तु सप्ताङ्गं षोडशाङ्गं परं स्मृतम् ।
द्वौ पादौ समवर्णौ तु एकको वात्र कीर्तितौ ॥ १९२ ॥

---

१. 'सर्वेषामेव गीतानां वस्तुष्ववयवेषु च । विवधैकैकवृत्तानि त्रीण्यङ्गानि समासतः ॥' इत्यधिकं ख-पुस्तके. २. 'प्रकर्यः इत्युत्तरत्र. ३. 'प्रवर्यः' इति प्राक्.

प्रवृत्तं विवधं वापि तस्मात्पादौ प्रयोजयेत् ।
सप्ताङ्गं द्वादशाङ्गं वा प्राक्षमोवेणकं बुधैः ॥ १९३ ॥
तत्र द्व्यन्तं तु सप्ताङ्गं त्र्यन्तं द्वादशकं तथा ।
पादः संधिर्माषघातोर्[१]जं(?) संपिष्टकं तथा ॥ १९४ ॥
एककं चतुरस्रं वाप्युपवर्तनमेव च ।
उत(प)पातः प्रवेणी च द्व्यङ्गं संहरणं तथा ॥ १९५ ॥
अङ्गानि द्वादशाङ्गस्य स्मृतान्योवेणकस्य च ।
संपिष्टकोपपाताभ्यां प्रवेणीभ्यां विवर्जितम् ॥ १९६ ॥
उपवर्तनहनं च सप्ताङ्गपरिवर्जितम् ।
निवर्तनं तु सप्ताङ्गो तुल्यवर्णपदं स्मृतम् ॥ १९७ ॥
अन्तयोर्द्वादशाङ्के तु तथान्यपदमिष्यते ।
उल्लोप्यकेऽपि चाङ्गानामेष एव विधिः स्मृतः ॥ १९८ ॥
अवगाढप्रवृत्तं च महाजनिकमेव च ।
आगात्तस्यात्तथा द्व्यङ्गो महाजनिकवर्जितः ॥ १९९ ॥
स्थि[२]तिप्रवृत्तं संयोगादेकाङ्गो यापि कीर्त्यते ।
एकाङ्गे संविधातव्यं महाजनिकमेव च ॥ २०० ॥
द्व्यङ्गं चितप्रवृत्तं वा चैकाङ्गं वापि कीर्तितम् ।
द्व्यङ्गे व्याससमासाभ्यां ध्रुवाधातुविधिः स्मृतः ॥ २०१ ॥
स्थितं प्रवृत्तं च तथा महाजनिकमेव च ।
त्र्यङ्गोत्त(ङ्गस्तु) स्यादथ द्व्यङ्गो महाजनिकवर्जितः ॥ २०२ ॥
एकाङ्गोऽपि विधातव्यो महाजनिकसंयुतः ।
एवं व्याससमासाभ्यां बहुधाङ्गविधिः स्मृतः ॥ २०३ ॥
चतुरस्रस्तथा त्र्यस्रो विस्र(?)चान्तः प्रकीर्तितः ।
उवेणकस्य संहारो द्व्यङ्ग एकाङ्ग एव च ॥ २०४ ॥

---

१. 'सज्जं' ख. २. 'स्थितप्रवृत्तं' ख. 'स्थितिः प्रवृत्तसंयोगादेकाङ्गे यापि कीर्त्यते' इति भवेत्.

नादौ न मध्ये संहारे नित्यं चैव प्रयुज्यते ।
एककं(?) विवधायापि कार्यो ह्यन्ते प्रयोक्तृभिः ॥ २०५ ॥
उल्लोप्यकं षडवरं शल्यं चैव परं स्मृतम् ।
तच्च संहरणे कार्यं सु(मु)खप्रतिमुखान्वितम् ॥ २०६ ॥
वैहायसकसंयुक्तं तेनापि च विवर्जितम् ।
त्रिष्वङ्गेष्ववरं ज्ञेयं परं स्याद्द्वादशस्वपि ॥ २०७ ॥
एकाद्यङ्गवरं ज्ञेयं वैहायसकमेव च ।
अस्य चाङ्गत्रयेऽतीते प्रयोगमुपपादयेत् ॥ २०८ ॥
उल्लोप्यकोत्तराभ्यां तु मुखप्रतिमुखे स्मृते ।
ततोऽङ्गानां समासो वा विस्तारो वा विधीयते ॥ २०९ ॥
मुखप्रतिमुखे चैव ज्ञेये विविधसंज्ञिते ।
वृत्तप्रतिमुखं च स्यादन्या यास्तु समासतः ॥ २१० ॥
उल्लोप्यके तथा शाखा सोत्तरो सांपरान्तके ।
प्रतिशाख्या तथा चैव सवर्णान्यपदा स्मृताः ॥ २११ ॥
उत्तरं द्वादशपरं षडङ्गावरमिष्यते ।
आकारपादहीनेन तुल्यं रोविन्दकेन तु ॥ २१२ ॥
अन्ते चाथ विशेषेण स्थाप्यमस्य हि शीर्षकम् ।
एवमङ्गविधिः कार्यः सप्तरूपे प्रयोक्तृभिः ॥ २१३ ॥
अत ऊर्ध्वं प्रवक्ष्यामि गीतानायां सुकल्पनम् ।
गुरुवेदाष्टकं कृत्वा न्यसेल्लघ्वष्टकं पुनः ॥ २१४ ॥
तत्रोपवहनं कार्यं प्रथमे तु गुरुद्वये ।
गुर्वक्षरे तृतीये तु ततः स्यात्प्रत्युपोहनम् ॥ २१५ ॥
गुर्वक्षरे चतुर्थे तु शम्या कार्या तु पञ्चमे ।
षष्ठसप्तमयोस्तालः शम्या गुर्वक्षरेऽष्टमे ॥ २१६ ॥
ततोऽर्धकलिकान्पातान्कुर्याल्लघ्वक्षरेषु च ।
गुर्वक्षरे तालगीतपातास्तु कलिकाः स्मृताः ॥ २१७ ॥

शम्यातालौ तालशम्ये तेषु कुर्यात्क्रमेण तु ।
तालं शम्यां च तालं च संनिपातं तथैव च ॥ २१८ ॥
एवमेककलो ज्ञेयः कलायोगस्तु भद्रके ।
गुरुविश्लेषपादेन द्विकलं परिकीर्तितम् ॥ २१९ ॥
विशेषेण कलास्तत्र पूर्वं पूर्वं निवेशयेत् ।
द्विकले भद्रके चैव त्रिकलं स्यादुपोहनम् ॥ २२० ॥
कलिकं द्विकलं वापि नवा स्यात्प्रत्युपोहनम् ।
द्विकलैर्गुर्वक्षरकृतैः पादभानैर्यथाक्रमम् ॥ २२१ ॥
चतुर्भिस्तु भवेन्मात्रा त्रिमात्रं वस्तुसंज्ञितम् ।
त्रिवस्तु द्विकलं ज्ञेयं भवेत्पातो[1] विधीयते ॥ २२२ ॥
गुर्वक्षरेषु ये पाताः शम्यातालादयः स्मृताः ।
त एव पादभागेषु द्विकलेष्वत्र योजयेत् ॥ २२३ ॥
अष्टमी षोडशी शम्या दशमी च यथाक्रमम् ।
चतुर्दश्यां कलायां तु तान्[2]वेदा(?)द्वादशीयुतम् ॥ २२४ ॥
लघ्वष्टके पातविधिर्यथापूर्वं प्रकीर्तितः ।
वस्तुत्रयेऽपि द्विकले एवं पातान्प्रयोजयेत् ।
शीर्षकं चैव कर्तव्यं षट्कलं पञ्चपाणिना ॥ २२५ ॥

[3]क्रंडंक्रंडं शैलेन्द्रराजसंस्थितमीशं शान्तं शिवं पन्नगेन्द्रपरिबद्धजटम् । मुनिगणनमितं ध्यानाभिरतं ज्ञानमयं मदनाङ्गहरं विभुं प्रभुम् शरणगतोऽहं दैत्यैर्नागैः संस्तुतमीशं त्वां वेदमयं त्वां कर्तारं त्वां भुवनपतिं सर्वलोकनमस्कृतम् ऋग्यजुःपति(ठि)तं गङ्गाधरं शूलधरं भुजगेन्द्रधरं प्रणतोऽस्मि शिवं मृगराजचर्मपरिबद्धतनुम् विपुलगतिं वृषभगतिं ज्वलनशिखिसदृशकपिलजटं तमहं नमामि शिवं शिरसा ।

समाप्तं द्विकलमद्रकम् ॥

१. 'पातावधिस्त्वयम्' ख. २ 'तास्त्वेदा' क. ३ 'क्रंडुं क्रंडुं' ख.

देवं विमलं प्रणतार्तिहरं मायाधारं मायारूपं जटिलं नमामि शिवं शिरसा ।

शीर्षकं षट्कलं समाप्तम् । द्विकलमद्रकम् ।

चतुष्कलं प्रवक्ष्यामि यथावद्विजसत्तमाः ।
चतुष्कलैः पादभाजै(गै)र्यथापूर्वमुदाहृतैः ॥ २२६ ॥
चतुर्भिस्तु भवेन्मात्रा त्रिमात्रं वस्तुसंज्ञितम् ।
पातांश्चैव प्रवक्ष्यामि पादभागैर्यथाक्रमम् ॥ २२७ ॥
चतुर्थे पञ्चमेत्ये(चै)व शम्या कार्या तथाष्टके ।
दशमैकादशेम्प (?) द्वितीयां नवमे स्मृता ॥ २२८ ॥
षष्ठे तु सप्तमे ताला अन्ते च नवमस्य हि ।
दशमैकादशे चैव द्वितीयः समुदाहृतः ॥ २२९ ॥
आद्यं तु द्वादशे प्रोक्तं संनिपातो वसानतः ।
एवं पातविधानं स्यात्सर्ववस्तु प्रयोजयेत् ॥ २३० ॥
द्विर्भावाद्विकलस्यैवं विज्ञेयं च चतुष्कलम् ।
सप्तमे लघुनि त्वन्त्यो द्विर्भावोऽस्मिन्विधीयते ॥ २३१ ॥
चतुष्कलोऽत्र विहितः कलाष्टकमुपोहनम् ।
एका द्वे च चतुष्कश्च तथा स्यात्प्रत्युपोहनम्(?) ॥ २३२ ॥
यथाक्षरस्य कर्तव्यं मद्रकस्य तु शीर्षकम् ।
चतुष्कलः पञ्चपाणिर्द्विकले द्विकलः स्मृतः ॥ २३३ ॥
चतुष्कलस्तु कर्तव्यो मद्रके तु चतुष्कले ।
त्रिवस्तु त्रिप्रमाणं तु अस्त्रतालसमुद्भवम् ॥ २३४ ॥
इत्युक्तं मद्रकं पातैस्त्रयोदशभिरन्वितम् ।
गुर्वक्षराणि चत्वारि चत्वारि स्युर्लघूनि च ॥ २३५ ॥
तृतीये च चतुर्थे च शम्यातालौ लघूष्व(न्य)पि ।
तालं शम्यां च ताले च संनिपातं च योजयेत् ॥ २३६ ॥
लघ्वक्षरैककलिकैः पातैः सम्यक्प्रयोजयेत् ।
यथाक्षरं वधेष्वेतद्विज्ञेयं चापरान्तकम् ॥ २३७ ॥

आदौ कलोपवहनं विश्लेषाद्विगुणं भवेत् ।
द्विकले कलिकं ज्ञेयं द्विकलं चाप्युपोहनम् ॥ २३८ ॥
कलिंकं कलिकं चेष्टं तथैव प्रत्युपोहनम् ।
एतदेव द्विगुणितं विज्ञेयं तु चतुष्कलम् ॥ २३९ ॥
लध्वक्षरे तृतीये तु द्विर्भावेऽन्त्या कला स्मृता ।
अस्रतालसमुद्भूतं पातैः षड्भिर्विभूषितम् ॥ २४० ॥
वस्तुशाखाख्यमित्येतद्वदितं त्वपरान्तकम् ।
यथा शाखा तथैवास्य प्रतिशाखा विधीयते ॥ २४१ ॥
पश्चिमार्धसमा सा तु तथैवान्यपदा स्मृताः ।
शिरश्चैककलेनापि कर्तव्यं पञ्चपाणिना ॥ २४२ ॥
वृत्तौ निवृत्तयोगश्च गते वस्तुचतुष्टये ।
शाखायां प्रतिशाखायां विशेषः पश्चिमे त्वयम् ॥ २४३ ॥
षट्कलापातसंयुक्ते तालिके तु ततः स्मृते ।
तथैककलयुक्तेऽस्ति विधिवत्पञ्चपाणिना ॥ २४४ ॥
यथाक्षरेणैव भवेदनयोरुपवर्तनम् ।
उपोहनं तु वस्त्वर्धं द्विकलं प्रत्युपोहनम् ॥ २४५ ॥
दक्षिणे तु तथा वृत्तौ चतुष्कलमपीष्यते ।
उल्लोप्यकं तु द्विगुरु द्विलध्वन्ते गुरुर्यथा ॥ २४६ ॥
शम्यातालौ द्विरभ्यस्तौ संनिपातोऽन्त्य एव च ।
प्रत्यक्षरकृतैः पातैः पञ्चभिः समलंकृतम् ॥ २४७ ॥
चतुरस्रस्तु विच्छेदमेवं ज्ञेयं यथाक्षरम् ।
पूर्वोक्तेन विधानेन द्विचतुःकलमिष्यते ॥ २४८ ॥
अस्य चाङ्गत्रये गीते वैहायसकमिष्यते ।
तदेकाङ्गपरं ज्ञेयं द्वादशाङ्गपरं तथा ॥ २४९ ॥
प्रमाणं द्वादशकलं तथापातमथापि च ।
अस्य तु द्विकला शम्या तालश्च द्विकलस्ततः ॥ २५० ॥

द्विकलाश्च पुनः शम्या(म्)तालश्चैककलः स्मृतः ।
ततः शम्या ततस्तालः संनिपातस्ततः परम् ॥ २५१ ॥

शाखेयत्रशिखा(?)तु स्यानि[1](दि)त्थमन्यपदा स्मृता ।
यदा ह्यस्य भवेदन्तस्तदन्ताहरणं बुधैः ॥ २५२ ॥
यथाक्षरेण नियमात्संहार्यं पञ्चपाणिना ।
स्वतालेनात(थ) हीनस्य संहारः परिकीर्त्यते ॥ २५३ ॥
द्विप्रकारनिवृत्तश्च त्र्यंशोऽथ त्रिविधस्तथा ।
त्र्यस्रश्च चतुरस्रश्च मिश्रश्चापि प्रकीर्तितः ॥ २५४ ॥
स्थितप्रवृत्ते तस्याङ्गे महाजनिकमेव च ।
स्यात्पञ्चपाणितालेन तदन्ताहरणं यदा ॥ २५५ ॥
तदा स्थितं भवेद्युग्मं तस्य पातविधिस्त्वयम् ।
शम्यापि द्विकला कार्या तालोऽपि द्विकलः स्मृतः ॥ २५६ ॥
चतुष्कलः संनिपातः प्रवृत्तमत इष्यते ।
अस्य तु द्विकला शम्या तथैवैककला पुनः ॥ २५७ ॥
चञ्चत्पुटश्च तालादिः संनिपातस्ततः परम् ।
स्थितं तालेन कर्तव्यं महाजनिकमस्य तु ॥ २५८ ॥
निवृत्ततालः कर्तव्यः प्रवृत्तस्यापि तत्त्वतः ।
अत्र तालविधिः श्रेष्ठः प्रायः समुपवर्तनम् ॥ २५९ ॥
आप्तमुद्धटकः कार्यः परिवर्तक एव च ।
युग्मे हि मिश्रतालत्वाद्युग्मे ह्यन्तः प्रयुज्यते ॥ २६० ॥
विवधैककसंयुक्तपूर्वं पश्चाद्विधः स्मृतः ।
यथावदन्ततालोऽयं युग्मो मिश्रश्च कीर्तितः ॥ २६१ ॥
अतः परं प्रवक्ष्यामि त्र्यस्रतालविधिं प्रति ।
शम्या तु द्विकला पूर्वं ततस्तालो विधीयते ॥ २६२ ॥
त्रिकलः संनिपातश्च प्रवृत्तं वाप्यतः परम् ।
प्रवृत्तमस्य कर्तव्यं यथावत्परिवर्तनम् ॥ २६३ ॥

---

१. 'नित्य' ख.

यथा करप्रवृत्तेन विधिवत्पञ्चपाणिना ।
आस्यो(?)पि स्थिततालेन महाजनिकमिष्यते ॥ २६४ ॥
निवृत्ततालः कर्तव्यस्तथात्र विनिवृत्तिमान् ।
युग्मौजमिश्रतालत्वान्मिश्रोऽप्यन्तः प्रवर्तनम् ॥ २६५ ॥
विवधैककसंयुक्तः सर्वश्चान्तविधेः स्मृतः ।
द्व्यङ्गमेकाङ्गमपि वा स्थितं कार्यं समासतः ॥ २६६ ॥
तत्र युग्मं भवेद्द्व्यङ्गं·········ऽयङ्गमेव च ।
प्रवृत्तमपि विज्ञेयं द्व्यङ्गमेकाङ्गमेव वा ॥ २६७ ॥
महाजनिकमेकाङ्गं द्व्यङ्गं संहरणं भवेत् ।
स्थितादिकः प्रवृत्ताङ्ग एवमन्तर्विधं बुधैः ॥ २६८ ॥
उल्लोप्यके सदा योज्य ऊहापोहविशारदैः ।
प्रकरीवस्तुषपात्रं(?) पाताश्चैकान्नविंशतिः ॥ २६९ ॥
वस्तुप्रमाणं कर्तव्यं तथैव च चतुष्कलम् ।
आद्यमात्राद्वयस्यान्तः शम्यातालान्वितो भवेत् ॥ २७० ॥
मात्रात्रयस्य चान्यस्य शम्यैका तु ततः स्मृता ।
चतुर्थ्यां द्वादशस्तालः पञ्चम्यां चाष्टमः स्मृतः ॥ २७१ ॥
षष्ठ्यां तु द्विकला शम्या तालश्च द्विकलो भवेत् ।
पुनश्च द्विकलस्तालः शम्या च द्विकला पुनः ॥ २७२ ॥
शम्यातालश्च तु·········शम्या तालस्तथैव च ।
शम्यातालसंनिपात इति वस्तु प्रकीर्तितम् ॥ २७३ ॥
यदा त्वर्धचतुर्थानि वस्तूनि प्रकरी भवेत् ।
पश्चिमार्धं तदस्यैव तदर्धं प्राग्निवेशयेत् ॥ २७४ ॥
कनिष्ठासारितेनास्य कार्यं संहरणं ततः ।
पादः पूर्वसमः कार्यस्त्वपरान्तकशाखया ॥ २७५ ॥
उवेणके द्वितीयोऽपि तस्यैव प्रतिशाखया ।
अनित्यः शीर्षको(?) तालो माषघातस्ततः परम् ॥ २७६ ॥

---

१. 'षण्मात्रा' इति भवते.

माषघातो द्वादशकलस्तस्य पातविधिः स्व(स्त्व)यम् ।
कर्तव्या द्विकला शम्या तालो द्विकल एव च ॥ २७७ ॥
पुनश्च द्विकलस्तालः शम्या च द्विकला पुनः ।
ततश्चैककलस्तालसंनिपातः कलात्रये ॥ २७८ ॥
प्रायेण माषघातश्च विवधाङ्गः प्रकीर्तितः ।
संनिपातश्च पश्चार्धः कदाचिदुपवर्तनम् ॥ २७९ ॥
तस्य स्यात्कलिकेनैव तच्चोधं पञ्चपाणिना ।
संधिर्यथाक्षरेणैव कर्तव्यः पञ्चपाणिना ॥ २८० ॥
एककं विवधो वापि तस्याङ्गं समुदाहृतम् ।
अन्यस्य चतुरस्रस्य प्रवृत्तो या(यो) विधिः स्मृतः ॥ २८१ ॥
विवधाङ्गेन तेनैव चतुरस्रकमिष्यते ।
संधिवद्वज्रतालश्च द्विधा संपिष्टकं स्मृतम् ॥ २८२ ॥
सप्ताङ्गं द्वादशकलं द्वादशाङ्गे तथैव च ।
निष्क्राममादितः कृत्वा शम्यास्तिस्रः प्रयोजयेत् ॥ २८३ ॥
तालत्रयं ततश्चैव शम्यातालौ ततः परम् ।
शम्यातालौ ततः कार्यौ संनिपातोऽन्त्य एव च ॥ २८४ ॥
तुवेणके तु सप्ताङ्गे संपिष्टकमिदं स्मृतम् ।
द्विशम्यातालयोगेन द्वादशाङ्गेऽपि चेष्यते ॥ २८५ ॥
पाता नवैकादश वा संपिष्टकमुदाहृतम् ।
वज्रवस्त्रं प्रयोक्तव्यमुपवर्तनमेव च ॥ २८६ ॥
युक्ताविवधवृत्ताभ्यां प्रवेणी द्विविधा स्मृता ।
पञ्चपाणिः प्रकर्तव्या प्रवेण्या तु यथाक्षरा ॥ २८७ ॥
द्विकलो वापि मिश्रो वा प्रयोगोऽङ्गवशानुगः ।
अन्ते वास्याः प्रकर्तव्यः कदाचिदुपवर्तनम् ॥ २८८ ॥
पञ्चपाणिविधानेन यथोक्तेनैव तद्भवेत् ।
द्वितीयपाततालेन ह्यपपातश्च कीर्त्यते ॥ २८९ ॥

वज्रतालेन कर्तव्यं क्रमं संहरणस्य तु ।
रोविन्दके तु षण्मात्राः पाताश्चैकान्नविंशतिः ॥ २९० ॥
अर्धार्धतीते(?) मात्राणां पञ्चानां पात इष्यते ।
तालः शम्यार्धतालश्च शम्यातालस्तथैव च ॥ २९१ ॥
पञ्चानामपि मात्राणां विधिरेष यथाक्रमम् ।
चतुर्दशोऽपि पञ्चम्या मात्रायास्ताल इष्यते ॥ २९२ ॥
चतुष्कलांतुया(?)तुल्या षष्ठी मद्रकमात्रया ।
इति पादस्तथाष्टौ च कलापादादुपोहनम् ॥ २९३ ॥
ततश्चैव प्रयोक्तव्यं द्विकलं प्रत्युपोहनम् ।
घातश्चेत्संनिपातश्च विवधैकप्रयोजिताः ॥ २९४ ॥
वर्णानुकर्षोऽष्टकलः स्वल्पः प्रस्तार इष्यते ।
तुल्यवर्णोपनहनो द्वितीयः पाद इष्यते ॥ २९५ ॥
शरीरतालकर्तव्यः प्रकारोऽपि विशेषतः ।
द्विकलेनैव कर्तव्यो विशेषात्पञ्चपाणिना ॥ २९६ ॥
कला द्वादश निर्दिष्टं प्रमाणं चास्य तत्त्वतः ।
रोविन्दकशरीरं तु षट्कलोपोहनं स्मृतम् ॥ २९७ ॥
विवधं वापि वृत्तं [वा] तस्यादौ परिकीर्तिता ।
आकारवृत्तपरुषोऽत्र........................ ॥ २९८ ॥
........त्रिवाक्यं स्याच्चतुर्वाक्यं गता स्मृता ।
कार्यं तथा निर्वहणं प्रत्येकं परिधानके ॥ २९९ ॥
इत्येतत्प्रथमं त्वङ्गं लास्ये गेयपदं स्मृतम् ।
स्थितपाद्यस्य वक्ष्यामि विधानं चाप्यतः परम् ॥ ३०० ॥
वृत्तमेकप्रथमे द्वे योजयेत्पञ्चपाणिना ।
ततः परं ते भूयोऽपि युग्मतालेन वा स्मृते ॥ ३०१ ॥
अवसानं तु कर्तव्यं त्वरितं पञ्चपाणिना ।
द्विकलेनेति कर्तव्यं स्थितपाठ्यं प्रयोक्तृभिः ॥ ३०२ ॥

उपोह्य तालं त्र्यस्रं वा वृत्त्या तैस्तैः समैस्तथा ।
आसीनपाठ्यं युञ्जीत सर्वैर्भावैस्तु पौरुषैः ॥ ३०३ ॥
एवं चतुर्भिः पादैस्तु समैरर्थवशानुगैः ।
आसीनपाठ्यं कर्तव्यं विधिवत्पञ्चपाणिना ॥ ३०४ ॥
अतीतयुग्मतालेन श्लोकः कार्यस्ततः परम् ।
अष्टादश द्वादश वा पदानि तु ततः पुनः ॥ ३०५ ॥
कुर्यात्तु(?)त्तरतालेन ताले निर्वहणं बुधः ।
एतदासीनपाठ्यस्य विधानं परिकीर्तितम् ॥ ३०६ ॥
स्यात्पुष्पगण्डिका नाम यदङ्गं तन्निबोधत ।
तत्रैकं पौरुषं श्लोकं समवृत्तं प्रयोजयेत् ॥ ३०७ ॥
चतुर्भिः संनिपातैश्च ज्ञेयं चञ्चुपुटाश्रयम् ।
पादे पादे तथेष्टं च वाद्यं नृत्तं तथैव च ॥ ३०८ ॥
ततश्चान्ये स्मृतं वृत्ते खञ्जनकुटसंज्ञिते ।
अन्ते निर्वहणे चास्य शीर्षकं पञ्चपाणिना ॥ ३०९ ॥
आविद्धशर्याङ्गहारैरुद्धतैस्तत्प्रयोजयेत् ।
ज्योत्स्नायां मन्दिरायां वा सलिले दर्पणेऽपि वा ॥ ३१० ॥
छायासदृशकान्तस्य प्रहर्ष्यथ विभूषितम् ।
नृत्तं प्रसादक्रीडायां हेलादिभिरलंकृतम् ॥ ३११ ॥
अङ्गप्रस्वेदकं तत्राविन्ध्याह्लास्यं प्रयोगवित् ।
चञ्चत्पुटस्य तालेन तस्य प्रक्रीडितं भवेत् ॥ ३१२ ॥
मात्रावृत्तसमैः पादैः श्लोकबन्धो भवेदथ ।
बह्वक्षरार्थसंयुक्तं तोटकं पञ्चपाणिना ॥ ३१३ ॥
द्विकलेन प्रकर्तव्यं मिश्रेणैककलेन वा ।
प्ररोचकं च कर्तव्यं गुरुप्रायोक्षरान्वितम् ॥ ३१४ ॥
यथाक्षरेण त्र्यस्रेण संनिपातैस्तथाष्टभिः ।
विवधैककसंयुक्तं कैशिकी[1]जातिमाश्रिता ॥ ३१५ ॥

---

१. 'कैशिनी' ख.

[1]त्र्यङ्गविच्छेदकं विन्द्याद्युक्तं प्रक्रीडितादिभिः ।
अनिष्ठुरश्लक्ष्णपदं गान्धारीजातिमाश्रितम् ॥ ३१६ ॥
चञ्चत्पुटेन योक्तव्यं नित्रिमूढं(?)कलेन तु ।
चतुःषष्टिः संनिपातास्तस्मिंश्चैव प्रकीर्तिताः ॥ ३१७ ॥
यथा मार्गकलोपेता विदारी विवधान्वितः ।
अङ्गहारान्सविष्कम्भान्नैव चात्र प्रयोजयेत् ॥ ३१८ ॥
केवलं पौरुषैर्भावैर्वाक्यं नाम्नापि तेन यत् ।
नर्कुटं खञ्जकं चैव त्रिविधं न प्रयोजयेत् ॥ ३१९ ॥
सैन्धवीमाश्रितं भाषां ज्ञेयं सैन्धवकं बुधैः ।
रूपवाद्यादिसंयुक्तं युग्मतालकृतं तथा ॥ ३२० ॥
वितस्तालिप्तमार्गेण सैन्धवं वाद्यमिष्यते ।
न पाठ्यं स्वल्पमप्यत्र प्रकुर्वीत विचक्षणः ॥ ३२१ ॥
मुखप्रतिमुखोपेतं तथा चञ्चुपुटाश्रयम् ।
यथाक्षरैः संनिपातैस्तथा द्वादशभिर्युतम् ॥ ३२२ ॥
नेकयुक्तिविचित्रार्थं पौरुषं भावमाश्रितम् ।
एकाङ्गशीर्षकं गत्या द्विभूषं परिकीर्तितम् ॥ ३२३ ॥
उत्तमोत्तमके त्वादौ नर्कुटं संप्रयोजयेत् ।
स्तोकं विचित्रार्थपदं तथा चैवोपपादयेत् ॥ ३२४ ॥
ततश्च वस्तुकं कार्यमपरान्तकशाखया ।
यथाक्षरेण कार्यं तु शीर्षकं पञ्चपाणिना ॥ ३२५ ॥
उत्तमोत्तमकं प्रोक्तं हेलानृत्तविभूषितम् ।
कोपप्रसादबहुलं सविक्षेपैरुपक्रमैः ॥ ३२६ ॥
संलापरचितैर्नित्यमुक्तप्रत्युक्तमिष्यते ।
वज्रार्धेन प्रकर्यास्तु तस्य वा(ता)लविधिः स्मृतः ॥ ३२७ ॥
ततस्तु शीर्षकं कार्यं संयुक्तं पञ्चपाणिना ।
उक्तप्रत्युक्तमेवं हि यथोक्तं परिकीर्तितम् ॥ ३२८ ॥

1. 'अङ्ग' ख.

एवमेतद्बुधैर्ज्ञेयं मार्ण तालप्रमाणतः ।
तद्गाथापाणिकादीनां सप्तरूपं प्रकीर्तितम् ॥ ३२९ ॥
यस्तु तालं न जानाति न स गा[ता] न वादकः ।
तस्मात्सर्वप्रयत्नेन कार्यं तालावधारणम् ॥ ३३० ॥
अङ्गभूता हि तालस्य यतिपाणिलयाः स्मृताः ।
त्रयो लयास्तु विज्ञेया द्रुतमध्यविलम्बिते ॥ ३३१ ॥
छन्दोक्षरपदानां हि समत्वं यत्प्रकीर्तितम् ।
कलाकलान्तरकृतः स लयो मानसंज्ञितः ॥ ३३२ ॥
श्रोतोगता च गोपुच्छा समा(?) चात्र विधाय च ।
निलयत्र(?)भृत्यवर्णानामक्षराणामथापि वा ॥ ३३३ ॥
नियमौ(?)यो(?)यतिः स्यात्तु गीतवाद्यसमाश्रया ।
समपाणिश्च विज्ञेयो ह्यवपाणिस्तथैव च ॥ ३३४ ॥
तथैवोपरिपाणिश्च गीतवाद्यसमाश्रयः ।
लये नयं समं वाद्यं समपाणिः प्रकीर्त्यते ॥ ३३५ ॥
ब्रुवाद्यदवकृष्टं स्यात्सोऽर्धपाणिः प्रकीर्तितः ।
लयस्योपरि यद्वाद्यं पाणिः स उपकीर्त्यते ॥ ३३६ ॥
ततः स्थितलयो यो वै संनिपातो विधीयते ।
स तु मध्यलयप्राप्य संनिपातद्वयं भवेत् ॥ ३३७ ॥
रुतं चापि लयं प्राप्य संनिपातचतुष्टयम् ।
यावत्तत्रान्तरकृता ह्व(द्रु)तमध्यलयो हि सः ॥ ३३८ ॥
सोऽर्धपाणिस्तु विज्ञेयास्त्वन्यैर्द्व(द्रु)तलयाश्रयाः ।
अत ऊर्ध्वं प्रमाणं तु कलानां न विधीयते ॥ ३३९ ॥

इति भारतीये नाट्यशास्त्रे तालविधानो नामाध्याय एकत्रिंशः ।

---

द्वात्रिंशोऽध्यायः ।

ध्रुवासंज्ञानि तानि स्युर्नारदप्रमुखैर्द्विजैः ।
गीताङ्गानीह सर्वाणि विनियुक्तान्यनेकशः ॥ १ ॥

या ऋचः पाणिका गाथा सप्तरूपाङ्गमेव च ।
सप्तरूपप्रमाणं च तद्ध्रुवेत्यभिसंज्ञितम् ॥ २ ॥
एभ्यस्त्वङ्गान्यथोद्धृत्य नानाछन्दःकृतानि च ।
काव्यत्वं यानि गच्छन्ति तानि वक्ष्याम्यहं द्विजाः ॥ ३ ॥
मुखं प्रतिमुखं चैव वैहायसकमेव च ।
स्थितप्रवृत्ते वज्रं च संधिः संहरणं तथा ॥ ४ ॥
प्रस्तारो माषघातः स्यादुपवर्तनमेव च ।
उपघातः प्रवेण्यौ च चतुरस्रं सुशीर्षकम् ॥ ५ ॥
संपिष्टकान्ताहरणे माहाजनिकमुच्यते ।
ध्रुवाणामङ्गसंज्ञानि पञ्चानामपि नित्यशः ॥ ६ ॥
एकवस्तु ध्रुवा ज्ञेया द्विवस्तुपरिगीतिका: ।
प्रिय(त्रिव)स्तु मद्रकं ज्ञेयं चतुर्वस्तु चतुष्पदा ॥ ७ ॥
वाक्यवर्णा ह्यलंकारा यतयः पाणयो लयाः ।
ध्रुवमन्योन्यसंबद्धा यस्मात्तस्माद्ध्रुवा स्मृताः ॥ ८ ॥
ध्रुवास्तु पञ्च विज्ञेया नानासंस्थानसंश्रयाः ।
एतासां संप्रवक्ष्यामि सप्तरूपाङ्गकारणम् ॥ ९ ॥
प्राविशिक्यां स्मृतं तत्र प्रवृत्तं सोपवर्तनम् ।
वज्रं च शीर्षकं चैव शीर्षकार्धं विनिर्दिशेत् ॥ १० ॥
प्रस्तारो माषघातश्च माहाजनिकमेव च ।
प्रवेणी ह्यवपातश्च अइ(द्रु)तायां तथैव च ॥ ११ ॥
मुखप्रतिमुखोपेता ह्यवकृष्टाभिधीयते ।
वैहायसन्नाहरणे स्थितायां संप्रकीर्तितौ ॥ १२ ॥
संहारश्चतुरस्रं च खञ्जनर्कुटके तथा ।
संधिः प्रस्वारसंयुक्तस्त्वन्तरायां प्रकीर्तितौ ॥ १३ ॥
यान्यङ्गानि कलाश्चैव गीतकान्तर्गतानि तु ।
तानि छन्दोगतैर्वृत्तैर्विभाव्यन्ते ध्रुवास्तथा ॥ १४ ॥

त्र्यस्रश्च चतुरस्रश्च तालः कार्यो ध्रुवात्मकः ।
षट्कलोऽष्टकलश्चैव यः पूर्वं परिकीर्तितः ॥ १५ ॥
पूर्वेषामेव गीतानां यान्यङ्गानि स्मृतान्यथ ।
तेषां मध्यात्तासु कार्यो मक्षकं विवधोऽथ वा ॥ १६ ॥
पदवर्णसमाप्तिस्तु विदारीत्यभिसंज्ञिता ।
एतेषां संप्रवक्ष्यामि विधिप्रकृतिसंभवम् ॥ १७ ॥
ज्येष्ठानां वृत्तसंयुक्तं कुर्यादादौ तथैव च ।
विवधं चैव मध्यानां नीचानामेककं तथा ॥ १८ ॥
त्र्यस्रं वा चतुरस्रं वा योगं ज्ञात्वा प्रयोजकम् ।
तेन प्रमाणयोगेन ध्रुवा स्यादावसानिकी ॥ १९ ॥
गायत्र्यां चातिशक्कर्यामन्तरे या व्यवस्थिता ।
तेन प्रमाणयोगेन ध्रुवा कार्यावसानिकी ॥ २० ॥
शक्कर्यां चातिकृत्यां च यान्तरे त्वावसानिकी ।
तेषां मात्रा द्विर्विहिता ध्रुवा पादमयी स्मृता ॥ २१ ॥
यतिछन्दोविधानेन गुरुलघ्वक्षरान्वितः ।
कार्यो मात्राप्रमाणेन ध्रुवावादोऽवसानिकः ॥ २२ ॥
मध्यमोत्तमयोः कार्या चतुरस्रावसानिकी ।
मध्यावसाना कर्तव्या त्र्यस्रा चैवावसानिके ॥ २३ ॥
अर्थपूर्णपदी या तु तस्या वृत्तं प्रयोजयेत् ।
तत्रेष्टवृत्तप्रामाण्याद्ध्रुवा कार्या प्रमाणतः ॥ २४ ॥
ध्रुवास्तु पञ्च विज्ञेया नानावृत्तसमुद्भवाः ।
यथास्थानरसोपेता ह्युत्तमाधममध्यमा ॥ २५ ॥
कनीयसीग्रहा काचित्संनिपातग्रहापरा ।
तथा कारेग्रहा काचित्त्रिविधा तु ध्रुवा स्मृता ॥ २६ ॥
गन्धर्वे यत्स्मृतं पूर्वं स्वरतालपदात्मकम् ।
पदं तस्य भवेद्वस्तु स्वरतालानुभावितम् ॥ २७ ॥

यत्स्यादक्षरसंबद्धं तत्सर्वं पदसंज्ञितम् ।
निबद्धं चातिबद्धं च येनमेन(?) द्विधा स्मृतम् ॥ २८ ॥
अतालं च सतालं च द्विप्रकारं तदुच्यते ।
सतालं च ध्रुवार्थेषु निबद्धं सर्वसाधकम् ॥ २९ ॥
यत्तु वाकरणोपेतं सर्वातोद्यानुरञ्जनम् ।
अतालेन निबद्धं च पदतालं प्रकीर्तितम् ॥ ३० ॥
नियताक्षरसंबद्धं छन्दोयतिसमन्वितम् ।
निबद्धं तु पदं ज्ञेयं सतालपतनाक्षरम् ॥ ३१ ॥
अनिबद्धाक्षराणि स्युर्यान्यजातिकृतानि तु ।
आतोद्यकरणं तेषां विधानमभिनिर्मितम् ॥ ३२ ॥
अपदान्यनिबद्धानि तालेन रहितानि तु ।
आतोद्येषु नियुक्तानि तानि तानि तु रञ्जयेत् ॥ ३३ ॥
यानि चैव निबद्धानि छन्दोवृत्तविधानतः ।
ध्रुवासंज्ञानि पूर्वाणि तानि सर्वाणि रञ्जयेत् ॥ ३४ ॥
यानि चैव निबद्धानि तानि वक्ष्यामि तत्त्वतः ।
अव्यक्तं च प्रतिष्ठं च मध्यमात्रयमेव च ॥ ३५ ॥
एताः स्थितावकृष्टास्तु त्र्यस्रा ज्ञेया हि जातयः ।
उष्णिगनुष्टुब्बृहती पङ्क्तिश्चेतीह जातयः ॥ ३६ ॥
एताः प्रासादिकादीनां त्र्यस्रा ज्ञेया यथाक्रमम् ।
अनुष्टुब्बृहती चैव जगत्यथ विलम्बिता ॥ ३७ ॥
त्व(द्रु)ता च चपला चैवमुद्रता धृतिरेव च ।
ध्रुवाणां जातयो ह्येताः प्रयोगेषु प्रकीर्तिताः ॥ ३८ ॥
प्रावेशिकीनां जातीनामुद्धतानां निबोधत ।
पङ्क्तिस्त्रिष्टुब्जगती च तथातिजगती पुनः ॥ ३९ ॥
शाक्करी चेति निर्दिष्टा उद्धृतानां तु जातयः ।
सर्वा समानजातीनां त्रिविधं वृत्तमिष्यते ॥ ४० ॥

गुरुप्रायं लघुप्रायं गुरुलघ्वक्षरं तथा ।
गुरुप्रायावकृष्टा स्याल्लघुप्राया हृ(द्रु)ता तथा ॥ ४१ ॥
गुरुलघ्वक्षरप्रायाः शेषाः कार्या ध्रुवास्तथा ।
वृत्तान्योजःकृतानि स्युर्दुःखदानि भवन्ति हि ॥ ४२ ॥
तानि ध्रुवासु योज्यानि लघुयुग्मकृतानि तु ।
यानि चाल्पाक्षराणि स्युरल्पच्छन्दःकृतानि तु ॥ ४३ ॥
तानि स्थितावकृष्टासु कार्याण्याक्षेपिकीषु च ।
यान्योजयुग्मछन्दांसि ज्ञेयान्याक्षेपिकी तथा ॥ ४४ ॥
लघुयुग्मकृता या स्यात्स्थिता सा क्षेपिकी भवेत् ।
विषमांशाक्षराणि स्युः पादैरर्थवशानुगैः ॥ ४५ ॥
शम्यातालेन ता योज्या वर्णेनाकर्षितेन तु ।
जातीनां त्वथ सर्वासां छन्दोवृत्तनिदर्शनम् ।
स्थानप्रमाणसंज्ञाभिर्गदतो मे निबोधत ॥ ४६ ॥

**गुरुर्गाथांशकौ यस्याः सर्वपादेषु दृश्यते ।**
**श्रीरिति ख्यातनामासौ कीर्तिता प्रथमा ध्रुवा ॥ ४७ ॥**

यथा—

[१]........ ।
........ ॥ ४८ ॥
[........ ।
........] ॥

........................................ ।
........................................ ॥ ४९ ॥

देवं स(श)र्वम् ।
ईशं वन्दे ॥ ५० ॥

**मध्यलघुनाथ विद्युत्पादेन समं विभक्तेन ।**
**आदित्यलघुना वृत्तिः स्याद्गणनाया ज्योतिमात्रेण ॥ ५१ ॥**

---

१. श्रीछन्दोलक्ष्यं त्रुटितमवभासते. द्व्यक्षरछन्दो लक्षणमपि त्रुटितं प्रतीयते.

यथा—

शंकरः शूलधृक् ।
पातु मां लोककृत् ॥ ९२ ॥
**लघुः स्यात्पदादौ ।**
**त्रिके या वृत्तिः सा ॥ ९३ ॥**

यथा—

उमेशः सुरेन्द्रः ।
तवायुः करोतु ॥ ९४ ॥
**लघु वा गुरु वा ।**
**कथिता रजनी ॥ ९५ ॥**

यथा—

विरहे अधिकम् ।
मदनो दहति ॥ ९६ ॥

एताच्छन्ते(?) च एते च(?) ज्ञेया वै गीतजातयः ।
प्रतिष्ठासुप्रतिष्ठाभ्यां भूयो वक्ष्यामि लक्षणम् ॥ ९७ ॥
**द्वितीयं लघु सर्वत्र चतुर्णां यत्र दृश्यते ।**
**सा प्रतिष्ठा बुधैर्ज्ञेया सुप्रतिष्ठाद्वयेन तु ॥ ९८ ॥**

प्रतिष्ठा यथा—

सोतवन्तो अगायाद्धम् ।
वाइ वाओ मुम्पवाही ॥ ९९ ॥
[........................ ।
वाति वातः ............ ॥]

सुप्रतिष्ठा यथा—

पदिट्ठा उपकुसुइ ।
आइज्जंइ हंसवइ ॥ ६० ॥
[...................... ।
आखिद्यति हंसपतिः ॥]

**लघुनी प्राग्गुरुणी द्वे ।**
**यदि पादे भ्रमरी सा ॥ ६१ ॥**

यथा—

वणखण्डे अदिमत्तो ।
वणहत्थी परिखिण्णो ॥ ६२ ॥
[वनखंण्डेऽतिमत्तः ।
वनहस्ती परिखिन्नः ॥]

**प्रथमतृतीये यस्यां लघुनी चतुरक्षरे ।**
**पादे नित्यं भवेतां हि सा जयेत्यभिसंज्ञिता ॥ ६३ ॥**

[यथा—]

हिमाहए वणन्तए ।
अस्तअनू वह्वण्णउ ॥ ६४ ॥
[हिमाहते व्रणान्ते(वनान्ते) ।
........................ ॥]

**चतुर्णां यत्र पादानां तृतीयं च लघुर्भवेत् ।**
**विज्ञेया सुप्रयोगज्ञैर्विजया नाम नामतः ॥ ६५ ॥**

[यथा—]

मोरुल्लउ नच्चन्तउ ।
महागमे संभत्तउ ॥ ६६ ॥
[........ नृत्यन्तः ।
............... ॥]

**पादे पादे तु स्यात्(स्युः) सर्वे ।**
**दीर्घे(र्घा) वृत्ते विद्युद्भ्रान्ता ॥ ६७ ॥**

यथा—

एए गज्जन्ता तोयं मुञ्चन्ता ।
लोयं छादन्ता संपण्णा मेहा ॥ ६८ ॥

---

१. 'वृत्तेऽस्मिन्' इत्यादर्शद्वयपाठः.

[एते गर्जन्तस्तोयं मुञ्चन्तः ।
लोकं छादयन्तः संपन्ना मेघाः ॥]
**आद्यपरे द्वे यत्र तु ह्रस्वे ।**
**सा खलु नाम्ना भूतलमान्या ॥ ६९ ॥**

[यथा—]

मेहणिरुद्धं पारखअच्चम् ।
वंभार्याह्लाए(?) अंसु किलिण्णा ॥ ७० ॥
[............................ ।
............................ ॥]
**यदि च गुरुः पदनिधने ।**
**भवति हि सा कमलमुखी ॥ ७१ ॥**

यथा—

पवणहदो सलिलघणा ।
भमइ णहे अहियमसौ ॥ ७२ ॥
[........................ ।
........................ ॥]

**प्रथमं च तृतीयं च अन्त्यं चैव यदा गुरु ।**
**दृश्यते प्रतिपादं तु सा ज्ञेया वागुरुर्यथा ॥ ७३ ॥**

मेह उद्वेतुं नई(णेई) जोह्णउं ।
णिच्च णिप्पहे एस चन्दउ ॥ ७४ ॥
[........................ ।
........................ ॥]

**द्वितीयं नैधनं चैव यत्र दीर्घाणि सर्वतः ।**
**सुप्रतिष्ठाकृते पादे शिखा ज्ञेया तु सा यथा ॥ ७५ ॥**

चेलाहएहिं येएजिएहिं ।
णं हंसमत्ता परुणयं वा ॥ ७६ ॥

[.................... ।
.................... ॥]

**लघुनी आदौ चरणे यस्याः ।**
**गदिता नाम्ना घनपङ्क्तिः सा ॥ ७७ ॥**

यथा—

तडियंखुद्धं घणसंरुद्धम् ।
जलधारेहिं रुदती वद्धम् ॥ ७८ ॥
[.................... ।
.................... ॥]

एतास्तु जातयो ज्ञेयाः सुप्रतिष्ठाध्रुवास्त्वथ ।
अत ऊर्ध्वं प्रवक्ष्यामि गायत्री परिकल्पनम् ॥ ७९ ॥

**आद्ये पुनरन्त्ये पादे गुरुणी चेत् ।**
**स्यात्सा तनुमध्या गायत्रसमुत्था ॥ ८० ॥**

यथा—

वज्राहयतुन्दो याउज्जरसुत्तो ।
एसो गिरिरायो भूमीं पदद्दीवा ॥ ८१ ॥
[.................... ।
.................... ॥]

**आद्यं चतुर्थमन्त्यं च गुरूण्येतानि यस्य तु ।**
**गायत्र्यधिकृते पादे ज्ञेया सा शालिनी यथा ॥ ८२ ॥**

दीसदि तुं न छै पुद्यदि साम हे ।
जुह्न समागतं कौमुदिचं....दो ॥ ८३ ॥
[.................... ।
.................... ॥]

**गुरुयुग्ममन्ते यदि परमस्याः ।**
**इह कथिता सा मकरकशीर्षा ॥ ८४ ॥**

---

१. 'पर' ख.

यथा—

इह शिशिरम्मि पमदवणम्मि ।
मदजणणम्मि विचरदि वादो ॥ ८५ ॥
[इह शिशिरे प्रमदवने ।
मदजनने विचरति वातः ॥]

**लघुनी चतुर्थे चरणे तु यस्याः ।**
**भवतीह वासौ विमला तु नाम्ना ॥ ८६ ॥**

यथा—

तुकमालाकरे सुं भमरोणेवे ।
समसुद्धवत्ती विहगाणपत्ती ॥ ८७ ॥
[························ ।
························ ॥]

**यत्र स्युश्चरणे त्रीण्यादौ निधनम् ।**
**दीर्घाणीह तु सा वीर्यो नाम यथा ॥ ८८ ॥**

गज्जन्ते जलदा णच्चन्ते सिहिणो ।
गायन्ते भमरा राम्म या(प्पा)उपस ॥ ८९ ॥
[गर्जन्ते जलदा नृत्यन्ति शिखिनः ।
गायन्ति भ्रमरा आरम्भे प्रावृषः ॥]

**त्रिलघुरादितो यदि च पञ्चमम् ।**
**भवति पादतः प्रकथिता गिरा ॥ ९० ॥**

यथा—

जलदणादयं सुणिय कुञ्जरो ।
णददि काणणे पडिगयाहुरो ॥ ९१ ॥
[जलदनादं श्रुत्वा कुञ्जरः ।
नदति कानने प्रतिगज········ ॥]

**आद्ये चतुर्थकमन्ते तथा गुरुः ।**
**यस्यास्तु पादतो ज्ञेया हि सा जला ॥ ९२ ॥**

यथा—

एसा हि वाउणा विरिकत्तपुन्नयनम्(?) ।
दट्ठूण पादवं हंसी परुणिआ ॥ ९३ ॥
[एषा हि वायुना ............... ।
दृष्ट्वा पादपं हंसी प्ररुदिता ॥]

**त्रीण्यादौ यदि स्यादन्त्ये च द्वे दीर्घे ।**
**ज्ञेया सा विधिज्ञैर्नाम्ना वै सुनन्दा ॥ ९४ ॥**

यथा—

एदेण दुमाणा अङ्गं स्वदे(?)यत्ता ।
भीमा कालमेहा उखेधेयंजरात्ति ॥ ९५ ॥
[................................ ।
................................ ॥]

**आद्यं चतुर्थं च अन्त्यमुपान्त्यं च ।**
**यत्र गुरूणि स्युः सा ललिता ज्ञेया ॥ ९६ ॥**

यथा—

साहससुब्भावं कित्तिपिए कुद्धाम् ।
मादिरसंबद्धां उच्छिसिसब्भावम् ॥ ९७ ॥
[................................ ।
................................ ॥]

**त्रीण्यादौ तु यदि अन्त्यं चापि गुरु ।**
**नाम्ना वै कथिता पङ्क्तिः सा तु यथा ॥ ९८ ॥**

एसा हंसवधू हिच्छाकाणणउ ।
गन्तुं जस्सु(ऊसु)इया कन्तं संगइआ ॥ ९९ ॥
[एषा हंसवधू ........कानन ।
गन्तुमुत्सुकिता कान्तं संग.... ॥]

**लघुनी गुरु च द्विगुणं यदि चेत् ।**
**चरणे चरणे कथिता नलिनी ॥ १०० ॥**

यथा—

पवणा हतका तरुणा तरवो ।
कुसुमागमए वि·················· ॥ १०१ ॥
[पवना हतकास्तरुणास्तरवः ।
कुसुमागमे ················ ॥]

**यस्या द्वितीयं ह्रस्वं सर्वमन्यद्दीर्घम् ।**
**यत्र यत्र(?) पादे नीलतोया वै सा ॥ १०२ ॥**

यथा—

मेह वं वादि विरिकरिन्दो वादि(?) ।
दूसहो आदादि पादपाणं लासी ॥ १०३ ॥
[·························· ।
·························· ॥]

गायत्र्या जातयो ह्येता विज्ञेयाः समवृत्तजाः ।
अत ऊर्ध्वं प्रवक्ष्यामि उष्णिग्जातिविकल्पनम् ॥ १०४ ॥

**गुरुनिधनगतं यदि भवति सदा ।**
**भवति तु चपला हृ(द्रु)तगतिरपि सा ॥ १०५ ॥**

यथा—

सुचिरनयनं वरमणिनिकरम् ।
मम मदजननं तव वदनमिति ॥ १०६ ॥

**तृतीयं पञ्चमं चैव गुरुर्यत्र तु नैधनम् ।**
**तदा तूष्णिक्कृते पादे तन्वी सा नामतो यथा ॥ १०७ ॥**

पिय वाइ वायतुं(?) सुवसन्तकाल···· ।
पिय कामुको पिय मदणं जणन्तउ ॥ १०८ ॥
[·························· ।
·························· ॥]

**गुरुणा लघुना चैव समं नीचा च या ध्रुवा ।**
**छन्दस्युष्णिहि वृत्तज्ञैर्विज्ञेया कामिनी यथा ॥ १०९ ॥**

परिकत्रण अब्भदं माधवं हिदुवा···· ।
यादवं मुष्णज्जर्तुं वाइ दक्खिणाणिलो ॥ ११० ॥
[···· ···· ···· ···· ···· ···· ···· ···· ···· ।
···· ···· ···· ····वाति दक्षिणानिलः ॥]

**आद्ये च पुनरन्त्ये पादेषु गुरुणी सा ।**
**ज्ञेया भ्रमरमाला नाम्ना···कथिता···· ॥ १११ ॥**

यथा—

हंसागमनधीरं कासं सुअविचित्तम् ।
एदं सरदकाले रम्मं सुरभि तोयम् ॥ ११२ ॥
[हंसागमनधीरं काशं सुखविचित्रम् ।
एतच्छरदकाले रम्यं सुरभितोयम् ॥]

**आद्यचतुर्थगते अन्त्यतमं च गुरु ।**
**यत्र सदा चरणे सा खलु भोगवती ॥ ११३ ॥**

यथा—

चक्कसणामवधू कन्तसह्वइ(हाअ) णिया(?) ।
णिम्मल यसिंस जले दिडदि संगहिया ॥ ११४ ॥
[चक्रसनामवधूः कान्तसहायं नीता ।
निर्मलेऽस्मिञ्जले···· ····सङ्गहिता ॥]

**आदौ यदि गुरुणी अन्त्यं निधनगतम् ।**
**ज्ञेया····मधुरिका उष्णिग्वेहि कथिता ॥ ११५ ॥**

यथा—

एसा पियकलता रसा(म्मा)भरणमुदा ।
काले मदजणणे जादा कुसुमवदी ॥ ११६ ॥
[एषा प्रियकलता रम्याभरणमुदा ।
काले मदजनने जाता कुसुमवती ॥]

---

१. 'पादवं' ख.

**द्वितीयं च चतुर्थं च त्वन्त्योपान्त्ये तथैव च ।**
**पादे पादे गुरूणि स्युः सुभद्रा नामतो यथा ॥ ११७ ॥**

वणम्मि सुरकररे(?) कपणद्वयरिकसत्थे (?) ।
करेणुअ ण्विहीणो उवेदि मत्तहत्थी ॥ ११८ ॥
[वने........................................... ।
करेण्वा विहीन उपैति मत्तहस्ती ॥]

**यदि च गुरूण्यन्ते चरणविधौ त्रीणि ।**
**तत इह विज्ञेया कुसुमवती नाम्ना ॥ ११९ ॥**

यथा—

जलहरसंभत्तो महिहरमूले वि ।
सहपरिसंधुजुत्तो(?) पचिवरिदो हत्थी ॥ १२० ॥
[जलधरसंभृतो महीधरमूलेऽपि ।
..................................हस्ती ॥]

**द्वितीयं सतृतीयं तथान्ते इह दीर्घम् ।**
**पाद(यदि) त्रयं तु पादे भवेत्सा समुदिता ॥ १२१ ॥**

यथा—

महामोहविदाणं वलायाकुलवद्धम् ।
महाभीमनिनादा यदित्तं गणयम्मि ॥ १२२ ॥
[............................................... ।
............................................... ॥]

**यदि चतुर्थमन्त्यं गुरु तथैव षष्ठम् ।**
**भवति सा तु नाम्ना निगदिता मनोज्ञा ॥ १२३ ॥**

यथा—

कुसुमगन्धवाही सलिलरेणुपुण्णो ।
रमणि वादि वादो मणसिजं जणन्ते ॥ १२४ ॥
[कुसुमगन्धवाही सलिलरेणुपूर्णः ।
रमणि वाति वातो मनसिजं जनयन् ॥]

अन्ये तु—

'यदि चतुर्थं (चा)न्त्यं गुरु तथैव षष्ठम् ।
भवति सा तु नाम्ना निगदिता मनोज्ञा ॥' इति ।

प्रथमं यत्र पादे लघुनी पञ्चमं च ।
कथिता सा तु दीप्ता सततं चेदमुष्णिक् ॥ १२५ ॥

पणे चणो युक्प्रवाही मदणं दीवयन्तौ ।
शिशिरे वाति काले मम संयोजणे स्तौ ॥ १२६ ॥

[..............मदनं दीपयन्तौ ।
..............मम संयोजने स्तः ॥]

आद्यमथ पञ्चमं दीर्घमथ नैधनम् ।
यत्र यदि नाम चेच्चञ्चलगतिस्तु सा ॥ १२७ ॥

यथा—

मेहलमुधूर्तु....णिम्मलगहाउलो ।
सो हिदणं हंगणो गोमालकरो ससी ॥ १२८ ॥

[................................ ।
..............................शशी ॥]

एतास्तु ज्ञातयो ज्ञेयाः स्थितप्रासादिकेष्वथ ।
अतः परं प्रवक्ष्यामि त्वनुष्टुब्लक्षणं पृथक् ॥ १२९ ॥

तृतीयं नैधनं चैव यत्र दीर्घं भवेत्सदा ।
पादे तु पुष्कृते(?) तज्ज्ञैः सा ज्ञेया ललिता यथा ॥ १३० ॥

विकचाम्बुजहसिरे(ए) भ्रमरावलिमुखरे ।
बहुणिम्मलसलिले विहगो परिभमिदो ॥ १३१ ॥

[विकचाम्बुजहसिते भ्रमरावलिमुखरे ।
बहुनिर्मलसलिले विहगः परिभ्राम्यति ॥]

---

१ 'पादेऽनुष्टुप्कृते' इति भवेत्.

**पञ्चमं नैधनं चैव पदे स्यातां तु यत्र वै ।**
**नित्यमानुष्टुभो दीर्घो विज्ञेया ललितेति सा ॥ १३२ ॥**

यथा—

कुसुमसुगन्धियए मणसिजजीवणए ।
पमदवणगणए चित्तरदि हंसवए ॥ १३३ ॥
[कुसुमसुगन्धिते मनसिजजीवने ।
प्रमदवनगणे ............ हंसपदे ॥]

**षष्ठं चैवाष्टमं चैव यस्याः स्यादक्षरं गुरु ।**
**नित्यमानुष्टुभे पादे मही ज्ञेया तु सा यथा ॥ १३४ ॥**

बहुकुसुमसोहिए कमलवणसण्डए ।
सहयरसहायणी पविचरदि हंसिआ ॥ १३५ ॥
[बहुकुसुमशोभिते कमलवनषण्डे ।
सहचरसहायिणी प्रविचरति हंसिका ॥]

**लघुगण इव षट्के यदि भवति सुखे तु ।**
**चरणगतिविधौ सा मधुकरसईशाख्या ॥ १३६ ॥**

यथा—

विविधवणविचारी कमलवणसुअन्धी ।
कुमुदवणविबोधी भमदि सरदि वादो ॥ १३७ ॥
[विविधवनविचारी कमलवनसुगन्धी ।
कुमुदवनविबोधी भ्रमति शरदि वातः ॥]

**यदि खलु पञ्चमकं पुनरपि चान्त्यतमम् ।**
**गुरुचरणे तु भवेद्भवति हि सा नलिनी ॥ १३८ ॥**

यथा—

पुलिणतलङ्गणए कमलणिधिवासिणि ।
पिययमवासगिहं विसरदि सारसिआ ॥ १३९ ॥
[पुलिनतलाङ्गणे कमलनिधिवासिनि ।
प्रियतमवासगृहे विसरति सारसिका ॥]

प्राग्यदि निधनगतं स्यादथ गुरु सततम् ।
यत्र हि चरणविधौ सा खलु भवति नदी ॥ १४० ॥

यथा—

हंसकुलसंमुदिदे सारसकुञ्चमुहल ।
मत्तमधुकरगण हिण्डदि मधुकरिका ॥ १४१ ॥

[हंसकुलसंमुदिते सारसक्रौञ्चमुखरे ।
मत्तमधुकरगणे हिण्डति मधुकरिका ॥]

अनुष्टुब्जातयो ह्येताः प्रावेशिक्याः प्रकीर्तिताः ।
स्त्रीणामुत्तममध्यानामवकृष्टां निबोधत ॥ १४२ ॥

आद्ये चतुर्थमपि चान्त्ये दीर्घाणि यत्र चरणे तु ।
प्रा[ति]वेशिकी बृहती सा नाम्ना तथैव रुचिरान्ता ॥ १४३ ॥

राहुपराय हि यसो हो वन्दोणहिं णिसमिउणा ।
तारागणो विगुरुमोहो तेजोसुकेंहिं रुदतीय ॥ १४४ ॥

[.................................................. ।
तारागणो.......................................... ॥]

यदि पञ्चमं हि सतृतीयं गुरुणी पादान्तरचिते वै ।
प्रमितेति भवति नाम्ना [ह्य]वकृष्टा जातिरिह पङ्क्तिः ॥ १४५ ॥

यथा—

वणगब्भगेहपरिखित्तो अरुणजहापिहिदसोहो ।
गणयं गणेपिहिदरभेणे विताइ जुए हरहिहिंदु ॥ १४६ ॥

[.................................................. ।
.................................................. ॥]

यदि खलु षष्ठमथान्त्ये भवतो गुरुणी चरणयोगे ।
स्थितनहता नु जगती यदि निगदिता विगतशोका ॥ १४७ ॥

यथा—

जलधरदि(वि)तानपिहिअङ्गो रदि(वि)किरणजालहतमोहो ।
गहतुकणिदिग्भतविवण्णो अणुविसदि अत्थगिरिमिह्न ॥ १४८ ॥

[जलधरवितानपिहिताङ्गो रविकिरणजालहतमोहः।
........................अनुविशत्यस्तगिरिमिह ॥]

**आद्ये चतुर्थमपि चाष्टममक्षरमेकादश यदि भवेच्च गुरु।**
**सा त्रैष्टुभी भवति पादविधौ विश्लोकजातिरवक्रुष्टता ॥ १४९ ॥**

यथा—

मेकछ्तुरदिकरात्रिहंदो वारणे हदो वारणेहि विधरिङ्गन्निदो।
इत्थं वेइ अरुणोसिओ वदो न हंमिरयणी सहिओ ॥ १५० ॥

[.................................................. ।
.................................................. ॥]

**आद्ये चतुर्थं दशमं नैधनं ह्यष्टमं तथा।**
**यत्र दीर्घाणि पादे स्युस्तद्वृत्तं ललितं स्मृतम् ॥ १५१ ॥**

यथा—

एसोयमत्तमयघुम्मिदाणणो दीणे पफुल्लवणवाग्रुचालिओ।
पासाभिबद्धचरणोगयाणुगो रम्मं वणं वणं गय वचरोपलो ॥ १५२ ॥

[.................................................. ।
.................................................. ॥]

**यदि पञ्चमं हि सतृतीयनैधनं**
**नवमं तृतीयमपि तादृशं वरणम्।**
**भवति हि गुरूणि यत्र वै जगती**
**पदैर्भवति सामानावमाना ॥ १५३ ॥**

यथा—

वसन्त वन्तु ददिदाणमम्बरं
अवलम्बिउं ण रअणीमुहे ससी।
गहगाहमं दिविगलन्तजोह्णउं
ण विराजदे समधिकं पतीविव ॥ १५४ ॥

[वसन्त..............................
अवलम्बितुं न रजनीमुखे शशी।

.... .... .... .... .... .... .... ....

न विराजते······ ······ ······ ······ ॥]

एतास्तु जातयो ज्ञेयाः स्थितानां तु प्रवेशनाः ।
आक्षेपिकावकृष्टानां संप्रवक्ष्यामि लक्षणम् ॥ १५५ ॥
सुप्रतिष्ठादिकं छन्दो ह्यवकृष्टासु योजयेत् ।
वृत्तान्यन्यानि यानि स्युर्देवस्तुत्याश्रयाणि तु ॥ १५६ ॥
अवकृष्टा ध्रुवाणां हि कलान्तरकलासु च ।
अक्षराणां निवेशस्तु वृत्तजा तु विधीयते ॥ १५७ ॥
अल्पवर्णान्तरा चैव ह्यवकृष्टा विधीयते ।
प्रावेशिक्यास्तु संक्षेपकारणानां परिग्रहात् ॥ १५८ ॥
एवं ज्ञेयोऽवकृष्टानां जातीनां वृत्तिसंभवः ।
अत ऊर्ध्वं प्रवक्ष्यामि द्रुतानामिह लक्षणम् ॥ १५९ ॥
मुखे तूद्बोधकं कृत्वा शेषं ह्रस्वैस्तु योजयेत् ।
युग्ममोजं विमिश्रं च तथैव लघुसंचयः ॥ १६० ॥
जगत्यादिर्भवेत्सा तु तथा च धृतिनैधना ।
तथा ह्रता च छन्दोभिर्नानावृत्तसमुद्भवा ॥ १६१ ॥

अष्टावादौ यस्याः सान्त्यं स्यान्नवमं
　दीर्घाणि स्याद्वैशिष्टो [वै]द्वे लघुनी ।
वृत्तं ह्येतज्ज्ञेयं तज्ज्ञैर्वृत्तविधौ
　गीते ह्येवं नित्यविक्रान्ता जगती ॥ १६२ ॥

यथा—

एसो मेहो णाणं दत्ते धूमनिभे
　विज्जादोसे लध्वन्तेजावि
दुर्लभजालावद्धो मिदुविसो
　गोविजाश्वीणायं ततो दिग्गजो ॥ १६३ ॥

[एष मेघो······ ······ ······ ····
　···· ···· ···· ···· ···· ···· ···· ।

१. 'ह्रस्वाना' ख.

.......................................

....................................... ॥]

अष्टवेदौ दीर्घाणि स्युः स्वस्तिजगती ।

अन्त्ये दीर्घे सा विज्ञेया मदनवती ॥ १६४ ॥

यथा—

एसो मेहो नाणं दत्ते गवलनिभे ।

संधारितोपि जुज्जोवं भमदि दुदम् ॥ १६५ ॥

[एष मेघः....................................... ।

....................................... ॥]

पञ्च त्वादौ यत्र दीर्घेष्टममया-

मन्त्यं नान्यद्दीर्घकृतं चेद्भवति सदा ।

शाक्यैतत्काव्यविधिज्ञैस्त्विह विहिता

नाम्ना विहितं कुसुमवती स्खलितगतिः ॥ १६ ॥

यथा—

तारामज्जे मेहविशुष्को[1] विमलतरे

उज्जाहिन्तो जादि समग्गं रजतनिभो ।

जोह्लासोहं विकिरमाणो गगणतले

लीलायत्तो गच्छदि एसो रजनिकरो ॥ १६७ ॥

[तारामध्ये मेघविमुक्तो विमलतरे

.........याति समग्रं(?) रजतनिभः ।

ज्योत्स्नाशोभां विकिरन्गगनतले

लीलायत्तो गच्छत्येष रजनिकरः ॥]

आद्यचतुर्थे पञ्चमषष्ठे नवदशमे[2]

पादे विभक्तिर्यत्र तु दिव्ये पञ्चदशाख्ये ।

---

१. 'विमुक्को' इति भवेत्. २. अशुद्धिबाहुल्याच्छन्दो न ज्ञायते. त्रुटिचिह्नमादर्शद्वयेऽपि न.

..........सुविहि....सदा भूतलतन्वी
वृत्तविधानेत्य..............विहिता ॥ १६८ ॥

यथा—

....................................
....................................... ।
....................................
वायदि वादो एह पवाही रुसिद इव ॥ १६९ ॥

[....................................
....................................... ।
....................................
वाति वात एष प्रवाही ........ ॥]

आद्यचतुर्थकसप्तममन्त्यं दशमपरा(?) ।
यत्र गुरूण्यथ सा सुकुमारेत्यभिगदिता ॥ १७० ॥

यथा—

मेहसमूहणिबद्धविदाणं जलसविसो
सो हरिइन्धदणुज्जलमेरुगयणतलम् ।
................................
.................................... ॥ १७१ ॥

[मेधसमूहनिबद्धवितानं जल....
....................................... ।
....................................
.......................................... ॥]

यदि खलु पञ्चमषष्ठम(?)मन्त्यं दशमपरे (?) ।
चरणगतानि गुरूणि माला भवति तदा ॥ १७२ ॥

यथा—

....................................
....................................... ।

अंसणिखाहदयावदसुधे धरणिधरो
पगलिलिदनिज्जरङ्कं दरसादामुहादिरिआ ॥ १७३ ॥

[..........................................................
.......................................................... ।
..........................................................
.......................................................... ॥]

तृतीयं च चतुर्थं च सप्तमं चाष्टमं तथा ।
नवमं द्वादशं चैव नैधनं सत्रयोदशम् ॥ १७४ ॥

यत्र दीर्घाणि पादे तु वृत्तिश्छन्दः समाश्रयेत् ।
स संज्ञागीतकविधौ ध्रुवा स्खलितविक्रमा ॥ १७५ ॥

यथा—

दिवसं सूरसणाहं सेविअचन्दे कुसुमदवीण
उदिदो दीसदि एसो दप्पणविचाकि दिसदिसे ।
गयणे मेहविमुक्के पुम्मसहावो रदिसुहवे
विहरं विक्किरमाणो सारदुजुलं वजदि दुदम् ॥ १७६ ॥

[..........................................................
.......................................................... ।
..........................................................
.......................................................... ॥]

पञ्चमं ह्यष्टमं यत्र त्रयोदशमथापि च ।
गुरूण्यष्टादशं चैव हृता वै चपला तु सा ॥ १७७ ॥

यथा—

पवणविकत्तिय पङ्कजं कुसुमं सदसि जलं
कमलपत्तपसाहितसुगंधलित्तनिभम् ।
वलिदतरन्तविदाहितकुमुदं गलिदगवि
खुमिदविहंगमकम्पितमुहलंअसद्दिविआ ॥ १७८ ॥

[.................................................
.................................................. ।
.................................................
.................................................. ॥]

पादे पञ्चममन्त्यं च दीर्घं द्वादशमेव च ।
पदावृत्त्या तदा ज्ञेया चपला मुखसंहिता ॥ १७९ ॥

यथा—

पिअसहिया उअगपणवले चपलतरमुखी ।
परिवरेदे सुदसुरभिमुखी सुरवरयुवदी ॥ १८० ॥

[.................................................. ।
.................................................. ॥]

एता ह्यष्टौ परित्याज्या ध्रुवाणां मूलजातयः ।
आभ्यो विनिःसृताश्चान्त्या युग्मौजविषयाः पराः ॥ १८१ ॥

एतास्तु जातयो ज्ञेया हृतानां वृत्तसंश्रयाः ।
देवानां पार्थिवानां च ह्यो(?)यस्य गुणसंभवाः ॥ १८२ ॥

सप्तदशद्वादशैकादशपञ्चाष्टमतृतीयैः ।
गुरुभिर्यस्याः पादः सा ज्ञेया क्षिप्तका नाम ॥ १८३ ॥

गुर्वादिरथ लघ्वादिर्युग्मोजाप्यथ वेतरा ।
एतद्वृत्तगता या तु सा विज्ञेया ध्रुवा हृता ॥ १८४ ॥

आद्ये ह्यथ निधने त्रीणि पादे तु यदि गुरूणि स्युः ।
ज्ञेया खलु बृहती नित्यं नाम्ना कनकजलजक्षिप्ता ॥ १८५ ॥

यथा—

एसो गअणदले मेहो भीमो भयजणणो दिट्ठो ।
भूमिं नवजलधाराहिं सिञ्चयदि सइ गज्जन्तो ॥ १८६ ॥

[एष गगनतले मेघो भीमो भयजननो दृष्टः ।
भूमिं नवजलधराभिः सेचयति सखि गर्जन् ॥]

यदि खलु पञ्चममन्त्यं चरणविधौ च तु गुरूणि।
भवति सु(तु) सा सलिलेहा भुवि बृहती प्रथिता सा ॥ १८७ ॥

यथा—

गिरिचरवारणरूपं खुभिदमहन्नवणादम्।
पटुवणेण विधूदं भमदि वलाहकयूथम् ॥ १८८ ॥
[गिरिचरवारणरूपं क्षुभित..........नादम्।
पटुवनेन विधुतं भ्रमति बलाहकयूथम् ॥]

यदि तु खलु षष्ठमन्त्यं गुरू भवतः पादयोगे।
इति निगदितानि(?) वृत्ते शलभविचलिता सा ॥ १८९ ॥

यथा—

ससिकिरणलम्बहारा उडुगणरुदावतंसा।
गहयणकदम्बसोहा यदिदिव भादि राई ॥ १९० ॥
[शशिकिरणलम्बहारोडुगणकृतावतंसा।
ग्रहगणकदम्बशोभा........भाति रात्री ॥]

यदि खलु चरणविधौ लघुवसुगणकमिदम्।
भवति हि खलु बृहती मणिगुणनिकर(णर)कृता(?) ॥ १९१ ॥

यथा—

उडुगणकुसुमवती गह[ग]णकिदतिलका।
रजनिकरमभिमुखी वजदि वअमु णिसा ॥ १९२ ॥
[उडुगणकुसुमवती ग्रहगणकृततिलका।
रजनिकरमभिमुखी व्रजति........निशा ॥]

चत्वार्यादौ गुरु निधनं ह्रस्वानि स्युर्यदेव तथा।
नाम्ना ज्ञेया जगति हि सा सिंहाक्रान्ता खलु बृहती ॥ १९३ ॥

यथा—

अंकम्मन्ते गगनतलं[1]...................... ।
विग्घुज्जोवा दवविभवे एसो मेहो पविचरिदो ॥ १९४ ॥

---

1. त्रुटिचिह्नमादर्शद्वयेऽपि न.

[............................................... ।
............................................... ॥]

बृहत्यो जातयो ह्येता विज्ञेया वै प्रकाशजाः ।
अत ऊर्ध्वं प्रवक्ष्यामि पङ्क्तिजातिविकल्पनम् ॥ १९५ ॥
आद्यचतुर्थे परनिधने यत्र गुरूणि प्रतिचरणम् ।
गीतविधाने भवति हि सा पङ्क्तितो(?)कृतौ वै सुरदयिता ॥ १९६ ॥

यथा—

पङ्कजसंडे विमलजले सारसकेहिं समणुगदो ।
कुन्दणिकासो ससिधवले हंसजुवाणो पविचरिदो ॥ १९७ ॥
[पङ्कजषण्डे विमलजले सारसकैः समनुगतः ।
कुन्दनिकाशः शशिधवले हंसयुवानः(?) प्रविचरितः ॥]
दीर्घाणि ह्यथ निधनगतं त्रीणि स्युर्यदि चरणविधौ ।
सा ज्ञेया कुसुमसमुदिता पङ्क्तिश्चेदपि च कुमुदिनी ॥ १९८ ॥

यथा—

वायते कुसुमदेतो वादनुकुसुमसुरभिओ(?) ।
सौसतौपि परहितजणणं संपत्तो अ सुणय सरदा(?) ॥ १९९ ॥
[............................................... ।
............................................... ॥]

सप्तममाद्यचतुर्थमुभयत्रादिनैधनमेव गुरु ।
पादविधौ यदि पङ्क्तिकृत्यसा(?) कार्यता खलु दोषकप(वृ)त्ते २००

यथा—

एसमुल्लसवंमम्बरके मेहवेसुणिकंगजो(?) ।
रोस वणोशे एणसे मुज्ञलिदो हिन्दुदिकारणए कुविदो(?) ॥२०१॥
[............................................... ।
............................................... ॥]

त्रीण्यादौ तु गुरूणि यदा स्युः षष्ठं वान्त्यमथापि वा ।
सा ज्ञेया खलु पापविधाने पङ्क्तिः सा तु कृतोद्धतमामा ॥ २०२ ॥

यथा—

अम्वंम्वंअम्बुहारहि पिणद्धं विज्जज्जोवदवणत्तरदीद्धम् (?) ।

वादाद्युण्णिदकम्पिददत्तं उम्मादेइ वहच्छिसमूहम् ॥ २०३ ॥

[.......................................................... ।

.......................................................... ॥]

आद्यचतुर्थे नैधनके च पञ्चमषष्ठे यत्र तु दीर्घे ।

वृत्तसमृद्धा संकथिता सा पङ्क्तिरथैषा गीतविधाने ॥ २०४ ॥

यथा—

मेहसमूहं पीणवलाकं विज्जषलित्तपिरेकय एसो ।

उद्धियरोसो भूमिणिणोदो धावदि हत्थी भद्दं वणम्मि ॥ २०५ ॥

[.......................................................... ।

.......................................................... ॥]

यदि खलु पञ्चममन्त्यं चरणविधावपि दीर्घं स्यात् ।

भवति तथाष्टममन्ये(न्त्ये) द्वे विपुलभुजा भुवि सा ज्ञेया ॥ २०६ ॥

यथा—

जलहरणादसमुच्चियो पगलिददाणसमुक्कुलो ।

वणगहणं कुविदो हत्थी सरभमत्तरितो यादि ॥ २०७ ॥

[जलधरनादसमुच्चितः प्रगलितदानसमुत्कुलः ।

वनगहनं कुपितो हस्ती......................याति ॥]

एतास्तु जातयः प्रोक्ता वक्ष्याम्येव समासतः ।

अतः परं प्रवक्ष्यामि त्रिष्टुब्जातिविकल्पनम् ॥ २०८ ॥

आदाविह यदि खलु गुरुणी नित्यं निधनमपि च म(प)रतः ।

वृत्तेकविभिरिति निगदिता त्रिष्टुब्जाति तु इह(?) चपला ॥ २०९ ॥

यथा—

एदेखिति घरवरसदिसा नीमा पटुपटहसमरदा ।

नीलासितखगविदरगणे मेघा णभतलमभिपदिदा ॥ २१० ॥

[................................................ ।
.................................................. ॥]

यदि खलु मध्ये त्वथ गुरुणी पुनरपि चान्त्यं गुरु चरणे ।
भवति हि नित्यं रुचिरमुखी कमलदलाक्षीति हि कथिता ॥२११॥

यथा—

परिधुनमानो किरणपदं अभिरुहमाणौ उदयगिरिम् ।
उडुगणवन्धू कुमुदसखो उदयदि चन्दो गगणतले ॥ २१२ ॥
[परिधुन्वानः किरणपदमभिरोहन्नुदयगिरिम् ।
उडुगणबन्धुः कुमुदसख उदयति चन्द्रो गगनतले ॥]

आद्यचतुर्थे नैधनके वा पञ्चमषष्ठे यत्र तु दीर्घे ।
पुष्पसमृद्धा संकलितासौ पङ्क्तिरथैषा गीतकबन्धे ॥ २१३ ॥

यथा—

मेहसमूहं चित्तवलाहं भीसणणादं विज्जपिणद्धम् ।
परिकयसोभी(?)भीसणणादो वाचति हत्थी चूदवणन्तम् ॥२१४॥
[मेघसमूहं चित्रवलाहं भीषणनादं विद्युत्पिनद्धम् ।
..................भीषणनादो वक्ति हस्ती चूतवनान्तः ॥]

यदि खलु पञ्चमकाष्टमके पुनरपि चान्त्यगतं च गुरु ।
चरणविधाविह वृत्तकृतौ भवति हि सा हृतपादगतेः ॥ २१५ ॥

यथा—

गयणतलङ्गणहिंडणओ किरणसहस्सविभूसिदओ ।
दिहुणियमेहपडणूमसू....दि ससी गगणे विदुसम् ॥ २१६ ॥
[गगनतलाङ्गणहिण्डणकः किरणसहस्रविभूषितः ।
..............................शशी गगने........ ॥]

यदि खलु षष्ठं गुरुयुगलं निधनगतं वाप्यथ गुरुकम् ।
भवति हि सैवं चरणविधौ मुखचपले........चपला ॥ २१७ ॥

यथा—

कुसुमसुगन्धी असुमवाणा विवरण्णो णलिणिवणे ।
तरुवरलोसे पमदवणे बहुकुसुमं सीणवसरदे ॥ २१८ ॥
[.................................................... ।
.................................................... ॥]

तृतीयमन्त्यं चतुर्थं च पञ्चमं चाष्टमेव च ।
गुरूणि त्रैष्टुभे पादे यत्र सा विमला यथा— ॥ २१९ ॥
कुसुमाकिण्णे णिम्मलसलिले णलिणीसंडे छप्पदमुहले ।
सवभूमध्ये सारसमुदिते समदो हत्थी परिचरिदो ॥ २२० ॥
[कुसुमाकीर्णे निर्मलसलिले नलिनीषण्डे षट्पदमुखरे ।
......................सारसमुदिते समदो हस्ती परिचरितः ॥]
चतुर्थं पञ्चमं पूर्वमन्त्योपान्त्ये तथैव च ।
गुरूणि त्रैष्टुभे पादे यत्र सा रुचिरा यथा— ॥ २२१ ॥
मेघविदाणं अवधूणयमाणो कम्पयमाणो कुमुदवणाणि ।
तोयसमूहं अवकिरमाणो वायदि वाओ कुविद इवासु ॥ २२२ ॥
[मेघवितानमवधूनयमानः कम्पयमानः कुमुदवनानि ।
तोयसमूहमवकिरमाणो वाति वातः कुपित इवाशु ॥]
यदि खलु चरणे तु सप्तमं पुनरपि नवमं सनैधनम् ।
गुरु तदपरवक्त्रमुच्यते नियतमिति हि निदर्शनं यथा— ॥२२३॥
गिरितटविचरे विक्कणिदो असणिघटरवेण कम्पयम् ।
अभिपददि दुदं महीतलं पटुतरणिणदो महारवो ॥ २२४ ॥
[.................................................... ।
.................................................... ॥]

त्रिष्टुभो जातयो ह्येता जगत्यास्तु निबोधत ।
अष्टमं नैधनं चैव गुरूणि चरणे यदि ।
वृत्ते तु जगती सा तु ज्ञेया कमललोचना ॥ २२५ ॥

यथा—

दिअमूमिगणवियद्धिअतेजोविततकिरणसहस्सपिणहो ।
धुणिअतिमिरतपटन्तगदीवा उदयदेयाहदलअसुत्तरो ॥ २२६ ॥
[.............................................................. ।
.............................................................. ॥]

यदि खलु लघुगण इह नियतं यदि यदि गुरु निधनगतम् ।
भवति हि लघुगतिरतिचपला अरिगतिरधिकमतिजगती ॥ २२७ ॥

यथा—

विधुणियजलधरमसितपरं दियगणमुणिवरपठिदो ।
उदयगिरिशिखरतटमुकुटो विचरदि गगणतमसुखी[1] ॥ २२८ ॥
[.............................................................. ।
.............................................................. ॥]

यदि खलु पञ्चमनिधनगतिद्विरदविधौ भवति हि गुरुणी भवेत् (?) ।
अतिजगती भुवि कथितगुणा सा मदकलितेव निगदितनामा ॥२२९॥

यथा—

गगणतलंगणमभिरुहमाणा रजतमहागिरिशिखरसरूपो ।
रजदमओ विपपियकलसो सूपविचरिदो विअ निसिचन्दो ॥ २३० ॥
[.............................................................. ।
.............................................................. ॥]

एतास्तु जातयो ज्ञेया प्रावेशिक्यस्तथा हृताः ।
समवृत्तपदानां तु वर्धमानं निबोधत ॥ २३१ ॥
एतासां लक्षणं पूर्वं सर्वमुक्तं विधानतः ।
प्रतिष्ठादि यथा छन्दः सम्यक्पादविधानतः ॥ २३२ ॥

[प्रतिष्ठा] यथा—

महरचं सावसरर ।
णिपक्कुद्धौ भस्वइ गयवरो ॥ २३३ ॥

---

१. 'तलम्मि सुखी' ख.

[.............................. ।
.............................................. ॥]

सुप्रतिष्ठा—

विज्जुलदाहिं अभिहयकं ।
चारुंददि वगणं यसमिह गतारम् ॥ २३४ ॥
[.............................. ।
.............................................. ॥]

गायत्री—

मेघरवानुणद्धगहकंदकं ।
एसमिंददिवाकरं रुददि विपणहदलम् ॥ २३५ ॥
[.............................. ।
.............................................. ॥]

उष्णिक्—

फुल्लीयतरुसंडे सुरभिपवणहते ।
विअरदि पदुम(द)वणे हंसो सहरिपरितुदो ॥ २३६ ॥
[.............................. ।
.............................................. ॥]

वर्धमानं मवै(यै)वं तु अ(त्र्य)स्राणां परिकीर्तितम् ।
पुनश्च चतुरस्राणामेवमेवं निबोधत ॥ २३७ ॥

अनुष्टुप्—

तारावन्धसणाहो विरिकिरमाणो मेघपडम् ।
किरणसहस्सभूसितओ उदयदि सोमो रजणिकरो ॥ २३८ ॥
[.............................. ।
.............................................. ॥]

बृहती—

एसो सुमेरुवणकम्मी दियदेवसिद्धपरिगीदो ।
सुसुरभिसुगन्धवणचारी विचरदि वि णहंगमगतिवादो ॥ २३९ ॥

[............................................................ ।
............................................................ ॥]

पङ्क्तिः—

पादवसंपकंपयमाणो सुरभिसुगन्धधासुवादिओ ।
उद्‌वणासरुवरलासणओ विचरदि वरतरुवणपद्‌णो ॥ २४० ॥
[............................................................ ।
............................................................ ॥]

त्रिष्टुप्—

कुमुद्‌वणस्स विभूषस(ण)ओ विधुणिय तिमिरपटं गगणे ।
उद्‌यगिरिसिहरमधिरोहन्तो रजणिकरो उदयदि विमलकरो ॥२४१॥
[............................................................ ।
............................................................ ॥]

जगती—

दियगणमुणिगणसंयुक्तत्तुतथिद्‌वरकिरणसंनिभदेहो ।
द्रुतनिहणहयलमभिरुहमाणो विचरदि तपदि एस दिवसकरो ॥२४२॥
[............................................................ ।
............................................................ ॥]

एतास्तु जातयः प्रोक्ताश्चतुरस्रविवर्धिताः ।
अत ऊर्ध्वं प्रवक्ष्यामि गणमात्राविकल्पनम् ॥ २४३ ॥
त्र्यस्रायास्तु गणाः पञ्च संनिपातो विधीयते ।
अष्टौ च चतुरस्रायाः संनिपातो भवेत्तथा ॥ २४४ ॥
द्वौ पादौ संनिपातश्च ध्रुवाणां परिकीर्तितः ।
हृतं च शीर्षकं चैव हित्वा त्वभिभवन्ति वै ॥ २४५ ॥
त्र्यस्रे त्वक्षरपिण्डः पञ्चादिर्नवपरश्च विज्ञेयः ।
सर्वगुरुश्चाष्टादिस्त्रयोदशपरश्च सर्वलघुः ॥ २४६ ॥
एष त्वक्षरपिण्डो विज्ञेयो वै ध्रुवो(वा)विधानज्ञैः ।
गणमो(मा)त्रांशविकल्पं व्याख्यास्यामि (?) हृतायास्तु ॥ २४७ ॥

अर्धषष्ठगणैः पादः संनिपातो द्रु(ह्रः)तास्तथा ।
मात्रा द्वाविंशतिश्चैव गुरुलघ्वक्षरान्वितैः ॥ २४८ ॥
शीर्षकाणामनियमो भवेत्पादविधानतः ।
नानावृत्तविनिष्पन्नं कुर्याद्वै शीर्षकं बुधः ॥ २४९ ॥
गुर्वादिरथ लघ्वादिर्युग्मः सर्वलघुः स्मृतः ।
चतुर्मात्रागणो ज्ञेयः पूर्वच्छन्दोविकल्पनाः ॥ २५० ॥
अर्धाष्टमगणाः पादाः शीर्षकस्य भवन्ति वै ।
चतुर्मात्रस्तु विज्ञेयो युग्मौजाक्षरिकैः पदैः ॥ २५१ ॥
शीर्षकस्यैकविंशत्या षड्विंशतिपरस्तथा ।
अक्षराणां भवेत्पिण्डः पादे ह्येकत्र निश्चयात् ॥ २५२ ॥
युग्मा ओजा मिश्रा आदौ कार्या गणास्तु चत्वारः ।
नियतं शीर्षविधानं पश्चाल्लघुसंचयः कार्यः ॥ २५३ ॥
त्रीणि गणाय(न्य)स्य मुखे त्रीण्यवहित्थस्य वाद(व)सानानि ।
मध्ये चेद्गुरुणी तच्चपलं········शीर्षकं भवति ॥ २५४ ॥
पूर्वार्धेऽथ चतुर्ह्रस्वा मिश्रा····गणास्तु चत्वारः ।
पादे भवन्ति नियतं पश्चाल्लघुसंचयः शेषाः ॥ २५५ ॥
एकद्विकलं त्रिकलाश्चतुष्कलाः षट्कलास्तथाष्टकलाः ।
कार्या ध्रुवाविधाने प्रासादिक्यान्तरापेक्षैः ॥ २५६ ॥
त्र्यस्रे विरामस्त्रिकलश्चतुरस्रे चतुष्कलः ।
प्रावेशिक्या ध्रुवायास्तु नैष्क्रमिक्या(?)स्तथैव च ॥ २५७ ॥
विरामे द्विकलो व्यन्तमन्तरायाः प्रयोक्तृभिः ।
पादान्ते च विरामस्तु विक्षिप्तायाः प्रकीर्तिताः ।
स्थितायास्तु तथैवार्धे प्रासादिक्यास्तथैव च ॥
कलाकलार्धयोगेन गुरुलघ्वक्षरान्विताः ।
त्रयो ध्रुवाणां [1]संयोगा विज्ञेया व्यन्तसंश्रयाः ॥ २५८ ॥

१. आदर्शद्वयेऽपि 'संयोगेन गुरुलघ्वक्षरान्विताः । त्रयो ध्रुवाणां' इत्यधिकं लेखकप्रमादजमिवालोक्यते.

सर्वदीर्घः सर्वलघुर्गुरुह्रस्वाक्षरास्तथा ।
गुरु प्रायो(?)स्थिता कार्या लघुप्राया ह्रतास्तथा ॥ २५९ ॥
गुरुलघ्वक्षरप्राया प्रासादिक्यान्तरा तथा ।
एवं ध्रुवाणां कर्तव्या जातयो वृत्तसंभवाः ॥ २६० ॥
अत ऊर्ध्वं प्रवक्ष्यामि शीर्षकाणां तु लक्षणम् ।
आद्यं तृतीयमन्त्यं च पञ्चमं सप्तमाष्टमे ।
गुरूणि यस्याः पादे तु सा [स्यात्] स्येनी कृति(?)र्यथा—॥२६१॥
सागरं समुद्धुणन्तो रथपदलघुगदिभिभवति
मघादशमाहणन्ते भरुस्तु चजणविभयमतुलम् ।
रण(राग)जालमुल्ययन्तो दिवसकरणपिण्ड-
करणोव्वोधयंपजासु कामंदिवरतण्युसुहपवणा ॥ २६२ ॥
[.........................................
.........................................।
.........................................
.........................................॥]

प्रकृत्या पञ्चमान्त्ये तु अष्टमैकादशे गुरुः ।
द्वादशं चेति विज्ञेयं नामतश्चपला यथा ॥ २६३ ॥
मुनिगणनन्तविविद्धतेजा विधुणिय तिमिरपटं
कमलवणाइं विबोधयमाणो यदिगणपरिपठिदो ।
भुजगसहस्रविवर्धितयासो वितविकरणचयो
उद्दयदि स एव यताविलोओ वेरत दिवसकरो ॥ २६४ ॥
[.........................................
.........................................॥
.........................................
.........................................॥]

पञ्च त्वादौ यत्र तु दीर्घं नियममपि च गुरुसमयकृतं
दीर्घं चान्त्याष्टममन्यल्लघु विरचितमपि चरणविधौ ।

वृत्ते ज्ञेया जातिरपीयं बहुविधनिचयदितविहितौ
क्रौञ्चा नाम्ना छन्दसि चोक्ता द्विजगणमुनिगणपरिपठिता ॥ २६१ ॥

यथा—

एसो चन्दो णिम्मलदेहो विधुणिय तमतपवसिदं
लोकानान्दो लोकपदांपो उडुगण उगहगणसमणुगदो ।
पासादाणं कास्यमाणोसितनिवसणमिदविपुलं
लोकं रञ्जयमाणो विचरदि वरतणु गयणतले ॥ २६६ ॥

[..........................................
..........................................।
..........................................
..........................................॥]

आद्यचतुर्थं पञ्चमषष्ठं नवमदशममथ च निधनगतं
ये च ततोऽन्येषु लघुत्तं(त्वं) यदि भवति च चरणगतिविधौ(?) ।
सा प्रकृतिः[1] स्यात्पुष्पविवृद्धा द्विजगणमुनिगणपरिपठिता
नामविकल्पाद्वृत्तकृता वै स्वशतलुलितमिह नभसि नदी ॥ २६७ ॥

यथा—

पुप्फविदाणं उद्धुणमाणो रथ इव हृतगतिरभिपठति
परकजमाणो मेहताडसुंतरसुव जणयदि भयमतुलं ।
उम्मिसहस्सं उद्धुणमाणो सरसि खुभितसलिलकलकला
भीमणिणादो चण्डपदाही विचरदि वपत्तणु सुहपवणो ॥ २६८ ॥

[..........................................
..........................................।
..........................................
..........................................॥]

अन्त्यं च पञ्चमं षष्ठं सप्तमं दशमं परम् ।
वृत्ते संस्कृतिसंज्ञे तु संभ्रान्ता नामतो यथा— ॥ २६९ ॥

---

१ 'विकृतिः' ख.

किरणसहस्सं विक्किरमाणो फटिकमणिरुचिरधवलणिहो
　　कुमुदवणाइं बोधयमाणो कुमुदकलाणकरसदिसव···· ।
पमहगणवन्धुलोकपदांवो(?) उड्डुगणगहगणसमणुगदो
　　उदयदि चंदो रोहिणिकन्तो णवसरदमुदितसुखजणणो ॥ २७० ॥

[··········································
　　·············································· ।
··········································
　　·············································· ॥]

　　आद्यमन्त्यं चतुर्थं च सप्तमं दशमं तथा ।
　　गुरूण्येकादशं चैव संस्कृतं वृत्तसंश्रयम् ॥ २७१ ॥
　　लघून्यन्यानि शेषाणि पादे यस्मिन्भवन्ति ते ।
　　विज्ञेयं शीर्षकं तज्ज्ञैः स्खलितं नामतो यथा— ॥ २७२ ॥

वातसमुद्धतवीचितरङ्गे स्फटिकमणिनिकरइसजनले
　　पङ्कजरेणुपरागपिषङ्गे विलुलितकमलकुवलयदले ।
मोटितकल्पतरूत्थितशाखे सुरयुवतिनयनसमस्तुथुतं
　　क्रीडितदानसुगन्धमहोर्मे सुरगज इह सुरसरिभिंतिः ॥ २७३ ॥

अष्टावादौ दीर्घाणि स्युर्यदि च पुनरपि (हि[1] भवति) बहुलघुगणः ।
भूयश्चान्ते दीर्घं त्वेकं च (यदिभवति यदि) यदि पुनरपि च तथा॥२७४॥
　मत्ताक्रीडा विद्युन्मालेत्यपि (च[3] विविध)कविभिरपि बहुभिरुदिता ।
　नाम्ना छन्दोवृत्ते वृत्तेदेवित्यभितिगतिविधिषु च नियतमहिता ॥२७५॥

यथा—

एसो मेहो सेलातुअसणिरवसुरजपटहसमरवा
　　णाणाविज्जुज्जोवालोओ घणपटलणिचयजलधरसमणुगदो ।
णाणावण्णो ताउग्लारीतधवलखगविचरितकुसुमपभो
　　संछायन्तो लोपइयं(?)भमइ चलगिरिणिवह इव स्तुभसलिलो॥२७६॥

१–२–३. कोष्ठकान्तर्गतपाठस्य लेखकप्रमादप्रक्षिप्तत्वं प्रतीयते. ४. अत्रापि कतिचिदक्षराणि प्राक्षिप्तानि प्रतीयन्ते. ५. 'रीचरितधवल' ख.

[.................................................
........................................................ ।
.................................................
........................................................ ॥]

पञ्चमं द्वादशं चैव दीर्घमन्त्यं त्रयोदशम् ।
उत्कृत्यां तु भवेत्पादे नृ(वृ)त्तं वेगवती यथा—॥ २७७ ॥

गगणतलङ्गणमभिरुहमाणो उडुगणसमाष(मणु)गदो
युवतिजणाणं सुरचितरूपा सुखितदयितजणमदणकरो ।
किरणसहस्सविमुञ्चितवन्दो रजति(त)[गि]रिशिखरसदिसवधू
उदयदि संपदि अरु जगदीषो कुमुदवणरुचिविमलकरो ॥ २७८ ॥

[.................................................
........................................................ ।
.................................................
........................................................ ॥]

एता ह्यष्टौ बुधैर्ज्ञेयाः शीर्षकाणां तु जातयः ।
पुनर्नर्कुटकानां तु संप्रवक्ष्यामि लक्षणम् ॥ २७९ ॥
अष्टौ हि नर्कुटानां तु विज्ञेया जातयो बुधैः ।
दर्शनं लक्षणं तासां नामानि च निबोधत ॥ २८० ॥
रथोद्धता बुद्बुदकमुद्गता वंशपत्रकम् ।
शिवाक्षरा कनुम(ध्वजव)ती हंसास्यं तोटकं तथा ॥ २८१ ॥
प्रथमं च तृतीयं च सप्तमं नवमान्त्यके ।
गुरूणि त्रैष्टुभे पादे नर्कुटं तद्रथोद्धतम् ॥ २८२ ॥

यथा—

एसिका कमलगब्भागेहकरेणुपिज्जरिदचारुगतिका ।
सादरं मदकलोपगूजिदा हिण्डते सिखरम्मि छप्पदी ॥ २८३ ॥

[................................................ ।
................................................ ॥]

पञ्चमं सप्तमं चैव निधनं च गुरूण्यथ ।
पादे तु बृहतीसंस्थे यत्र तद्धुद्धुदं त(य)था—॥ २८४ ॥
तडिगुणावद्दविवओ सेदखगपसोहिदो णभसि गजो ।
समुका ओर्व्वर दिपसमे कर्त्तुं[1] ………………… ॥ २८५ ॥
[………………………………………………… ।
………………………………………………… ॥]

तृतीयं पञ्चमं चैव नवमैकादशे तथा ।
द्वादशं षोडशं चैव चतुर्दशमथापि च ॥ २८६ ॥
यस्मिन्नष्ट(ष्टि)कृते पादे गुरूण्येतानि सर्वशः ।
छन्दोभिर्ज्ञेयमेतत्तु नर्कुटं ह्युद्गतं त(य)था—॥ २८७ ॥
वणसण्डकं जहादि कोसिओ वायसाहदो
भयभीदओ च…………यदि पादवं दीणओ ।
तरुकोटरंदिसंपदं लोलणेत्तओ………………
समभिद्दुदो णिसि चरो णयंयंदिपोहिदो ॥ २८८ ॥
[………………………………………
………………………………………… ।
………………………………………
………………………………………… ॥]

यत्र चतुर्थषष्ठदश(म)प्रथमनिधनगै-
भूषितमक्षरैर्गुरुकृतैः श्रवणसुखकरैः ।
ततवलु वंशपत्रपतितं मुनिगणगदितं
नर्कुटकं वदन्ति नियमादुपवृत्तिरचितम् ॥ २८९ ॥

यथा—

चूदवणं पप्फुल्लिअलयं कुरुवकसहिदं
चारुअसोअमलुकलिकं कुसुमसमुदिदम् ।

१. त्रुटिचिह्नमादर्शद्वयेऽपि न.

माधवकाणणं युवदिआजणमंदजणणं[1]
हिण्ड····कोकिलाफर····सावनहुररवा········ ॥ २९० ॥
[································
································।
································
································॥]

तृतीयं पञ्चमं चैव नवमं नैधनं तथा।
गुरूण्येतानि पादे तु यत्र तत्प्रमिताक्षरम् ॥ २९१ ॥

यथा—

कमलायरे सुरभिऊण चिरं भमली मुहासव····सुणओ।
मधुसूसिदं च सुरदि चूदवणं परिहिण्डदे सुतणु छम्पदओ ॥ २९२ ॥
[········································।
········································॥]

तृतीयपञ्चमान्त्यानि प्रथमे सचतुर्थकम्।
षष्ठं च नैधने वाथ गुरूणि ध्वजिनी यथा— ॥ २९३ ॥
विलसन्तिआकमलसण्डे पुकसुअन्तके कुसुमलुद्धा।
तुरिअपपीतमधुमत्ता छम्पदि आकुलं समुपयादि ॥ २९४ ॥
[········································।
········································॥]

तृतीयं च चतुर्थं च षष्ठं सप्तममेव च।
दशमं नैधनं चैव गुरूणि च भवन्ति हि ॥ २९५ ॥
पादे तु या(जा)गते यत्र शेषाणि च लघून्यथ।
हंसास्यं नाम विज्ञेयं गदितं नर्कुटं त(य)था— ॥ २९६ ॥

दिजहंसाधकंसे सलिलसरे कुसुमसो(मो)दलुद्धको(क)मलाकरे।
णलिणीपत्तामज्जोपरिहिण्डेदा भमणायासखिण्णा भमरावली ॥ २९७ ॥

---

1. 'नदजणाणां' क-ख.

[.................................................. ।
.................................................. ॥]

यदिहान्त्यतृतीयकषष्ठगतैर्नवमे नवमेन च भूषि(त)पदम् ।
गुरुभिः सततं त्विह तद्गदितं ननु तोटकमेव हि नर्कुटं(टकम्) ॥ २९८ ॥

यथा—

रमणीसहिओ रजनीविरा[1]म गगणङ्गणए खगकोसिगओ ।
अनुवायस एहोविद्यदि दुर्जपरिमग्गदे कोटरथम् (?) ॥ २९९ ॥

[.................................................. ।
.................................................. ॥]

एतास्तु जातयः प्रोक्ता नर्कुटानां समासतः ।
पुनश्च खञ्जकानां तु संप्रवक्ष्यामि लक्षणम् ॥ ३०० ॥
प्रमोदं खञ्जकं पूर्वं भावनी मत्तचेष्टितम् ।
एतास्तिस्रः समाख्याताः खञ्जकानां तु जातयः ॥ ३०१ ॥

आद्यचतुर्थं षष्ठदशमं सषोडशमथान्त्यमेव च (?)
यदि द्वादशमेव यत्र चरणेषु सप्तदशकात्परं च विहितम् ।
छन्दसि चेत्तथा गुरु चेद्यथाकृतिगतं भवेत्तु सततं
मद्रकामदखञ्जकमदि (?) पुनश्च कथितं प्रमोदकमिदम् ॥ ३०२ ॥

यथा—

माधवमापसोभिद समग्रके उववाणम्मि फुल्लकुसुमो
निच्चपरमत्तबहुपरिधसंघपरिघट्टणादमुहले ।
कुडिद....दसंडसकयारचञ्जरविलोलानदपवणे
हिण्डदि छप्पदाणुगदेमग्रउपरदोयइद्र(न्दु)वदणा ॥ ३०३ ॥

[........................................
.................................................. ।
........................................
.................................................. ॥]

---

1. 'विरतौ' इति भवेत्.

आद्यपञ्चमान्त्यसप्तमं स्यात्तृतीयमेव दीर्घकम् ।
यस्याः पादयोर्गतो हि सा भाविनीति खञ्जकम् ॥ ३०४ ॥

यथा—

जाति वेघुणयाणमानुवूदरेणुगुणिनृगओ
कल्लयंकतु वसोभिदो छम्पओ दुदंपिधाविदो ॥ ३०५ ॥

[........................................................ ।
........................................................ ॥]

यदा तृतीयसप्तमं तथाद्यपञ्चमं लघु ।
तदा तु मत्तचेष्टितं बुधा वदन्ति खञ्जकम् ॥ ३०६ ॥

यथा—

पफुल्लफुल्लपादवं विहंगमोवसोभिदम् ।
वनं पगीदछप्पदं उवेइ एस कोकिला ॥ ३०७ ॥

[........................................................ ।
........................................................ ॥]

नर्कुटानां तु खञ्जानामेता वै मूलजातयः ।
आभ्यां विनिःसृताश्चान्या युग्मौजा विषमास्तथा ॥ ३०८ ॥
चतुःषष्टिर्ध्रुवाणां हि विज्ञेया मूलजातयः ।
समवृत्ताक्षरकृता अतोऽन्या विषमाः स्मृताः ॥ ३०९ ॥
समवृत्तास्तु जायन्ते ध्रुवास्तिस्रस्तु नित्यशः ।
युग्मौजाश्चापि मिश्राश्च विषमार्धसमाः समाः ॥ ३१० ॥
तत्रार्धं विषमाणां तु षष्ट्यां चार्धशते स्मृता ।
एतदेव परीमाणं विषमाणां प्रकीर्तितम् ॥ ३११ ॥
समान्योजाश्च जायन्ते ध्रुवा विषमपादिकाः ।
स्वेन नाम्ना तु नाम्नानि(?) सांकार्याणि बृहत्तमः ॥ ३१२ ॥
एतास्तु जातयः प्रोक्ता नानावृत्तसमुद्भवाः ।
अतः परं प्रवक्ष्यामि विकल्पान्पञ्चहेतुकान् ॥ ३१३ ॥

जातिस्थानं प्रकारश्च प्रमाणं नाम चैव हि ।
ज्ञेयं ध्रुवाणां गीतज्ञैर्विकल्पाः पञ्चके(हे)तुकाः ॥ ३१४ ॥
वृत्ताक्षरप्रमाणं हि जातिरित्यभिसंज्ञिताः ।
समार्धविषमाभिश्च प्रकारः परिकीर्तितः ॥ ३१५ ॥
षड्घनोऽष्टकले चैव प्रमाणे द्विविधे स्मृते ।
यथा गोत्रकुलाचारैर्नृणां नामाभिधीयते ॥ ३१६ ॥
एवं नामाश्रयोपेतं ध्रुवाणामपि चेष्यते ।
प्रवेशाक्षेपनिष्कामत्रासादिकमथान्तरम् ।
गानं पञ्चविधं विद्याद्ध्रुवयोगसमन्वितम् ॥ ३१७ ॥
नानारसार्थयुक्ता नृणां या गीयते प्रवेशेषु ।
प्रावेशिकी तु नाम्ना विज्ञेया सा ध्रुवा तज्ज्ञैः ॥ ३१८ ॥
अङ्कान्ते निष्क्रमणे पात्राणां गीयते प्रयोगेषु ।
निष्क्रामोपगतगुणं विद्यान्नैष्क्रामिकीं तां तु ॥ ३१९ ॥
क्रममुल्लङ्घ्य विधिज्ञैः क्रियन्ते या द्रुतलयेन नाट्यविधौ ।
आक्षेपिकी ध्रुवासौ द्रुता स्थिता वापि विज्ञेया ॥ ३२० ॥
या च रसान्तरमुपगतमाक्षेपवशाद्द्रुतं प्रसादयति ।
रागप्रसादजननीं विद्यात्प्रासादिकीं तां तु ॥ ३२१ ॥
विषसंमूर्छिते भ्रान्ते वस्त्राभरणसंयमे ।
दोषप्रच्छादने या च गीयते सान्तराच्छदा ॥ ३२२ ॥
ध्रुवाणां चैव सर्वासां रसभावसमन्वितम् ।
तथा स्थानं प्रवक्ष्यामि यत्र गेयं प्रयत्नतः ॥ ३२३ ॥
द्विविधं तु स्मृतं स्थानं परस्थं स्वात्मसंश्रितम् ।
यत्राक्षेपसमायुक्तं तच्च मे संनिबोधत ॥ ३२४ ॥
बद्धे निरुद्धे पतिते व्याधिते मूर्छिते मृते ।
अवकृष्टा ध्रुवा कार्या भावे च करुणाश्रये ॥ ३२५ ॥

औत्सुक्ये ह्यवहित्थे च चिन्तायां परिदेविते।
श्रमे दैत्ये विषादे च स्थिता कार्या ध्रुवा बुधैः॥ ३२६॥
एतेष्वेव तु भावेषु करुणावेदितेषु च।
ध्रुवा द्रुता च कर्तव्या करुणे भावसंश्रयाः॥ ३२७॥
यत्र प्रत्यक्षरं दुःखं मृताभिहतदर्शनात्।
स्थिता तत्र प्रकर्तव्या करुणे तु रसे बुधैः॥ ३२८॥
उत्पातदर्शनं चैव शृङ्गाराद्भुतदर्शने।
विषादे च प्रमोदे च रोषसत्त्वस्य दर्शने॥ ३२९॥
वीररौद्रभयाप्येषु प्रत्यक्षावेदितेषु च।
ध्रुवा द्व(द्रु)तलया कार्या ह्यावेगे संभ्रमे तथा॥ ३३०॥
प्रसादयावने[1] चैव तथानुस्मरणे पुनः।
तथातिशयवाक्येषु तथा च नय(व)संगमे॥ ३३१॥
हर्षे[2] च प्रार्थनायां च शृङ्गाराद्भुतदर्शने।
ध्रुवा प्रासादिकी कार्या तज्ज्ञैर्मध्यलयाश्रया॥ ३३२॥
शरीरव्यसने रोषे पुनः संधानकर्मणि।
सानुबन्धा बुधैः कार्या गीतज्ञैरन्तरा ध्रुवा॥ ३३३॥
अध्रुवास्तु प्रवेशा(?) स्युर्गायनो गदतस्तथा।
संभ्रमे घोषणे चैव ह्युत्पाते विषमे तथा॥ ३३४॥
एवमर्थविधिं ज्ञात्वा कालं देशमृतुं तथा।
प्रकृतिं भावलिङ्गं च ततो योज्या ध्रुवा बुधैः॥ ३३५॥
शीर्षका चोद्गता चैव ह्यनुबन्धो विलम्बिता।
इति(आदि)ता चावकृष्टा च षट्प्रकारा ध्रुवाः स्मृताः॥ ३३६॥
शिरःस्थानीयमेतद्धि यस्मात्तस्मात्तु शीर्षिका।
उद्गता उद्धता(?) यस्मात्तस्माज्ज्ञेया ध्रुवा बुधैः॥ ३३७॥
आक्रीडितप्रवृत्तो यश्चतुर्थैलेपकारकः।
नाट्योपचारजनितः सोऽनुबन्धः प्रकीर्तितः॥ ३३८॥

१. 'प्रासाद' क. 'प्रसादे' इति भवेत्. २. 'विस्मये' ख.

नाट्ये त्वरितसंचारा नाट्यधर्ममनुव्रता ।
सविलम्बितसंचारा जा(या) च द्रुतविलम्बिता ॥ ३३९ ॥
अदिता तूत्कटगुणा शृङ्गाररससंभवा ।
यस्मात्स्थानप्रसन्ना च तस्मादेषादिता स्मृता ॥ ३४० ॥
अन्यभावेषु कृष्टं च कृष्टा हेतुर्हि गीयते ।
यस्मात्कारुण्यसंयुक्ता ह्यवकृष्टा भवेत्ततः ॥ ३४१ ॥
या तु प्रावेशिकी दीप्ता सा कार्या त्वदिता नृणाम् ।
या तु प्रासादिकी नाम स्त्रीणां कार्या दिता तु सा ॥ ३४२ ॥
या स्थिता सावकृष्टा तु या द्रुता सा विलम्बिता ।
यान्तरा सानुबन्धा या[2]........................ ॥ ३४३ ॥
........................प्रकारास्तु प्रवेशजाः ।
शीर्षिका चोद्धता चैव दोष(देव)पार्थिवयोर्भवेत् ॥ ३४४ ॥
दित्या(ता) पार्थिववैश्यानां स्त्रीणां योज्या तथा दिता ।
मध्यमानां प्रवेशे च ज्ञेया द्रुतविलम्बिता ॥ ३४५ ॥
नीचानां चैव कर्तव्ये नृणां खञ्जकनर्कुटे ।
खञ्जकं नर्कुटं चैव स्थानप्रासादिकी तथा ॥ ३४६ ॥
कामाल्ललितभावत्वाद्धास्यशृङ्गारयोर्यतः ।
कुर्यान्नीचे मृते चैव अनुबन्धलयाश्रयम् ॥ ३४७ ॥
स्त्रीणां राजन्यवैश्यानामपकृष्टां तथैव च ।
संनिपातास्तु चत्वारः प्रावेशिक्या भवन्ति हि ॥ ३४८ ॥
शेषा हि संनिपातास्तु शीर्षकाः षट्पदाः स्मृताः ।
स्थितं चाप्यदितं चैव नीचानां नहि कारयेत् ॥ ३४९ ॥
सर्वभावाश्रयगतैस्तेषां कार्यं तु नाटकम् ।
त्रयो भावा भवन्त्येषां हास्यशोकभयानकाः ॥ ३५० ॥

---

१. 'द्रुत' ख. २. आदर्शद्वयेऽपि त्रुटिर्न दृश्यते. ३. 'द्रुत' ख. ४. 'कस्मा' क.

एवं भावान्विदित्वा तु ध्रुवा कार्या प्रयोक्तृभिः ।
वस्तुप्रयोगं प्रकृतं रसभावाश्रितं च यत् ॥ ३९१ ॥
देशं कालमवस्थां च ज्ञात्वा योज्या ध्रुवा बुधैः ।
वस्तूद्देश्यसमुत्थं तु पुनरारण्यसंभवम् ॥ ३९२ ॥
प्रयोगश्चैव विज्ञेयो दिव्यमानुषसंश्रयः ।
उत्तमाधममध्यास्तु त्रिविधा प्रकृतिः स्मृता ॥ ३९३ ॥
रसभावौ तु पूर्वोक्तावृतुः कालकृतस्तथा ।
शिशुयौवनवृद्धत्वं वयश्चैव प्रकीर्तितम् ॥ ३९४ ॥
[1]कक्षादिभावजनितो देशस्तु [2]द्विविधः स्मृतः ।
कालो रात्रिंदिवकृतो वामकादि(?)विनिश्चितः ॥ ३९५ ॥
अवस्था चैव विज्ञेया सुखदुःखसमुद्भवा ।
स्थानान्येतानि तु बुधैर्नानावस्थानि नित्यशः ॥ ३९६ ॥
प्रयोगे संप्रयोज्यानि रसभावौ समीक्ष्य तु ।
यानि वाच्यैस्तु न ब्रूयात्तानि गीतैरुदाहरेत् ॥ ३९७ ॥
न तैरेव हि वाक्यार्थे रसपाको वलाश्रयाः (?) ।
ध्रुवाणामाश्रयाः कार्या औपम्यगुणसंभवाः ॥ ३९८ ॥
उत्तमाधममध्यानां नृणां स्त्रीणामथापि च ।
आद्यत्वसेमेययना(?) देवपार्थिवयोः स्मृता ॥ ३९९ ॥
दैत्यानां राक्षसानां च मेघपर्वतसागराः ।
सिद्धगन्धर्वयक्षाणां ग्र(ग्रा)हेमवृषभाः स्मृताः ॥ ३६० ॥
तपःस्थितानां सर्वेषां सूर्याग्निपवनाः स्मृताः ।
हव्यवाहस्तु विप्राणां ये चान्ये तपसि स्थिताः ॥ ३६१ ॥
एतेषां चैव यानार्थैस्तासामौपम्यसंश्रयाः ।
विद्युदुल्कार्करसाद्या दिव्यानामपि च स्मृताः ॥ ३६२ ॥
देवानां च प्रयोज्या ये नृपाणामपि ते स्मृताः ।
नागसिंहवृकाश्चैव नैते दिव्येषु कीर्तिताः ॥ ३६३ ॥

---

१. 'कक्षा दिग्भागजनिता' इति भवेत्. २. 'विविधः' इति स्यात्.

महिषा रुरुसिंहाश्च क्रव्यादाः पशवश्च ये ।
हिंस्रसत्त्वेषु ते कार्या यक्षराक्षसजातिषु ॥ ३६४ ॥
उत्तमानां प्रयोक्तव्या नानारससमाश्रयाः ।
मत्तमातङ्गसहिता राजहंसाश्च योक्तृति(भिः) ॥ ३६५ ॥
सारसाः शिखिनः क्रौञ्चाश्चक्राह्वाः कुमुदाकराः ।
मध्यमान प्रकर्तव्या औपम्यगुणसंश्रयाः ॥ ३६६ ॥
कोकिलं षट्पदं ध्वाङ्क्षं कुररं कौशिकं बकम् ।
पारावतं सकादम्बमधमेषु प्रयोजयेत् ॥ ३६७ ॥
एवमेषां यथोक्तानां स्त्रियो यास्तु भवन्ति हि ।
उत्तमाधममध्यानां तासां चैव निबोधत ॥ ३६८ ॥
बर्वरी वसुधा यो(ज्यो)त्स्ना तिन्तिनी करिणी नदी ।
नृपस्त्रीणां भवन्त्येता औपम्यगुणसंश्रयाः ॥ ३६९ ॥
दीर्घिका कुररी वल्ली सारसी शिखिनी मृगी ।
मध्यमानां भवन्त्येता वेश्यानां चैव नित्यशः ॥ ३७० ॥
षट्पदीं कुररीं ध्वाङ्क्षीं परपुष्टां च योजयेत् ।
अधमानां ध्रुवास्त्वेताः प्रयोक्तव्याः प्रयोक्तृभिः ॥ ३७१ ॥
गत्यर्थे यमिता(?) याश्च बलनाथा भवन्ति हि ।
प्रावेशिक्या बुधैरेव नैष्क्रामिक्यास्तथैव च ॥ ३७२ ॥
प्रावेशिक्याश्रया यास्तु पूर्वाह्णे यास्तु ते(?) स्मृताः ।
नक्तंदिनसमुत्थास्तु नैष्क्रामिक्या स्वकालजाः ॥ ३७३ ॥
सौम्याः पूर्वाह्णकाले तु मध्याह्ने दीप्तसंश्रयाः ।
अपराह्णे तथा काले संध्यायां करुणाश्रयाः ॥ ३७४ ॥
चलनार्था हि ये प्रोक्ता आक्षेपिक्या भवन्ति हि ।
आक्षेपा एवमेव स्युर्द्रुतस्थितिगतास्तथा ॥ ३७५ ॥
रोषामर्षादिसंभूताः शोकाद्भुतभयानकाः ।
पदव्यं(?) वसुधासंस्थं कृतदैवतमाश्रितम् ॥ ३७६ ॥

तत्सर्वमुपनेयं तु गानयुक्त्योपमाश्रयम् ।
स्थावरास्थावरं कुर्याद्गत्यर्थैक्यवलं(?) तथा ।
सुखदुःखकृतैर्भावैरौपम्यगुणसंश्रयात् ॥ ३७७ ॥
तूत्थ(?)रथवाजिकुञ्जरमृगपशुपक्षिशिबिकाविमानानाम् ।
गतिविभ्रमं हि दृष्ट्वा कर्तव्या तु ध्रुवा तज्ज्ञैः ॥ ३७८ ॥
रथपत्रवाजिवारणविमानसिक्यस्थपक्षियानेषु ।
ह्रुतदषद(?)वर्णवर्णैः कर्तव्या तु ध्रुवा तज्ज्ञैः ॥ ३७९ ॥
ओजःकृता तु रुवै········गुरुवर्णा वृषगजेन्द्रसिंहेषु ।
सारसवानरहंसे तथा मयूरे विधातव्या ॥ ३८० ॥
द्रुतगमने लघुवर्णा विततगतौ च····दीर्घवर्णकृताः ।
एवं स्थितह्रुतानां[1] ज्ञात्वा भावं ध्रुवा कार्या ॥ ३८१ ॥
नास्ति किंचिदवृत्तं तु पदं गानसमाश्रयम् ।
तस्माद्रीतिमभिप्रेक्ष्य तद्वृत्तं योजयेद्ध्रुवाम् ॥ ३८२ ॥
तस्माद्वहनगत्यर्थैर्ध्रुवा कार्याक्षरैस्तथा ।
अङ्गानां समता यत्र भाण्डवाद्ये करिष्यते ॥ ३८३ ॥
ग्रहतो वाहनगतौ ध्रुवापादो विधीयते ।
तद्वृत्तं तु भवेच्चाद्यमङ्गवाद्यसमं तथा ॥ ३८४ ॥
पूर्वं गानं ततो वाद्यं ततो नृत्तं प्रयोजयेत् ।
गीतवाद्याङ्गसंयोग········इति संज्ञितः ।
हृदयस्थस्तु यो भावः साङ्गाभिनयनैरथ ॥ ३८५ ॥
निवृत्त्यङ्कुरसूचा तु कार्यस्त्वभिनयान्वितः ।
तत्र प्रासादिकी योज्या प्रहर्षार्थं गुणोद्भवा ॥ ३८६ ॥
आकाशपुरुषो यत्र यत्र चाकाशभाषणम् ।
अस्वर्थास्तत्र कर्तव्या ध्रुवाद्यो भाषसंश्रयः ॥ ३८७ ॥
प्रसादनाश्रया वापि हीर्ष्याक्रोधाश्रयापि वा ।
शृङ्गाररसमासाद्य ध्रुवा त्वार्था प्रयोगतः ॥ ३८८ ॥

---

१. 'स्थिते द्रुतानां' इति भवेत्.

यानि प्रसादिकानि स्युः स्थानानि रससंश्रयाः (?) ।
अन्वर्था तत्र कर्तव्या ध्रुवा प्रासादिकी तथा ॥ ३८९ ॥
भाषादिसौरसानां (?) तु ध्रुवायां संप्रयोजयेत् ।
यदापि मागधी यत्र कर्तव्यं नर्कुटं तथा ॥ ३९० ॥
दिव्यानां संस्कृताङ्गानां (तं गानं) प्रमाणैस्तु विधीयते ।
अर्धसंस्कृतमेवं तु मानुषाणां प्रयोजयेत् ॥ ३९१ ॥
ये त्वौपम्यकृता दिव्या यदि तेषां प्रयोगतः ।
प्रवेशे नायकं तु स्याच्छृणु तेषां समाश्रयम् ॥ ३९२ ॥
यस्त्वेषां सात्त्विको भावः कर्मसंकीर्तनं च यत् ।
तत्तत्कार्यं गानयोगे प्रमाणगुणसंश्रयम् ॥ ३९३ ॥
छन्दःप्रमाणसंयुक्तं दिव्यानां गानमिष्यते ।
पुण्याश्रयं च तत्कार्यं कर्मसंकीर्तनादपि ॥ ३९४ ॥
माला वक्त्रं पुटं वृत्तं विश्लोकश्चूलिका तथा ।
उद्गाता परवक्त्रं च कर्तव्यानि प्रयोक्तृभिः ॥ ३९५ ॥
विधानं छन्दसामेतन्मया पूर्वमुदाहृतम् ।
जयाशीर्वादयुक्तानि कार्याण्येतानि दैवतैः ॥ ३९६ ॥
कफां था(?) पाणिका चैव द्रष्टव्यानि प्रमाणतः ।
सुश्रवश्चैव(?) यस्मात्तु तस्माद्गीतं प्रयोजयेत् ॥ ३९७ ॥
गान्धारमध्यमयुतः पञ्चमयुक्तास्तु जातयो यास्तु ।
ताभिः प्रमाणगणनं कर्तव्यं धैवतोपेतम् ॥ ३९८ ॥
प्रासादिकं स्थितं चैव नैष्क्रामं संप्रवेशजम् ।
प्रमाणमपि कर्तव्यं चतुःस्थानसमन्वितम् ॥ ३९९ ॥
प्रायसं(?) संस्कृतं योज्यमनुष्टुप्छन्दसा कृतम् ।
नानादैवतकार्यं तु ह्यन्तराया विना तथा ॥ ४०० ॥

---

१. 'प्रायश्च' इति भवेत्.

विष्कम्भापरवक्त्रं च माला चेति प्रवेशजम्।
पुनश्च चूलिका चैव नैष्क्रामिकमथेष्यते ॥ ४०१ ॥
प्रासादिक्युद्गतावृत्तिस्थितं चानुष्टुभीष्यते।
स्थानान्येतानि बोध्यानि प्रमाणविबुधैरथ ॥ ४०२ ॥
यदनुष्टुप्कृतं गानं स्थितस्थानसमाश्रयम्।
स्वर्गभ्रान्त्याश्रयकृतं चिन्तादुःखसमन्वितम् ॥ ४०३ ॥
गुरुप्रायाक्षरकृतं करुणाश्रुतियाति(निपात)कम्।
अभ्रष्टवर्णबहुकं स्थितस्थानं तु तद्भवेत् ॥ ४०४ ॥
उत्पादनार्थं नृणां तु तथा विहरणेष्वपि।
दिव्यान्वयं तु कर्तव्यं गानं पात्रसमाश्रयम् ॥ ४०५ ॥
मानुषेष्ववतीर्णस्य दिव्यस्य स्मरणाश्रयम्।
प्रायेण गानं कर्तव्यं दिव्यभावसमन्वितम् ॥ ४०६ ॥
तस्यैव दुःखविषयं शोकचिन्ताविनाशनम्।
प्रमाण(प्रायेण) गानं कर्तव्यं शोकावस्थान्तराश्रयम् ॥ ४०७ ॥
ध्रुवाणां हि विधानस्यान्याश्रयस्य विशेषतः।
तथा प्रयोगः कर्तव्यस्तच्च मे संनिबोधत ॥ ४०८ ॥
स्थापिते भाण्डविन्यासे त्रिंशान्ति परिकीर्तिते।
आश्रावणकं कर्तव्यं बहिर्गीतप्रयोगकम् ॥ ४०९ ॥
प्रयुज्य च बहिर्गीतं पूर्वरङ्गं प्रयोजयेत्।
प्रयुक्ते पूर्वरङ्गे तु नाट्यागारं समाश्रयेत् ॥ ४१० ॥
गत्याश्रयेण नाट्यज्ञैः पदैरनुगतैस्तथा।
परिक्रमेण रङ्गस्य गानेनार्थवशेन वा ॥ ४११ ॥
परिवर्ताः प्रयोक्तव्याः षडेव तु तथा बुधैः।
ध्रुवा तत्र प्रकर्तव्या देवताभिर्यथा बुधैः ॥ ४१२ ॥
तत्र पाताः प्रकर्तव्या एकविंशतिरेव च।
त्र्यस्रा वा चतुरस्रा वा ध्रुवा नाट्यैः प्रयोगतः ॥ ४१३ ॥

त्रिकलं पादपतने त्र्यस्रायां तु विधीयते ।
चतुष्कलं तु पतनं चतुरस्रगतं भवेत् ॥ ४१४ ॥
उत्तमे चतुरस्रा तु त्र्यस्रा चैव तु मध्यमे ।
[1]त्र्यस्रं नर्कुटकं चैव ह्यधमे तु प्रयोजयेत् ॥ ४१५ ॥
विधिः स्वस्थगतो योऽत्र भवेच्चरणपातने ।
संभ्रमोत्पातरोषेषु कलार्धकलमिष्यते ॥ ४१६ ॥
विकलद्विकलैककलाश्चतुष्कला यत्र पादविन्यासाः ।
तत्र च साम्यं कार्यं भाण्डेन समं न गानेन ॥ ४१७ ॥
नह्यकला द्विकला·········ध्रुवा विगमा भवन्ति गानविधौ ।
तस्मात्साम्यं कार्यं भाण्डेन समं न गानेन ॥ ४१८ ॥
ये पूर्वोक्ता भावाः स्थिताश्रया···············वापि ।
तेषां पादनिपातं ज्ञात्वा साम्यं बुधैः कार्यम् ॥ ४१९ ॥
अपटाक्षेपकृताश्चत्यविक(?)हर्षरोषशोकाद्याः ।
तत्र परिच्छेदसमः कार्यस्तज्ज्ञैः प्रदेशस्तु ॥ ४२० ॥
एवमेते बुधैर्ज्ञेयाः प्रयोगे परिवर्तकाः ।
अत ऊर्ध्वं प्रवक्ष्यामि ग्रहभाण्डसमाश्रयम् ॥ ४२१ ॥
अभाण्डमेकं गानस्य परिवर्तं प्रयोजयेत् ।
चतुर्थे परिवर्ते तु तस्य भाण्डग्रहो भवेत् ॥ ४२२ ॥
संनिपातग्रहा काचित्काचिद्वै तर्जनीग्रहा ।
तथाकाशग्रहा काचिद्ध्रुवा गाने भवन्ति हि ॥ ४२३ ॥
ध्रुवायोगस्तु[2]······························ ।
···········ग्रहो यस्मात्कलातालसमन्वितः ॥ ४२४ ॥
स तु भाण्डेन कर्तव्यस्तज्ज्ञैर्गतिपरिक्रमे ।
शीर्षकश्चोद्धतायाश्च प्रदेशिक्या प्रदो भवेत् ॥ ४२५ ॥
विलम्बितास्थिता योगे संनिपातेन कल्पते ।
नर्कुटस्यादितायाश्च प्रासादिक्यास्तथैव च ॥ ४२६ ॥

---

१. 'व्यस्रं' क. २. त्रुटिचिह्नमादर्शद्वयेऽपि नास्ति.

संनिपातग्रहः कार्या द्रुता यश्चोर्ध्वजो ग्रहाः ।
नैष्क्रामिक्यानुबद्धानां ग्रहो गानसमो भवेत् ॥ ४२७ ॥
तेषां हि परिवर्तस्तु कार्यो गाने प्रयोक्तृभिः ।
संनिपातश्च शम्या च तालश्चाकाशजस्तथा ॥ ४२८ ॥
संभ्रमादेगजाश्चैव........सापेक्षा भवन्ति हि ।
ग्रहो गानसमानस्तदुपान्त्यं संप्रकीर्तितम् ॥ ४२९ ॥
भूषणवासःपतने वैकल्ये विस्मृते परिश्रान्ते ।
दोषाच्छादनहेता(?)रुध्वान्त्यो नान्तरीयास्तु ॥ ४३० ॥
एकं प्रयोक्तृभिः कार्यं ध्रुवाणां संनिवेशनम् ।
यथास्थानाश्रयोपेतं नृत्तनाट्यप्रयोगजम् ॥ ४३१ ॥
यथा वर्णावृ(द्द)ते चित्तं(त्रं) न शोभाजननं भवेत् ।
एवमेव विना गीतं नाट्यं रङ्गं न गच्छति ॥ ४३२ ॥
पूर्वरङ्गविधानेन कर्तव्यो गानजो विधिः ।
देवपूजाधिकारस्तु स च पूर्वः प्रकीर्तितः ॥ ४३३ ॥
ततश्च काव्यबन्धेषु नानाभावसमाश्रयम् ।
ग्रामद्वयं च कर्तव्यं यथा साधारणाश्रयम् ॥ ४३४ ॥
मुखे तु मध्यमग्रामः षड्जः प्रतिमुखे भवेत् ।
साधारितं तथा गर्भे विमर्शे चैव पञ्चमम् ॥ ४३५ ॥
कैशिकं च तथा कार्यं गाननिर्ग्रहणे बुधैः ।
संनिवृत्ताश्रयं चैव रसभावसमन्वितम् ॥ ४३६ ॥
तथा रसकृता नित्यं ध्रुवाः प्रकरणाश्रिताः ।
नक्षत्रीव....गगनं नाट्यमुद्द्योतयन्ति ताः ॥ ४३७ ॥
मागधी प्रथमा गीतिस्तथा चैवोर्ध्वमागधी[1] ।
संभाविता तृतीया स्यात्पृथुला च तथापरा ॥ ४३८ ॥
त्रिर्निवृत्त्या पदानां तु मागधी समुदाहृता ।
चित्रेऽर्धमागधी चैव द्विनिर्वृत्तपदाश्रया[2] ॥ ४३९ ॥

---

१. 'चैवार्धमागधी' इति स्यात्. २. 'द्विर्निर्वृत्त' इति स्यात्.

वृत्तौ संभाविता प्रायो लघुवाद्याक्षरान्विता ।
गानयोगे चतस्रस्तु योज्याः सर्वत्र गायनैः ।
यथाक्षरकृता ह्येताः प्रयुज्यन्ते ध्रुवास्वपि ॥ ४४० ॥
पूर्णस्वरं वाद्यविचित्रवर्णत्रिस्थान[1]शामित्रितयं त्रिमार्गगम् ।
रक्तं समश्लक्ष्णमलंकृतं च सुखं प्रशस्तं मधुरं च गानम् ॥ ४४१ ॥
गीते प्रयत्नः प्रथमं तु कार्यः शय्यां हि नाट्यस्य वदन्ति गीतिम् ।
गीते च वाद्ये च हि सुप्रयुक्ते नाट्यप्रयोगो न विपत्तिमेति ॥४४२ ॥
एतदुक्तं मया सम्यग्ध्रुवाणां लक्षणं महत् ।
अत ऊर्ध्वं प्रवक्ष्यामि गातृवादकयोर्गुणान् ॥ ४४३ ॥

इति भारतीये नाट्यशास्त्रे ध्रुवाध्यायो द्वात्रिंशः समाप्तः ।

---

## त्रयस्त्रिंशो[2]ऽध्यायः ।

गुणात्प्रवर्तते ज्ञानं दोषाच्चित्तं निरस्यति ।
तस्माद्यत्नेन विज्ञेया गुणदोषाः समासतः ॥ १ ॥
गाता प्रत्यग्रवया स्निग्धो मधुरस्वरोपचितकण्ठः ।
लयतालकलापातप्रमाणयोगेषु तत्त्वज्ञः ॥ २ ॥
रूपगुणकान्तियुक्ता माधुर्योपेतसत्त्वसंपन्नाः ।
पेशलमधुरस्निग्धानुनादसमरक्तशुभकण्ठाः ॥ ३ ॥
सुविहितसमकविधायिन्याक्षोभ्यगीततालयकुशलाः ।
आतोद्यार्पितकरणा विज्ञेया गायिका श्यामाः ॥ ४ ॥
प्रायेण तु स्वभावात्स्त्रीणां गानं नृणां च पा[3]ठ्यविधिः ।
स्त्रीणां स्वभावमधुरः कण्ठो नृणां सुललितत्वं च ॥ ५ ॥
ये स्त्रीणां पाठ्यगुणा भवति नराणां च गानमधुरत्वम् ।
ज्ञेयोऽलंकारोऽसौ नहि स्वभावो ह्ययं तेषाम् ॥ ६ ॥
सुनिविष्ट····वाणिलयनियोगज्ञो(?)सुमधुरं प्रलयहस्तौ ।
गातृगुणैश्चोपेतावविहितम[न]सौ सुसंगीतौ ॥ ७ ॥

---

१. 'गामि त्रिलयं' इति भवेत्. २. 'त्रयस्त्रिंशः' इत्येवादर्शद्वये. ३. 'वाद्य' इति स्यात्.

स्फुटरचितविचित्रकरणौ गीतं श्रवणौ च तौ प्रवीणौ च ।
चि(द्वि)त्रादिवाद्यकुशलो वीणाभ्यां वादको भवति ॥ ८ ॥
बलवानवहितबुद्धिर्गीतलयज्ञस्तथा सुसंगीतः ।
श्रावकमधुरः स्निग्धो दृढपाणि····वैदिको ज्ञेयः ॥ ९ ॥
अविचलितमविच्छिन्नवर्णालंकारबोधकं मधुरम् ।
स्निग्धं दोषावारण(?)वेणोरेवं स्मृतं वाद्यम् ॥ १० ॥

अन्ये—ज्ञानविज्ञानकरणवचनप्रयोगसिद्धिशिष्यनिष्पादनानि षडाचार्यगुणाः ।

श्रावकोऽथ घनः स्निग्धो मधुरो ह्यवधानवान् ।
त्रिस्थानशोभीत्येवं तु षट्काङ्गस्य गुणाः स्मृताः ॥ ११ ॥
हृदात्तं श्रूयते यस्मात्तस्माच्छ्रावक उच्यते ।
श्रावकः सुस्वरो यस्मादच्छिद्रः स घनः स्मृतः ॥ १२ ॥
अरूक्षध्वनिसंयुक्तः स्निग्धस्तज्ज्ञैः प्रकीर्तितः ।
मानप्रह्लादनकरः स वै मधुर उच्यते ॥ १३ ॥
स्वरेऽधिके च हीने च ह्यविरक्तो वि(ऽव)धानवान् ।
शिरःकण्ठेष्वभिहितं त्रिस्थानमधुरस्वरैः ॥ १४ ॥
त्रिस्थानशोभीत्येवं तु स हि तज्ज्ञैः प्रकीर्तितः ।
कपिलो व्यवस्थितश्चैव तथा संदष्ट एव च ॥ १५ ॥
काकी च तुम्बकी चैव पञ्च दोषा भवन्ति हि ।
वैश्व(स्व)र्यं च भवेत्तत्र तथा स्याद्यर्य(द्धर्घ्र)रायितम् ॥ १६ ॥
कपिलः स तु विज्ञेयः श्लेष्मकण्ठस्तथैव च ।
ऊनताधिकता वापि स्वराणां यत्र दृश्यते ।
कृष(श)त्वदोषतश्चैव ज्ञेयः स त्वम(न)वस्थितः ॥ १७ ॥
दत्तप्रयोगात्संदष्टः स्वाचार्यैः परिकीर्तितः ।
यो न निस्तरति स्थाने स्वरमुच्चारणागतम् ॥ १८ ॥
तथा रूक्षस्वरश्चैव स काकीत्यभिसंज्ञितः ।
नासाग्रग्रस्तशब्दस्तु तुम्बकी साभिधीयते ॥ १९ ॥

अन्ये—

सन(?)प्रहरणौ चैव जविनौ विशदौ तथा ।
जितश्रयौ विकृष्टौ च मधुरौ स्वरवर्जितौ ॥ २० ॥
तथा दृढनखौ चैव ज्ञेया हस्तस्य वै गुणाः ।
एते गुणाश्च दोषाश्च तत्त्वतः कथिता मया ।
अत ऊर्ध्वं प्रवक्ष्यामि ह्यवनद्धविधिं पुनः ॥ २१ ॥

गान्धर्वमेतत्कथितं मया च पूर्वं यदुक्तं प्रपितामहेन ।
कुर्याद्य एवं तु नरः प्रयोगे सन्मानमँध्यं लभते स लोके ॥ २२ ॥

इति भारतीये नाट्यशास्त्रे गुणाध्यायो नाम त्रैयस्त्रिंशः समाप्तः ।

---

## चतुस्त्रिंशोऽध्यायः ।

ततवाच्य(द्य)विधानं यन्मया वि(भि)हितं पुरा ।
अवनद्धातस्यापि तस्य वक्ष्यामि लक्षणम् ॥ १ ॥
यथोक्तं मुनिभिः पूर्वं स्वातिनारदपुष्करैः ।
सर्वलक्षणसंयुक्तं सर्वातोद्यविभूषितम् ॥ २ ॥
मृदङ्गानां समासेन लक्षणं पणवस्य च ।
दर्दुरस्य च संक्षेपाद्विधानं नाट्यमेव च ॥ ३ ॥
अनध्याये कदाचित्तु मुनिर्महति दर्दुरे ।
जलाशयं जगामाथ सलिलानयनं प्रति ॥ ४ ॥
तस्मिञ्जलाशये यावत्प्रविष्टः पावकाशनः ।
धाराभिर्महतीभिस्तु पूरयन्निव मेदिनीम् ॥ ५ ॥
पतन्तीभिश्च धाराभिर्वायुवेगाज्जलाशये ।
पुष्करिण्या पटुः शब्दः याप्र(पत्रा)णामभवत्तदा ॥ ६ ॥
वैवांधारोद्भवं शब्दं निशम्य तु महामुनिः ।
आश्चर्यमिति मन्वानश्चावधारितवांश्च तम् ॥ ७ ॥

---

१. 'मर्घ्यं' इति स्यात्. २. 'चतुस्त्रिंशः' इत्यादर्शद्वये. ३. 'ववाधीरोद्भवं' ख.

ज्येष्ठमध्यकनिष्ठं तु पत्राणामवधार्य च ।
गम्भीरमधुरं हृद्यमाजगामाश्रमं ततः ॥ ८ ॥
गैत्वा सृष्टं मृदङ्गानां पुष्करानसृजत्ततः ।
पणवं दर्दुरांश्चैव सहितो विश्वकर्मणा ॥ ९ ॥
देवानां दुन्दुभिर्दृष्ट्वा चकार मुरजं ततः ।
आलिङ्ग्यमूर्ध्वकं चैव तथैवाङ्किकमेव च ॥ १० ॥
क(च)र्मणा चावनद्धांस्तान्मृदङ्गान्दर्दुरांस्तथा ।
तन्त्रीभिः पणवं चैवमूहापोहविशारदः ॥ ११ ॥
भूयश्चान्यान्यपि तथा काष्ठायसकृतान्यथ ।
झल्लरीपटहादीनि चर्मनद्धानि तानि तु ॥ १२ ॥
आतोद्यन्समया(?)ये तु यानि वाद्यानि वादकैः ।
अङ्गप्रत्यङ्गयोगेन गदतो मे निबोधत ॥ १३ ॥
विपञ्ची चैव चित्रा च दारवीष्वङ्गसंज्ञिते ।
कच्छपीघोषकादीनि प्रत्यङ्गानि तथैव च ॥ १४ ॥
मृदङ्गा दर्दुरश्चैव पणवेष्वङ्गसंज्ञिते ।
झल्लरीपटहादीनि प्रत्यङ्गानि तथैव च ॥ १५ ॥
अङ्गलक्षणसंयुक्तो विज्ञेयो वंश एव हि ।
शङ्खस्तु डक्किनी चैव प्रत्यङ्गे परिकीर्तिते ॥ १६ ॥
नास्ति किंचिदनायोज्यमातोद्यं दशरूपके ।
रसभावप्रयोगं तु ज्ञात्वा योज्यं विधानतः ॥ १७ ॥
उत्सवे चैव याने च नृपाणां मङ्गलेषु च ।
शुभकल्याणयोगे च विवाहकरणे तथा ॥ १८ ॥
..........उत्पन्ने संग्रामे शुद्धसंकुले ।
ईदृशेषु च कार्येषु सर्वातोद्यानि वादयेत् ॥ १९ ॥
स्वभावगृहवार्तायामल्पभाण्डं प्रयोजयेत् ।
उत्थानकाव्यबन्धेषु सर्वातोद्यानि वादयेत् ॥ २० ॥

---

१. 'तत्वा' ख.

अङ्गानां तु समत्वार्थं छिद्रप्रच्छादने तथा ।
विप्राप्तिहेतोः शोभार्थं भाण्डवाद्यं····जायते ॥ २१ ॥
तत्रावनद्धं वक्ष्यामि विधिस्वरसमुत्थितम् ।
नानाकरणसंयुक्तं मानजातिविभूषितम् ॥ २२ ॥
यावन्ति वम(चर्म)नद्धानि ह्यातोद्यानि द्विजोत्तमाः ।
तानि त्रिपुष्कराद्यानि त्ववनद्धमिति स्मृतम् ॥ २३ ॥
एतेषां तु पुनर्भेदाः शतसंख्याः प्रकीर्तिताः ।
किशु(?)त्रिपुष्करस्यत्ते(?) लक्षणं प्रोच्यते मया ॥ २४ ॥
शेषाणां कर्मबाहुल्यं यस्मादस्मिन्न दृश्यते ।
न स्वरास्तत्र हाराश्च नाक्षराणि न मार्जना ॥ २५ ॥
भेरीपटहझञ्झाभिस्तथा दुन्दुभिडिण्डिमैः ।
शैथिल्यादायतत्वाच्च स्वरे गाम्भीर्यमिष्यते ॥ २६ ॥
प्रायशः[1] स्वानि कार्याणि कालं कार्यं समीक्ष्य तु ।
किं तु त्रिपुष्करस्यास्य श्रूयतां यो विधिः स्मृतः ॥ २७ ॥
वास्वात्मको भवेच्छन्दः स वापि द्विविधः स्मृतः ।
स्वरवांश्चैव विज्ञेयस्तथा चैवाभिधानवान् ॥ २८ ॥
तत्राभिधानवान्नाम नानाभावसमाश्रयः ।
स्वरवानपि विज्ञेयो नानातोद्यसमाश्रयः ॥ २९ ॥
शारीर्यामेव वीणायां स्वराः सप्त प्रकीर्तिताः ।
तेभ्यो विनिःसृताश्चैवमातोद्येषु द्विजोत्तमाः ॥ ३० ॥
पूर्वं शरीरादुद्भूताः स्वरा गच्छन्ति दारवीम् ।
ततः पुष्करतं(?) चैवमनुयान्ति घनं पुनः ॥ ३१ ॥
एषां बाह्वीरणैर्ज्ञेया प्रहारा वचनाश्रयाः ।
युद्धादिभिः सदा योस्या(ज्या) वीणा वाद्येषु योक्तृभिः ॥ ३२ ॥
शारीर्यामथ वीणायां झिङ्कं जगति कादिति(?) ।
भवेद्बाष्करणं तत्र नानाकरणसंयुतम् ॥ ३३ ॥

---

1. 'प्रायशस्तानि' ख.

यं यं गाता स्वरं गच्छेत्तमातोद्यैः प्रयोजयेत् ।
यतिपाणिसमायुक्तं गुरुलध्वक्षरान्वितम् ॥ ३४ ॥
पौष्करस्य तु वाद्यस्य मृदङ्गपणवाश्रयम् ।
विधानं तु प्रवक्ष्यामि दर्दुरस्य तथैव च ॥ ३५ ॥
षोडशाक्षरसंपन्नं चतुर्मार्गं तथैव च ।
विलेपनं षट्करणं त्रियति त्रिलयं तथा ॥ ३६ ॥
त्रिगतं त्रिप्रका(चा)रं च त्रियोगं च त्रिपाणिकम् ।
दशार्धपाणिप्रहतं त्रिप्रहारं त्रिमार्जनम् ॥ ३७ ॥
विशल्यलंकार च त(?) तथाष्टादशजातिकम् ।
एभिः प्रकारैः संपन्नं वाद्यं पुष्करजं भवेत् ॥ ३८ ॥

तत्र षोडशाक्षरमिति यत्तदनुव्याख्यास्यामः—

क-ख-ग-घ.ट-ठ-ड-ढ.त-थ-द-ध.य-र-ल-ह.इति षोडशाक्षराणि स्युः।
पुष्करवाद्ये नित्यं वाष्करणे संविधेयानि ॥ ३९ ॥

चतुर्मार्गं नाम—

आलिप्तादितगोमुखवितस्तालपत्वा[नि] चत्वारो मार्गाः ।

विलेपनं नाम—

वामोर्ध्वैकप्रलेपात् ।

षट्करणं नाम—

रूपं कृत[प्रतिकृतं] प्रतिभेदो रूपशेषमोघः प्रतिशुक्केति ।

त्रियति नाम—

समा श्रोतागता गोपुच्छेति अन्वयात् ।

त्रिलयं नाम—

द्रुतमध्यविलम्बितयोगात् ।

त्रिगतं नाम—

तत्त्वं घनमोघश्चेति ।

त्रिप्रचारो नाम—

समप्रचारो विषमप्रचारः समविषमप्रचारश्चेति ।

त्रिसंयोगं नाम—

गुरुसंयोगो लघुसंयोगो गुरुलघुसंयोगश्चेति ।

त्रिपाणिकं नाम—

समपाणिः अवरपाणिः उपरिपाणिश्चेति ।

पञ्चपाणिप्रहतं नाम—

समपाणिरर्धपाणिरर्धार्धपाणिः पार्श्वपाणिः प्रदेशिनीतः इति ।

त्रिप्रहारं नाम—

निगृहीतोऽर्धनिगृहीतो मुक्तश्चेति ।

त्रिमार्जनं नाम—

[1] ........................................ ।

[विशल्यलंकारं नाम—]

........................................ ।

[अष्टादशजातिकं नाम—]

........................................ ॥

अभिव्यक्तानि पूर्वं यान्येतानि षोडशाद्यानि ।
तान्यक्षराणि जानीत पुष्करेषु यथाक्रमम् ।
पणवे दर्दुरे चैव मृदङ्गेषु तथैव च ॥ ४० ॥
कटरतघजस्तु दक्षिणमुखेऽत्र गहथाश्च वामकेनिवताः (?) ।
थकारो(?) चैवोर्ध्वे करणध्वलाश्चस्युरालिङ्ग्ये(?) ॥ ४१ ॥

एतेषामक्षराणां स्वरसंयोगं च व्याख्यास्यामः—

तत्र—अ-आ-इ-ई-उ-ऊ-ए-ऐ-ओ-औ-अं-अः—इति स्वरा व्यञ्जनैः सह संयोगं गच्छन्ति ।

तत्र अकारेकारोकारैका[रौका]रांकाराः ककारे यथा—'क कि कु के को कं' इति ।

इकारोकारौकाराः खकारे यथा—'खि खु खौ' इति ।

उकारैकारौ[कारा] गकारे यथा—'गु गे गौ' इति ।

अकारैकारौकारा घकारे यथा—'घ घे घौ' इति ।

---

१. त्रिमार्जनादीनां नामानि त्रुटितानि प्रतीयन्ते.

अकारेकारौकारांकाराष्टकारे यथा—'ट टि टो टं' इति ।

अकारेकारौकारांकाराष्ठकारे यथा—'ठ ठि ठो ठं' इति ।

अकारौकारौ डकारे यथा—'ड डो' इति ।

अकारेकारैकारा णकारे यथा—'ण णि णे' इति ।

अकाराकारेकारैकारास्तकारथकारयोर्यथा—'त ता ति ते,थ था थि थे' इति।

अकारोकारैकारौकारा दकारे यथा—'द दु दे दो' इति ।

अकारेकारौकारांकारा धकारे यथा—'ध धि धो धं' इति ।

अकाराकारेकारैकारा रेफे यथा—'र रा रि रे' इति ।

अकाराकारेकारैकारा लकारे यथा—'ल ला लि ले' इति ।

हकारमकारौ शुद्धौ (?) ।

तत्र—ककारघकारनकारथकारधकाराणां रेफोऽनुच्छमः(बन्धः)यथा—'ध्रु क्रं व्रघ्नं त्रेत्रघ्नं ध्रं व्रघ्न' इति(?) ।

ककारस्य लकारोऽप्यनुबन्धो यथा—..................'द्धंद्ध' इति ॥

एवमेतैः संयोगैर्द्विहस्तसंयुक्तान्यक्षराणि भवन्ति ।

तत्र—अङ्किके मृदङ्गे द्विपुष्करे समहस्तनिपाताद्धंकारः ।

तत्र—अङ्गुलिचलनात्कुकारः । तत्रैव—अवष्टम्भाद्यकारः ।

तत्रैव—अर्धनिगृहीतस्थकारः । तत्रैव—दक्षिणमुखे पार्ष्णिपीडितः क्ककारः ।

तत्रैव—अङ्गुलिकूजनात्क्षकारः । ऊर्ध्वकवामकयोः समहस्तनिपाताद्धंकारः प्रदेशिन्या वालिङ्गये क्केकारः ।

पञ्चप्राणिप्रहतमिति यदुक्तम्—.................समपाण्यर्धपाण्यर्धार्धपाणिपार्श्वपाणिप्रदेशिन्यश्चेति । त एते पञ्चपाणिप्रहता निगृहीतार्धनिगृहीतमुक्ता यथायोगं कार्याः ।

तत्र—समपाणिप्रहता मकारः स निगृहीतः । गकारघकारधकारा अर्धपाणिप्रहतार्धनिगृहीताः । ककारखकारटकारद्वाकाराः पार्श्वपाणिप्रहता निगृहीताः । तकारवकारावर्धपाणिप्रहतावर्धनिगृहीतौ । ठकारणकाररेफलकारहकारा द्विहस्ताप्रहरतामुक्ताः । प्रदेशिनीप्रहतो मुक्तः क्लंकारः पार्श्वपाणिद्विहस्तप्रहतमुक्ताः अपि द्रॉं द्रॉं द्रॉं द्रकारः ।

तत्र च—ङ्ककारा अर्धपाणिगृहीताः। पार्श्वपाणिनिगृहीतश्चकारः । एवमेतेष्वक्षरेषु यो(?) प्रवेशो न कार्याः प्रहाराः ।

षोडशैतानि दृष्टानि वाद्यजात्यक्षराणि तु ।
अनेनैव विधानेन योज्यं वा ज्वरसं(?)बुधैः ॥ ४२ ॥

चतुमार्गमिति यदुक्तं तदनुव्याख्यास्यामः—

अदितालिप्तमार्गोपु(ऽल्प)वितस्ता गोमुखी तथा ।
मार्गाश्चत्वार एवैते प्रहारकारणाश्रयाः ॥ ४३ ॥

तत्र—एषां किल मृदङ्गप्रहारप्रयुक्तोऽदितमार्गः । ऊर्ध्वाङ्किकदक्षिणमुखो[1]………क्षिप्तहस्तप्रहतो वितस्तामार्गः । आलिङ्गिककरणबहुलसर्वपुष्करप्रहतो गोमुखीमार्गः इति ।

तत्र—अदिताप्रहारं जातम्(?) । 'कटमटथिघेतटघोघेरामराघेघेटाथिमटाघेय' इत्यदितामार्गः । 'घदुघदुखं घेगुड्डघेगुड्ड घेमुघघेघोघथु घघदो घेघघे' इत्यालिप्तमार्गः । 'कथिता तकिता तकिथे तकिते थथके ता गुदाघेघेघेदा' इति वितस्तामार्गः । 'गुद्धक्कद्धं मथिकटा घंघेम छिदुखुखुणो गगटस्थिमटम्' इति गोमुखीमार्गः ।

कुर्याद्वितस्तामार्गे दणमहविवर्जितान्प्रहारांस्तु उदूतमार्गेण विना शेषाः । कार्यास्तु गोमुख्यां द्रोमां द्रोमां गुड्डघे गुड्डघे दुमात्थीति । आलिप्तमार्गे वाद्यं विज्ञेयं वादकैस्तज्ज्ञैः । घणघंटणघो गुदुघेघेद्घटमटां कटां किटिमां करहल दुनाकेकेदिट्टुंटे क्केदेघा गोमुख्यः ।

ये त्वालिप्तसमुत्थाः सर्वे मार्गास्तु विधातव्याः ।
ग्रहमोक्षणसंघातैस्तु मृदङ्गानां ग्रहो भवति ॥ ४४ ॥
एतेषां तु प्रवक्ष्यामि दर्शनानि यथाक्रमम् ।
चतुर्णामपि मार्गाणामक्षरग्रहणं यथा ॥ ४५ ॥

वन्दुघेटां मंटाघंरोत्थिमयं कटात्थिमथिक्केक्काथि क्काथिकटाकिटीथिघघेडित्ता वाघं चन्द्रां त्रकितां चन्द्रां दघिटिटाघेटा मथिकिटिकितांटाकुतौ तकिकिदो मतिसंयोगाद्धिस्तेत्र द्रामांगुदघेघेदो घघिदाघंद्रमाम् ।

---

१. आलिप्तमार्गलक्षणशेषभूतो वितस्तामार्गलक्षणादिभूतोऽत्र पाठत्रुटितः प्रतीयते.

आलिप्तकसंयोगः कार्योऽयं वादने सम्यक् ।

घटामथ गुड्डुघोटाघेटाखोणांटाघोटखमटिघंक्कंवंघड्डुणोणोणा किंतारांकुतौ-तकिटां किकिदोमतिसंयोगाद्वितस्तेत्र द्रामांगुदुधेघेघेदोघघेदा घंद्रामां आवेगो मुख्याः ।

एतेषां पुष्कराणां त्रिविधः प्रचारः—समप्रचारो विषमप्रचारः समविषमप्रचारमिति । तत्र—वामोर्ध्वकयोर्वामे सव्येनैव, ऊर्ध्व[के] तु दक्षिणक ············ । कार्मारवी पुनस्त्रिस्वस्तु मार्जना ज्ञेयाः । पुष्करेषु पुष्कराश्रयाः (?) ।

गान्धारो वामके कार्यः षड्जो दक्षिणपुष्करे ॥ ४६ ॥
ऊर्ध्वके पञ्चमश्चैवमायूर्यां तु स्वरा मताः ।
वामके पुष्करे षड्ज ऋषभो दक्षिणे तथा ॥ ४७ ॥
ऊर्ध्वके पञ्चमश्चैवमर्धमायूर्युदाहृता ।
ऋषभः पुष्करे वामे षड्जो दक्षिणपुष्करे ॥ ४८ ॥
पञ्चमश्चोर्ध्वके कार्यः कार्मारव्याः स्वरास्त्वमी ।
एतेषामनुवादी तु जातीनां यः स्वरः स्मृतः ॥ ४९ ॥
आलिङ्ग्यमार्जनप्राप्तो निषादः संविधीयते ।
मयूरी मध्यमग्रामे षड्जे त्वर्धा तथैव च ॥ ५० ॥
कामारवी च गान्धारे साधारणसमाश्रया ।
स्वराः स्थानस्थिता ये तु स्रुतिसाधारणाश्रयाः ॥ ५१ ॥
एवं संमार्जनकृताः शेषाः संचारिणो मताः ।
वामके चोर्ध्वके कार्या हार्या लेपतश्च सप्त स्वराः(?) ॥ ५२ ॥
शैथिल्यादायतत्वाच्चर्मस्फोटनमपि च ।
स्वराणां संभवे··························· ॥ ५३ ॥
········································ ।
···········हस्तप्रहितावालिप्ते वाद्यकरणे तु ॥ ५४ ॥

१. अनुष्टुभि कियानंशः, आर्यापूर्वार्धे, आर्योत्तरार्धांशश्च कियांस्त्रुटितः प्रतिभाति. आदर्शद्वयेऽपि त्रुटिचिह्नं न दृश्यते.

वामोर्ध्वकमध्यानां प्रहतौ वामः करस्तु कर्तव्यः ।
वामोर्ध्वकसंयोगात्प्रहते हस्तप्रस्तारं तु ॥ ९५ ॥
संछन्दतः कराणां प्रहतं शेषेषु मार्गकरणेषु ।
आदितगोमुखयोगे समविषमो हस्तसंचारः ॥ ९६ ॥
शृङ्गारहास्ययोगे वाद्यं योज्यं तथादिते मार्गे ।
वीराद्भुतरौद्राणां वितस्तमार्गेण मार्गं तु ॥ ९७ ॥
[1]................................................ ।
करुणरसे त्विह वाद्यं योज्यं त्वालिप्तमार्गेण ॥ ९८ ॥
[2]................................................ ।
बीभत्सभयानकयोस्तथैव नित्यं हि गोमुख्याः ॥ ९९ ॥
रसभावसत्त्वयोगं दृष्टाभिनयं गतिप्रचारं च ।
वाद्यं वृत्ते कार्यं तथा तथा मार्गसंयोगात् ॥ ६० ॥
एवं प्रतिविधानं कार्यं मार्गाश्रितं बुधैः सम्यक् ।
वक्ष्याम्यतश्च भूयो द[र्दु]रपणवाश्रमं वाद्यम् ॥ ६१ ॥
अतिवादितमनुवाद्यं समवादितमुच्यते तथा वाद्यम् ।
तत्रातिवादितं स्यात्पुष्करज्ञा(गा)नामग्रतो यत्र ॥ ६२ ॥
यत्त्वनुगतं मृदङ्गैरनुवादितमुच्यते तथा वाद्यम् ।
समवादितं मृदङ्गैर्ज्ञेयं साम्येन यद्वाद्यम् ॥ ६३ ॥
कखचाः पखमा दोण्हा नचला ककिलं····ति करिह्ळः ।
एते वर्णाः पणवातोद्यविधाने विधातव्याः ॥ ६४ ॥

'धाधा नाचोत्तकुलं द्रहुलं हाकिरिणिकिरिल्हठंठेणिक्रमिणिकिथखोणं' इति पणववाद्यम् ।

तस्य प्रहरैस्तं(?) कार्यं कनिष्ठिकानामिकाग्रकोणे ।
नानाकरणविभागैः पणवैः शिथिलां च तानज्ञैः ॥ ६५ ॥
वादकनिष्ठिकाभ्यां शीघ्रकृता करेण हस्तेण ।
शेषास्तु वादनविधौ स्मृताः प्रहारा विविधवाद्याः ॥ ६६ ॥

---

१–२. आर्यापूर्वार्धं त्रुटितं प्रतिभाति.

कोणानामिकवाद्यं शुद्धं प्रहतं भवेदेतत्।
(?)भात्तकयोगात्त्रिकुलमित्येतद्भ्रान्तवादनाम्रकृतम् ॥ ६७ ॥
जगति करणानुविद्धं तत्राभ्यस्तत्र कारस्तु।
दीर्घकरणानुविद्धैकारे⋯⋯तूर्ध्वहस्तसंयोगात् ॥ ६८ ॥
स तु वादकेन वाद्यैर्ध्रुवेण⋯विशेषतः कार्थः।
सचितकक्षौर्येण वौ कृत्वा धुर्यपरिवादकाभ्यादि ॥ ६९ ॥
रणणकिकिह्लिकिणिज्वा इति प्रहारा विधातव्याः।
कृत्वा शिथिलं कक्षं कार्योसुकनिष्ठिकाग्रकोणेन ॥ ७० ॥
तेनैव चरेद्धस्त्वो(?)द्धाण⋯⋯इत्यञ्चितेनैव।
(?)अञ्चितशिथिले पणवे कठणतणिणकृताः प्रहारास्तु ॥ ७१ ॥
वैभ्रान्तक(?)करणा न तथा स्वस्तिककत्थे च शिथिले च।
अञ्चितकक्षे पणवे खखणण⋯कृताः प्रहारास्तु ॥ ७२ ॥
विण्णे इति प्रहारा[ः प]णवे तु⋯⋯सदा शिथिलकक्षाः।
खलु चटाकृताः प्रहाराः स्वत्सासहि पणवे विधातव्याः ॥ ७३ ॥
शेषभ्रान्तकयोगाः संयुक्ताः संविधातव्याः।
टकारानुस्वनं वाद्यं कक्षाञ्चिते तु संभवति ॥ ७४ ॥
तेन णकारो युक्तो ल्ह इति पणवे प्रहारः स्यात्।
तिर्यग्गृहीतवानमुखवर्तित इष्यते तकारस्तु ॥ ७५ ॥
ध्रहुलं ध्रहुलं क्रमधीत्येवं ह्येते प्रहारास्तु।
एवं पणवे वाद्यं विधिवत्संक्षेपतो मयाभिहितम् ॥ ७६ ॥
व्याख्याम्यतः परमहं दर्दुरवाद्याक्षराण्येवम्।
(?) रक्तित्रिकलौ केचद्रो गौणो हथिहासयुक्ताः ॥ ७७ ॥
इति दर्दुरे प्रहाराः कार्यामुक्ता थणन्नांश्च(?)।
कुर्यात्तत्रेणणक्षार ग्रघ इति च दक्षिणकरेण ॥ ७८ ॥
वामेण(न) गोमत्थास्तु स्पृष्टः ककारोग्रेण।
मुक्तोल्लातितिनिपीडचैकरद्वयेनापि ॥ ७९ ॥

विमुक्तप्रहतस्यान्ते स्वने निपीडिते चैव ।
स्यात्पीडिते च थित्थेन्त्र नित्यमथावि ॥ ८० ॥
मुक्तारिशेषा भवन्ति मुक्तास्वक्त इति चैव नि[गृ]हीते ।
शीघ्रकरणानुविद्धस्थितिरेव हि व स्वरखलतिकं स्यात् ॥ ८१ ॥
इति दर्दुरप्रहाराः समासतस्तत्र विज्ञेयाः ।
एवं त्वसंकरकृता प्रहारशुद्धिरिह कीर्तितास्तज्ज्ञैः ॥ ८२ ॥
दर्दुरपणवमृदङ्गैर्मिश्रितवाद्यं प्रवक्ष्यामि ।
तत्र व्यक्तीभावं वाद्ये गच्छन्ति मिश्रिता केचित् ॥ ८३ ॥
युगपत्करण(?) केचित्केचित्पर्यायकारणात् ।
एकैकसंप्रयुक्ता वर्णा न·····स्तथैव संयुक्ताः ॥ ८४ ॥
यन्तारा दोखो त्रिकुलं तत्कृता मृदङ्गेषु ।
अथ दर्दर पिंपिथिक्के निपणवयोस्तु संयुक्ताः ॥ ८५ ॥
·····················णणखोदो देदे थिथिविमिश्रास्तु ।
एभ्यो येऽन्ये शेषास्ते मिश्रा एव नित्यशः कार्याः ॥ ८६ ॥
पूर्वेऽपि च मिश्रत्वं व्रजन्ति सर्वे यथायोगम् ।
युगपत्करणान्निपुणं नाणो खुरचुणघुणहेल्ह········ ॥ ८७ ॥
ग्रहुलं हह्ला दोदो एवं योज्यास्तु पणवे हि ।
धुर्यक्तताश्च क्रमशः करणे परिवादनेन कर्तव्याः ॥ ८८ ॥
णोणो देदे धाणह्लितिकिणिकिणिकृतास्तु पणवानाम् ।
अणुबन्धे कार्यं तु कुचुकुणकेतिवाद्यं तु ॥ ८९ ॥
भूयः प्रतिकृतिभेदो मार्दङ्गिकदर्दुरिभ्यां च ।
यद्यत्कुर्यान्मुरजे प्रहारजातं गतिप्रचारेषु ॥ ९० ॥
अनुगतोऽक्षरवृत्तं तदेव वाद्यं तु पणवेऽपि ।
नहि चित्रं कर्तव्यं गतिप्रचारेषु वादनं तज्ज्ञैः ॥ ९१ ॥
समविषमं तत्र हि यत्र लक्ष्यं पादसंचारे ।
उपरिकरणे यथेष्टं कर्तव्यस्तु पणवो मृदङ्गेषु ॥ ९२ ॥

तत्र प्रहारकरणैर्मृदङ्गवाद्यं विधातव्यम् ।
प्रायेण सर्ववाद्येष्वादौ पणवग्रहः प्रयोक्तव्यः ॥ ९३ ॥
............................................... ।
वक्ष्याम्यतः परमहं लक्षणं करणजातस्य ॥ ९४ ॥
रूपं कृतप्रतिकृतं प्रतिभेदो रूपशेषमोघश्च ।
षष्ठी च प्रतिशुक्लेत्येवं ज्ञेयं करणजातम् ॥ ९५ ॥

तत्र रूपं नाम करणविभक्तं यथा—'घेघं घेघं घेघं किटिमाद्या त्रिघतमत्थि घगु गुरु किटि किटं दो घे क्ल' इति रूपम् ।

कृतप्रतिकृतं नाम यत्रैकं करणं त्रिपुष्करमुद्भावयति । यथा—द्दं खुखुणं ऋहुलं ग्रहुलं णणणं क्लमित्थिम् । घे दो घे घत्तिमथिनदे णे णो किं तोटो मत्थि टोणं क्राम् । गुडये क्लिहुलेद्वां ल्हदो ध्रोध्रो णखे वाद्यम् ।

[प्रतिभेदो नाम—] युगपत्कृते करणे मृदङ्गानां यदुपरि णे न गच्छति । यथा—

धाधा णा धा क्रहुलं णा णा क्रमटि दो ।
एभिः करणविशेषैः प्रतिभेदो नाम विज्ञेयः ॥ ९६ ॥

रूपशेषं नाम करणानामविशेषो यथा—खुखुणं णणणणणां मढाघेव मथिटां घेटां घेदो । ये घेटमठिणण्णखो इति वाद्यं रूपशेषं तु ।

प्रतिशुक्ला नाम—अनुस्वारो मार्दङ्गिकदर्दरवादिनाभ्यां(?)यथा—

घटमथि कुणकिटि किटिखो खोधोणा खोण खोण खोणा .... ।
कुटकुटकुणकुटि घुटखे प्रतिशुक्लाख्यं सदा करणम् ॥ ९७ ॥

ओपो नाम—(?) सर्वभाण्डविवेद्योऽद्भुतपाणिलयो न घोषवदो घः । यथा—

धिकिटि मथकि घेघे खयघेटो खोणखोणखोणोखो ।
घटगुघवटगुरुघणणि........एते तथौघे च ॥ ९८ ॥

करणानां समायोगः षड्विधः परिकीर्तितः ।
अनेन नामयोगेन योज्यं वा करणं बुधैः ॥ ९९ ॥

त्रियति नाम—समा श्रोतोगता गात्तु त्वगोपुच्छा चेति(?)लयपाणीनां त्रिविधः संयोगो(?)स च त्रिप्रकारो भवति । यथा—राद्धं विद्धं शय्यागतमिति ।

त्रिलयं नाम—द्रुतो मध्यो विलम्बितश्चेति ।

त्रिपाणिकं नाम—समपाणिरर्धपाणिरुपरिपाणिश्चेति ।

समा यतिर्द्रुतश्चापि लयो यत्र भवेदथ ।
तथैवोपरिपाणिश्च राद्धस्यैष विधिर्भवेत् ॥ १०० ॥
श्रोतोगता यतिर्यत्र लयो मध्यस्तथैव च ।
समपाणिस्तथा चैव विद्धं वाद्यं तु तद्भवेत् ॥ १०१ ॥
अर्धपाणिस्तु यत्र स्यात्तथा चैव स्थितो लयः ।
गोपुच्छं चैव हि यतिर्वाद्यं शय्यागतं हि तत् ॥ १०२ ॥
स्थिताल्लयात्प्रभृत्येषां प्रमाणं संप्रकीर्त्यते[1] ।
कार्या हानिः कलानां च शेषेष्वन्येषु पाणिषु ॥ १०३ ॥
यतयः पाणयश्चैव लया वै वाद्यसंश्रयाः ।
यथाकामं हि कर्तव्या नाट्ययुक्तिमपेक्ष्य च ॥ १०४ ॥

त्रिमार्जनं नाम—

मायूरी ह्यर्धमायूरी तथा कर्मारवी[2] पुनः ।
तिस्रस्तु मार्जना ज्ञेयाः पुष्करेषु स्वराश्रयाः ॥ १०५ ॥
गान्धारो वामके कार्यः षड्जो दक्षिणपुष्करे ।
(ऊर्ध्वके[3] पञ्चमश्चैव मायूर्यां तु स्वरा मताः ॥ १०६ ॥
वामके पुष्करे षड्ज ऋषभो दक्षिणे तथा ।)
ऊर्ध्वके पञ्चमश्चैवमर्धमायूर्युदाहृता ॥ १०७ ॥
ऋषभः पुष्करे वामे षड्जो दक्षिणपुष्करे ।
पञ्चमश्चोर्ध्वके कार्यः कर्मारव्याः स्वरास्त्वमी ॥ १०८ ॥

---

१. 'ल्लापा' ख. २. इतः प्रभृति कतिचन श्लोका अत्रैवोपयुक्ता आदर्शद्वयेऽपि दृष्ट्वात्पूर्वमपि यथादर्शे लिखिताः. ३. धनुश्चिह्नान्तरगतः पाठो भ्रष्टः क-पुस्तकात्.

एतेषामनुवादी तु जातीनां यः स्वरः स्मृतः ।
आलिङ्ग्यमार्जनप्रोक्तो निषादः स विधीयते ॥ १०९ ॥
मायूरी मध्यमग्रामे षड्जे त्वर्धा तथैव च ।
कर्मारवी तु गान्धारे साधारणसमाश्रयाः ॥ ११० ॥
स्वराः स्थानस्थिता ये तु स्रुतिसाधारणाश्रयाः ।
एवं संमार्जनकृताः शेषाः संचारिणो मताः ॥ १११ ॥
वामके चोर्ध्वके कार्या आहार्या लेपतश्च···· ।
सा·····································स्वराः ॥ ११२ ॥
शैथिल्यादायतत्वाच्च चर्मस्फोटनयापि च ।
स्वराणां संभवः कार्यो मार्जनासु प्रयोक्तृभिः ॥ ११३ ॥
मार्जना तु कृता कार्या वामकोर्ध्वकयोः सदा ।
लक्षणं मृत्तिकायास्तु गदतो मे निबोधत ॥ ११४ ॥
निःशर्करा निःसिकता निस्तृणा निस्तुषा तथा ।
न विच्छिन्ना न विषदा न क्षारा कटुका न च ॥ ११५ ॥
नावदाता न कृष्णा च नाम्ला नैव च तिक्तिका ।
मृत्तिका लेपने शस्ता तया कार्या तु मार्जना ॥ ११६ ॥
नदीकूलप्रदेशस्था श्यामा या मधुरा च या ।
तयापसरणाश्चक्षा(?) तया कार्या तु मार्जना ॥ ११७ ॥
बधिरा ह्यवदाता च कृष्णा गुर्वी न च स्थिरा ।
न(स)तुषा न स्वरोपेता श्यामा स्वरकरी भवेत् ॥ ११८ ॥
··································· ।
यवगोधूमचूर्णं वा तत्र दद्यात्प्रलेपने ॥ ११९ ॥

त्रिसंयोगं नाम—गुरुसंचयो लघुसंचयो गुरुलघुसंचयश्चेति ।

तत्र गुरुसंचयो नाम गुरुस्थितलयौघवृत्तौ यथा—

घेतो केतां चन्द्रां खेतां द्वंद्वं तथैव खेतांद्धम् ।
द्वंद्वं द्राघेतां कत्तां खेत्तामिति गुरूणि स्युः ॥ १२० ॥

गुरुलघुसंचयो नाम—लघुकैंह्ट(ध्वङ्कैर्द्दु)तलोपे (लय)प्रवृत्तौ यथा—'घटविमथिथे मथितं कितांघ गंघमो थिकं नाद्दं कटथिं करस्थि मघवे' इति संयोगो गुरुलघु स्यात् ।

लघुसंचयो लघुह्ट(द्रु)तलघुप्रवृत्तौ यथा—

घटमटमटघटमथिघट्टघट्टघट्ट गुरुकृते लघुसंचयश्च ।
इति संयोगाज्ज्ञेयं मृदङ्गवाद्यं प्रयोगज्ञैः ॥ १२१ ॥

त्रिगतं नाम—तत्त्वमनुगतमोघश्चेति ।

अक्षरसदृशं वाद्यं स्फुटपदवर्णं तथैव वृत्तसमम् ।
सुविभक्तकरणयुतं तत्त्वे वाद्यं विधातव्यम् ॥ १२२ ॥
(?) समपाण्यवपाणियुतं स्फुटप्रहारकरणानुगं चैव ।
(?) गेयपेय(?) वाद्यस्य····स भवेद्धाताय तदनुगतम् ॥ १२३ ॥
नैककरणाश्रययुतं ह्युपर्युपरिपाणिकं द्रुतलयं च ।
········································ ॥ १२४ ॥
आविद्धकरणे बहुलायाज्यं वाद्यं बुधैरोघैः ।
सर्वस्यैव हि वाद्यस्य अष्टौ साम्या(?) भवन्ति हि ॥ १२५ ॥

तद्यथा—

अक्षरसममङ्गसमं ताललययतिसमं(?) ग्रहसमं च ।
न्यासोपन्याससमं पाणिसमं चैव विज्ञेयम् ॥ १२६ ॥
यद्वृत्तं तु भवेद्गानं गुरु लघ्वक्षरान्वितम् ।
य(त)द्वृत्तं तु भवेद्वाक्यं(द्यं) तदक्षरसमं स्मृतम् ॥ १२७ ॥
ध्रुवाणां ग्रहमोक्षेषु कालान्तरकलासु च ।
यदङ्गत्रिगतं वाद्यं तदङ्गसममुच्यते ॥ १२८ ॥
यच्छरीरं भवेद्गानं कलातालप्रमाणजम् ।
तत्प्रमाणं तु तद्वाद्यं तद्वै तालसमं भवेत् ॥ १२९ ॥
स्थिते मध्ये द्रुते वापि लये गानं च यद्भवेत् ।
तथैव यद्भवेद्वाद्यं तद्वै लयसमं भवेत् ॥ १३० ॥

समा श्रोतोगता वापि गोपुच्छाय(ग्र)यतिर्यथा ।
यत्तथाहि भवेद्वाद्यं तद्वै यतिसमं भवेत् ॥ १३१ ॥
ततावनद्धवंशानामेकश्रुतिकृतोऽपि च ।
ग्रहो मानेन सहितस्तद्वै ग्रहसमं भवेत् ॥ १३२ ॥
न्यासापन्यासयोगं तु तृतीयायां भवेद्यथा ।
वंशवीणोद्भवं वाद्यं न्यासापन्यासजं तु तत् ॥ १३३ ॥
समपाण्यर्धपाणिस्थं तथैवोपरिपाणिगम् ।
गीतवाद्यानुगं वाद्यं ज्ञेयं पाणिसमं तु तत् ॥ १३४ ॥

'अष्टादशजातिकम्' इति यदुक्तम्, तदनुव्याख्यास्यामः—तदाथ (यथा—)

शुद्धा पुष्करकरणा विषमा विष्कम्भितैकरूपा वा ।
पार्ष्णिसमा पर्याया समविषमकृतोवि(ताव)कीर्णा च ॥ १३५ ॥
पर्यवसानोचितिका संयुक्ता संप्लुता महारम्भा ।
विगतक्रमा विगलिता वञ्चितिकान्यैकवाद्या च ॥ १३६ ॥

एतासां लक्षणनिदर्शनान्यभिव्याख्यास्यामः—

एकाक्षरकृतं वाद्यं यद्भवेत्सार्वकार्मि(मि)कम् ।
नित्यं करणयोगेन सा शुद्धा नामतो यथा—॥ १३७ ॥
चन्द्रं इन्द्रं खो खो णाणाति या विहितवाद्या ।
.................................................... ॥ १३८ ॥
.................................................... ।
सा शुद्धा विज्ञेया मध्यस्त्रीणां सदा जातिः ॥ १३९ ॥
[1] .................................................... ।
.................................................... ॥ १४० ॥
गुरुयुग्मं लघुयुग्मं तोरटकं तथा वाद्ये ।
...................विष्कम्भा नाम सा जातिः ॥ १४१ ॥

---

१. विषमालक्षणं त्रुटितम्.

[1]................................................ ।
................................................ ॥ १४२ ॥
................................................ ।
................................................ ॥ १४३ ॥
टोघे तां तां दोघे देहा प्रत्यक्षरेषु संयुक्ताः ।
पर्यायजातिरियं मध्यमपुरुषेषु कर्तव्या ॥ १४४ ॥
कृतोपरिकृतं वाद्यं दन्तलयं(ः) समारूढम् ।
पुनरेव समस्तं स्यात्समविषमा सा तु विज्ञेया ॥ १४५ ॥
अवकीर्णं यद्विगुणैर्गुणैर्वापि करणं मृदङ्गानाम् ।
पणवेषु दर्दरेष्वभ्य(प्य)वकीर्णा नाम सा जातिः ॥ १४६ ॥
पर्यवगच्छति पूर्वं यस्मिन्वै प्रस्तुतं करणजातम् ।
त्रिष्वपि लयेषु योज्या पर्यवसाना तु सा जातिः ॥ १४७ ॥
घेटो दोल्हां णणणं एभिर्या त्वक्षरैरेभिः(?) ।
(?) संबद्धा साम्याथे उच्चितिका जातिर्वाद्ये तु बोद्धव्या ॥ १४८ ॥
(?) घंकेयंकटकिटां एभिर्या त्वक्षरैस्तु......... ।
................................................ ॥ १४९ ॥
संयुक्तकृता सा जातिर्वैरगतौ संविधातव्या ।
सर्वाङ्गुलिचलनकृता सर्वमृदङ्गप्रहारसंयुक्ता ॥ १५० ॥
भीता गतिर्निभोगत्योः संप्लुतजातिर्विधातव्या ।
(?) अर्धपाणिकरणयुक्तं कृत्वादौ मध्यलयेन तुल्यं वा ॥ १५१ ॥
(?) वाद्यहृतलयम(वऽ)त्त्वं जातिः सा स्यान्महारम्भा ।
(?) आरम्भो विद्यादन्ते वापि द्रुतं यस्यद्रुति ॥ १५२ ॥
ऊर्ध्वाङ्कदक्षिणमुखेक्षिप्तप्रहृता विगतक्रमा नाम ।
अङ्क्योर्ध्वकप्रवृत्ता दक्षिणवामप्रहारा च ॥ १५३ ॥
प्रायेणोद्धतवाद्या वितस्तामार्गाश्रयेण दिव्यानाम् ।
धद्रां धद्रां था..............(जा)तिर्विगतक्रमा नाम ॥ १५४ ॥

१. एकरूपा-पार्ष्णिसमालक्षणं त्रुटितं प्रतीयते.

लघ्वक्षरभूयिष्ठा विचित्रकरणा च सर्वमार्गेषु ।
वाद्यसमर्पितकरणा विगलितनामा तु सा जातिः ॥ १९५ ॥
करणैर्बहुभिश्चित्रैः सर्वमृदङ्गप्रहारसंयुक्ता ।
स्वाभाविकोत्तमगतौ वञ्चितिका सा तु विज्ञेया ॥ १९६ ॥
धाध्रौ धाध्रौ धाध्रौ त्वेभिर्यात्वक्षरैस्तु संयुक्ता ।
सा ह्येकवाद्यजातिर्नृत्तगतिर्विधानतः कार्या ॥ १९७ ॥
एवमेतेन विधिना कर्तव्यं वादनं बुधैः ।
गतिप्रचारगाने च दशरूपे विशेषतः ॥ १९८ ॥
सप्तरूपविधानेन छन्दक्यासारितेषु च ।
तत्त्वं चानुगतं चैव तथौघो वाद्यमिष्यते ॥ १९९ ॥
वाद्यं गुर्वक्षरकृतं तथाल्पाक्षरमेव च ।
गतिप्रचारे कर्तव्यं गाने साम्यमिहेच्छता ॥ १६० ॥
तत्त्वं चानुगतं चैव ओघश्चापि कदाचन ।
राज्ञां ललितगानैश्च योज्यं वाद्यं स्वभावजम् ॥ १६१ ॥
तत्त्वं तु प्रथमे गाने द्वितीयेऽनुगतं भवेत् ।
तृतीये त्वोघसंज्ञं तु वाद्ये गतिपरिक्रमे ॥ १६२ ॥
ध्रुवासु छन्दतश्चित्रं शेषाणां संप्रयोजयेत् ।
प्रावेशिकीनां कर्तव्यं····तश्च(च) ह्यनुगतं तथा ॥ १६३ ॥
नैष्क्रामिश्चान्तरकृतं कार्यं त्रिलयवाहितम् ।
द्रुतं(?) भाण्डेन कर्तव्यं तज्ज्ञैर्गतिपरिक्रमे ॥ १६४ ॥
एवं गतिप्रचारेषु कार्यं वाद्यं प्रयोक्तृभिः ।
ताण्डवे सुकुमारे च वाद्यं वाद्यामि(?)तत्त्वतः ॥ १६५ ॥
अभाण्डेनैव गानस्य परिवर्तं प्रयोजयेत् ।
तस्यान्ते संनिपाते च कार्यो भाण्डग्रहो बुधैः ॥ १६६ ॥
अथ नृत्त[स्य] शोभार्थमङ्गानां परिवर्तनम् ।
संगीतस्य प्रकर्तव्यं लयस्य च निवर्तनम् ॥ १६७ ॥

यत्राभिनयमङ्गे तु तत्र वाद्यं प्रयोजयेत् ।
यत्रापाणि(?)वशादङ्गं भूयोऽपि विनिवर्तयेत् ॥ १६८ ॥
स तत्रार्थेऽभिनेयस्तु शेषं नृत्तेन योजयेत् ।
यद्वृत्तं तु पदं गाने तादृशं वाद्यमिष्यते ॥ १६९ ॥
गातथाद्य(ताप्योघ)प्रमाणेन कुर्यात्स्वाङ्गविचेष्टितम् ।
यद्वा गुर्वक्षरं चैव तथाल्पाक्षरमेव च ॥ १७० ॥
मुखोपवहने कार्यं प्रकृते वर्णतस्तथा ।
स्थिते शुद्धप्रहारं तु मध्येऽक्षरसमं तथा ॥ १७१ ॥
कार्यं तु गीतके वाद्यं द्रुते चोपरिपाणिकम् ।
समरक्तं विभक्तं च स्फुटं शुद्धं प्रहारजम् ॥ १७२ ॥
नृत्ताङ्गग्राहि च तथा वाद्यं कार्यं तु ताण्डवे ।
सनृत्तेषु प्रयोगेषु तत्त्वं ह्यनुगतं तथा ।
अनृत्तेषु प्रयोगेषु तत्वमोघं क्रमेण त ॥ १७३ ॥
यो विधिर्मा(र्गा)नवाद्यानां पदाक्षरलयान्वितः ।
स तु नृत्ताङ्गहारे तु(षु) कर्तव्यो नाट्ययोगतः ॥ १७४ ॥
एतास्तु जातयः प्रोक्ता दश चाष्टौ च भाण्डजाः ।
अत ऊर्ध्वं प्रवक्ष्यामि तोटकान्वाद्यसंश्रयान् ॥ १७५ ॥

चित्रः समो विभक्तश्चित्र(श्छिन्न)स्थेन्न(श्छिन्न)विद्धोऽनुविद्धो विद्धो वाद्यसंश्रयोऽसु(ऽनु)श्रितप्रतिविच्युतो दुर्गोऽवकीर्णोऽर्धावकीर्णः परिक्षिप्त एकरूपो नियमान्वितः (साचीकृतः समुल्लेखश्चित्रलेखः सर्वसमवायकृतो दृढश्चेति ॥

(?) रिभितौजाकृतेश्चित्रो नानाकरणभूषितः ।
प्रसन्नकरणश्चैव त्रिपाणिलयसंभवः ॥ १७६ ॥
दर्दरपणवमृदङ्गैर्नानाकरणैः समं समनुजातः ।
तालाङ्गवंशानुयुक्तः स तु विज्ञेयः समो नाम ॥ १७७ ॥

१. धनुश्चिह्नद्वयान्तःस्थो भ्रष्टो पाठः ख-पुस्तकात्. 'सूचीकृत' इति त्वग्रे आदर्शद्वये.

नान्यायतस्तथा स्यादिह संस्थानतो विभक्तश्च ।
अक्षरपाणिलयेषु च विभक्तकरणे विभक्तस्तु ॥ १७८ ॥
वाद्यद्रुतं लयं यत्र सहसा न निवर्तते ।
संघाताद्येषु भिन्नेषु प्रकारश्छिन्न एव सः ॥ १७९ ॥
अर्धपाणिमृदङ्गेषु पणवोपरिपाणिकः ।
यदा भवति वाद्येषु छिन्नविद्धस्तु सा(?) भवेत् ॥ १८० ॥
विध्यनुविद्धं यद्वाद्यं सर्द्वा(र्वा)तोद्येषु दृश्यते ।
परस्परानुबोधाच्च सानुविद्ध इति स्मृतः ॥ १८१ ॥
मृदङ्गकरणैर्वाद्यं पणवा वादयन्ति यत् ।
सूचीविद्धैर्विधेन्तेसुकरणैर्द्विज(?) उच्यते ॥ १८२ ॥
विशुद्धवाद्यप्रकृतिः समपाणिकृतस्तथा ।
स्वरूपानु(?)गतं विद्धं विज्ञेयो वाद्यसंश्रयः(?) ॥ १८३ ॥
मुरजं पणवो वापि पणवं दर्दरोऽपि वा ।
अनुयाति यदा वाद्यं भवेदनुश्रितस्तु सः ॥ १८४ ॥
अनुगम्य यदातोद्यं गच्छेद्विसलयं मुनेः ।
शुद्धवत्समवाद्येषु तदा स्यात्प्रतिविच्युतः ॥ १८५ ॥
वाद्यप्रचारविषमः सर्वमार्गप्रयेतन(?)ः ।
अरिविरक्ताक्षरप(?) स दुर्ग इति कीर्तितः ॥ १८६ ॥
समवृत्तास्तु मुरजाच्छेव्यन्ते(?) पणवैर्यदि ।
नानाविचित्रैः करणैरवकीर्णः स उच्यते ॥ १८७ ॥
द्रुतं लयं समारभ्य पणवो दर्दरोऽपि वा ।
अर्धपाणौ यदा स्यातां तदा त्वर्धावकीर्णकः ॥ १८८ ॥
पणवैश्छादितं यत्र वाद्यमल्पं मृदङ्गजम् ।
अविभक्ताक्षरपदं परिक्षिप्तः स उच्यते ॥ १८९ ॥
सर्वातोद्यानि यत्रैकं करणं भावयेत तत् ।
समवृत्तपदान्येवमेकरूप उदाहृतम् ॥ १९० ॥

१. 'अरुपानं गतं' क.

प्रशान्तनियमोपेतः स्फुटं नाट्यसमन्वितः ।
न प्रयाति च गीतं च स ज्ञेयो नियमान्वितः ॥ १९१ ॥
चित्रं हि कारणं यत्र वाद्येनैकेन वाद्यते ।
वृत्ताङ्गहारानुगतो ज्ञेयः सूचीकृतस्तु सः ॥ १९२ ॥
कृत्वोपरिगतं वाद्यं पणवो दर्दरोऽपि वा ।
प्रयाजमुत्तरं यत्र समुल्लेखः प्रकीर्तितः ॥ १९३ ॥
चित्रं बहुविधं वाद्यं मृदङ्गपणवादिभिः ।
क्रियते यत्र संरब्धैश्चित्रलेखः स उच्यते ॥ १९४ ॥
सर्वमार्गगतो यस्तु सर्वपाणिलयाश्रितः ।
विचित्रश्च विभक्तश्च समवायकृतस्तु सः ॥ १९५ ॥
यस्तु मध्यलयोपेतः समः सुविहिताक्षरः ।
गतिपूर्णार्धविहितप्रकारो दृढ एव सः ॥ १९६ ॥
एवमेते प्रकारास्तु कर्तव्या वाद्यसंश्रयाः ।
गतिप्रचारे गीते च रसाभावानपेक्ष्य तु ॥ १९७ ॥
प्रकारा जातयश्चैव सर्वमार्गेषु संस्थिताः ।
ये वै गतिप्रचारेषु शुद्धास्ते केवलाः स्मृताः ॥ १९८ ॥

तत्र प्रयोगमिदानीं वक्ष्यामि—तत्रोपविष्टे प्राङ्मुखे रङ्गे कुत[प] एव विन्यासः कर्तव्यः । तत्र पूर्वोक्तयोर्नेपथ्यगृहयोः कुतपविन्यासः कार्यः । तत्र रङ्गाभिमुखो मौरजिकः, तस्य..................पाणविकाद्दर्दरिको वामतः । एष प्रथममवनद्धकुतपविन्यास उक्तः । तत्रोत्तराभिमुखो गायनः । गायनस्य वामपार्श्वे वैणिकः, तस्य दक्षिणे वंशवादकौ । गानु-(?)भिमुख्यो गायिका इति कुतपविन्यासः । तत्र प्रयोगे—अचला यकारश्च मकारश्च त्रिकैस्त्रिगुणितो भवेत् । विना दिसेतिजं दुंति चक्षं दुदोद्र द्वितीयं ति तावा ऋंदुभितिक्षतीर्यत्तदङ्गपूर्वं रङ्गविधानमनुप्राप्य छन्दसमेकाक्षरं समेन वाद्येन बहिर्गीतविधानमनुवर्तितव्यम् ।

१. 'साचीकृत' इति तु प्राक्. २. 'कुतपविन्यासः' ख. ३. 'गातुरभि' इति भवेत्.

आसारितप्रयोगे च तत्त्वानुगतप्रादेयाद्यं विधातव्यम् । यत्रिसप्तप्रत्याहारः यासावतीर्णकोटिस्तत्र वाद्यं प्रवर्तते । तत्रादौ तावद्वा(?)मार्द[ङ्गि]कप्रहारयुक्तं पश्चाल्लिङ्गकविमर्दनवरणामुर्छा पत्तिमासाद्य विचित्रकरयुतं समार्दङ्गिकसर्वभाण्डिकमपि बद्धं पश्चात्प्रकटनीयम् कस्मात्पूर्वं हि भाण्डवाद्येन सिद्धिरुत्पाद····ती वा स्त्रीबालमूर्खावकीर्णे च रङ्गे कुरू(?)जननसमर्थं वाद्यं समुत्पन्नं भवति ॥

अपि च—

आचार्याः सममिच्छन्ति पदच्छेदं तु पण्डिताः ।
स्त्रियो मधुरमिच्छन्ति विकुष्टमितरे जनाः ॥ १९९ ॥

तस्य चान्ते ताण्डवं प्रयोगमधिकृत्य नर्तक्या अवतरणकाले लघुवर्णसंचयेऽङ्किकेऽङ्गुलिप्रचलनप्रायं वाद्यं योज्यम् । गीतका(?)संनिपातेचलास्यामनुवाद्यम् । तेन त्वङ्गहारानुगतं करणं वाद्यं प्रयोज्यम् । आलिप्तमार्गेण जातिकरणाश्रितमुत्थापने वाद्यं प्रयोक्तव्यम् । ततः परपरिवर्तनं चतुर्मार्गिकशुद्रजायाश्रयं चतुर्थकारप्रवेशेषु वाद्यमङ्गुलिप्रचलनप्रायमिति । नान्दीशुष्कायत्तःपशुकरणाश्रितं वाद्यं योज्यमिति रङ्गद्वारप्रवरणायां जर्जरिनिगनेवार्यं वादितमार्गाश्रितं संनिपातग्रहणं प्रयोक्तव्यम् । महाचार्यो(?) वितस्तिमार्गाश्रितं प्रदेशिनीग्रहं पर्वतावपूर्वरङ्गे ताण्डववाद्यमुक्तम् ।

नायकायानास्वगतिप्रचारे वक्ष्यामः—··························· घेत्ती ब्बतो इति प्रियराङ्गं वप्रं इन्द्रं घटसछिरुण किटिजावियाणां व्यञ्जकप्रायं मध्यानाम् ।

एवं स्वस्थावस्थागतिप्रचारं विधीयते वाद्यम् ।
एककला···········श्चतुष्कलाश्चैववा(मा)दिविन्यासाः ।
तत्र तु साम्यं कार्यं भाण्डेन समं च गानेन ॥ २०० ॥

पुनश्चावस्थाकृतं वाद्यं प्रवक्ष्यामि त्वरितगमने वं वं घेघे टां इत्येवं वाद्यं प्रयोक्तव्यम् यथा विषमादिकमङ्गुलिप्रचलनकृतं विहितम् । पण्यैव(?) पूर्वं सम्यग्लिखितं त्वङ्गुलिप्रचारेषु । पुनरत्यावस्थायी वधविधानं वक्ष्यामि । त्वरितमनेषु भावा ये पूर्वोक्ता गतिप्रचारेषु । ध्रं ध्रं घे घे प्रायं तत्र तु

वाद्यं प्रयोक्तव्यम् । नौरथविमाननेपथ्यानिलाकाशजेऽङ्गुलिचलनं कार्यम् । तच्चतुष्केऽन्योन्यमाश्रितं (वाद्यमाश्रितम्) वाद्यमिति दुःखादि(दिं)तव्याधितेष्टजनवियोगविभावनारावधबन्धव्रतनियमोपासनादिमयुक्तेष्वालिप्तमार्गवधो विधातव्यम्(?) दैत्यदानवयक्षराक्षसग्रहादीनां सचन्द्रां चन्द्रा वक्रान्ता घे घेटा प्रायम् । घेटकुसत्त्वादीनां विटकुखुनेत्यादिकम् । यतिपाशुपतशाक्यादीनां धहुधहु घे घे प्रायम् । विघष्कोपस्थापकनिर्मुण्डवर्षधा(व)रादीनां घे घे टां टां णां णां प्रायम् । वृद्धश्रोत्रियकञ्चुकिस्थूलादीनां घो घो खो खो इति प्रायम् । गजवाजिखरोष्ट्ररथविमानयानेषु वंकिटिप्रायम् । सर्वत्रोत्तममध्यमाधमेषु पुरुषेष्वित्थं रसान्भावान्भुवि समीक्ष्य वाद्यं प्रयोक्तव्यम् । एवं तावत्पुरुषवाद्यम् ॥

स्त्रीणां पुनरपि व्याख्यास्यामः—तत्रोत्तमस्त्रीणां दिव्यानां वंगति किपिघमेटप्रथिघे इतिप्रायम् । अथ राज्ञीनां कथि कथि मथि दो दो खु खु प्रायम् । चं किति किथि घट मट थिघे इति ब्राह्मणीनाम् । अथ मध्यमस्त्रीणां वेश्याशिल्पकारीणां किरित्ता तं थं कथि मामपि डण किटि किटिप्रायम् । मरथिकुले केडखुखिखि प्रायं गीतं स्त्रीणाम् । एवं तावत्सामान्यतोऽभिहितं स्त्रीणाम् ॥

अवस्थान्तरितानां तु त एवापौरुषवाद्यविशेषा भवन्ति । तत्सामान्यं भयशोकक्रोधादयो हि भावा आसां समुत्पद्यन्ते । आसामपि रसभावाभिनयापेक्षं मार्गाश्रितं वयं(?)[1] भवति ॥

अपि च—

जातिमार्गप्रकारैस्तु करणैरक्षरैस्तथा ।
वादयेद्यस्तु संकीर्णं स श्रेष्ठो वाचकः[2] स्मृतः ॥ २०१ ॥

अथान्तरवाद्यानि—अनुबन्धो विग्रहारनं[3](?)सिद्धिग्रहणं परिच्छिन्नमिति ॥

तत्रानुबन्धसंज्ञमन्तरवाद्यं यथा—'धे धे ण वेर कवे' । इति पाद्यविरामे प्रहारितं यथा—'चन्द्रां खे खे ण' इति । सिद्धिरषै.......... ॥

---

१. 'वाद्यं' इति भवेत्. २. 'वादकः' इति भवेत्. ३. 'प्रहारितं' इति भवेत्.

अपि च—

ऐश्वर्यविस्मृते श्रान्ते वस्त्राभरणसंयमे ।
सिद्धिर्वादयितव्या तु नानाकरणसंश्रया ॥ २०२ ॥

सा च सिद्धिर्यथा—समार्गकरणाश्रया कार्या विचित्रकला अवस्थान्तरे पुनरेव कृता भवति ॥

अपि [च]—

पाद्यविरामे वाद्यं कर्म सावध(?) कृतो विरामेति ।
वस्त्राभरणनिपाते (प्र)कुर्यादभ्यञ्जने काले ॥ २०३ ॥

अथ परिच्छिन्नम्—सर्वभाण्डिकध्रुवाया ग्रहोपशमे गम्भीराप्रहारमुद्गतं तथा संवसंकलम्(?) । तत्रोत्तमानां विततमार्गाश्रितम्—'इन्द्रं को घ क्के' इति ॥

अथोत्तमस्त्रीणामदितावाघाश्रयणम्—'से खो खा' इति । अधमानां खञ्जनर्कुटस्थं यथा—देष्कर्का कटि कटि क्क इति ॥

अथ प्रासादिकी प्रवेशिक्याक्षेपिक्यवकृष्टासु । तत्र प्रावेशिक्यां समपाणौ विभक्तकरणं वाद्यम् । द्रुतायामुपरिपाणिकरित्र[1](?)करणास्थिता········· । अवकृष्टायामर्धसंनिपातजमिति । यच्च धोर्णो चे येति ।

एवमेतत्प्रयोक्तव्यं वाद्यं गतिपरिक्रमे ।
प्रासादिक्यां ध्रुवायां च त्वन्तरायां तथैव च ॥ २०४ ॥
अभाण्डमेकं गीतं तु परिवर्त[2](?) प्रयोजयेत् ।
संनिपातावसानेषु भाण्डवाद्यग्रहो भवेत् ॥ २०५ ॥

यथा—द्रुतविलम्बितायां 'चे ते लषो ख' इति । आदितायां यथा—'एधो खो णं खो चेणं डिक्कणि ष्कषणुड्डुष्प' इति । अथ नर्कुटखञ्जयोः—'णास्तु णाणणणखोदष्कणुज्ज' इति ।

अथोद्धात्यः—

संभ्रमावेगहर्षेऽथ[3] विसयोत्साहशोकजे ।
ग्रहो दानस्य यद्वाद्यमुद्धात्यः संप्रकीर्तितः ॥ २०६ ॥

---

१. 'चारित्र' इति भवेत्. २. 'परिवर्त्य' इति भवेत्. ३. 'हर्षेऽथ' इति, 'हर्षोत्थ' इति वा भवेत्.

मोक्षमिदानीं वक्ष्यामः—तद्यथा—संहननं संसरणं च । तत्रोद्धृत-द्रुतानुबन्धे—'घेत्तां किकिटि दत्तकेत्तिकिं कदेत्त गोदो घघे दोघटेघोघे यदो' इति ॥

अथ खञ्जनर्कुटयोः—'धं द्रां धं द्रां तकितां तकितां गुदुघे' इति ॥

अथ स्थितायाम्—'धे धं घेट मटघे घे छिमटं कंटछि मटछि कर्मांक दीथिटी' इति ॥

अथावकृष्टायाम्—'घटमघटथिठ द्विगुड्डघेटाघोणबंधणणोणणं' इति ॥

एवमेते ग्रहा मोक्षाध्रुवाणां गदिता मया ।
निष्क्रामे च प्रवेशे च अक्षेपिन्युत्तरासु च ॥ २०७ ॥

एवं तालकलाज्ञाने[1] मार्दङ्गिकेण प्रयतितव्यम् ।

भवन्ति चात्र श्लोकाः—

अतालज्ञमकालज्ञमशास्त्रं च····कण्टकम् ।
चर्मघातकमित्येवं प्रवदन्ति मनीषिणः ॥ २०८ ॥
अनेनैव विधानेन वाद्यं कार्यं प्रयत्नतः ।
अत ऊर्ध्वं प्रवक्ष्यामि आतोद्यानां तु लक्षणम् ॥ २०९ ॥
त्रिधा क्रिया मृदङ्गानां हरीतकियवाश्रया ।
तथा नेपथ्यगोपुच्छआकृत्या संप्रकीर्तितः ॥ २१० ॥
तालत्रयं तथा तच्च मृदङ्गेऽङ्किक इष्यते ।
मुखं तस्य च कर्तव्यं द्वादशाङ्गुलयोजितम् ॥ २११ ॥
तथोर्ध्वकश्च कर्तव्यश्चतुस्तालप्रमाणतः ।
मुखं तस्य प्रकर्तव्यमङ्गुलानि चतुर्दश ॥ २१२ ॥
आलिङ्ग्यश्चैव कर्तव्यो लयमात्रमथापि च ।
मुखं तस्याङ्गुलानि स्युरष्टावेव समासतः ॥ २१३ ॥
पणवस्यापि कर्तव्यो दीर्घत्वे षोडशाङ्गुलः ।
कृशामध्याङ्गुलान्यष्टौ पञ्चाङ्गुलमुखस्तथा ॥ २१४ ॥

---

१. 'कालाज्ञाने' ख.

अष्टौ तस्य तु कर्तव्यो(?) तज्ज्ञैरध्यर्ध(?)चाङ्गुलम् ।
मध्यं च सुषिरं तस्य चत्वार्येवाङ्गुलानि च ॥ २१५ ॥
दर्दरश्च घटाकारो नवाङ्गुलीमुखस्तथा ।
मुखं तस्य च कर्तव्यं घटस्य सदृशं बुधैः ॥ २१६ ॥
द्वादशाङ्गुलविस्तीर्णं पीनोष्ठं च समन्ततः ।
अतःपरं प्रवक्ष्यामि चर्मलक्षणमुत्तमम् ॥ २१७ ॥
न ज्वरोपहतं चर्म न च कङ्कमुखाहतम् ।
न दोषापहतं क्लिन्नं न भूमाग्निविदूषितम् ॥ २१८ ॥
एभिर्दोषैर्विनिर्मुक्तं चर्म निर्घत्सितं(?) गवा ।
मुखपल्लवसंकाशं हिमकुन्देन्दुसप्रभम् ॥ २१९ ॥
स्निग्धामिषविहीनं तु क्लिन्नं चर्म प्रशस्यते ।
विधिनैव मुखार्णानि चर्माण्याहृत्य बुद्धिमान् ॥ २२० ॥
सी(शी)तोदके निशामेकां स्थापयित्वा समुद्धरेत् ।
बद्धैः सुललितैर्दान्तैर्गोमयैरतिमर्दितैः ॥ २२१ ॥
चन्द्रकैस्तनुभिः पश्चान्मृदङ्गान्योजयेद्बुधः ।
पुष्पावर्तं ततः कुर्यात्त्रिवर्तिं चन्द्रिकाश्रयम् ॥ २२२ ॥
कक्षाख्यं वै परिकरं ग्रीवास्थं स्वस्तिकं तथा ।
शतानि त्रीणि कुर्वीत पुष्करैर्ह्यक्षराणि तु ॥ २२३ ॥
दश तत्र हि बद्धास्तु प्रक्षेप्या वत्ति(?) संश्रयेत् ।
निहित्वा(?) त्वक्षिके वाम्रे(?) तृतीये संप्रवेशयेत् ॥ २२४ ॥
सर्वेष्वेव प्रयोगोऽयमक्षिकेषु विधीयते ।
न वै मृदङ्गे दातव्यं रोहणं सततं बुधैः ॥ २२५ ॥
गव्ये घृते च तैले च तिलपिष्टं तथैव च ।
बद्ध्वा ह्यनेन विधिना अङ्किकालिङ्ग्यकोर्ध्वकान् ॥ २२६ ॥
देवताभ्यर्चनं कृत्वा ततः स्थाप्या महीतले ।
चित्रायामथवा हस्ते शुक्लपक्षे शुभे तिथौ ॥ २२७ ॥

उपाध्यायः शुचिर्विद्वान्कुलीनो रोगवर्जितः ।
मतिमान्नीतितत्त्वज्ञो मधुरो नियतेन्द्रियः ॥ २२८ ॥
सोपवासोऽल्पकेशश्च शुक्लवासा दृढव्रतः ।
मण्डलत्रयमालिख्य गोमयेन सुगन्धिना ॥ २२९ ॥
ब्रह्माणं शंकरं विष्णुं त्रिषु तेषु प्रकल्पयन् ।
आलिङ्ग्यं स्थापयेत्पूर्वं ब्रह्मणो मण्डले कृते ॥ २३० ॥
ऊर्ध्वकं तु द्वितीयेऽस्मिन्रुद्रनाम्नि निधापयेत् ।
तिर्यगुत्सङ्गिकं सम्यग्वैष्णवे मण्डले न्यसेत् ॥ २३१ ॥
बलिपुष्पोपहारैश्च पूजयेत्पुष्करांस्तथा ।
पायसं घृतमध्वक्तं चन्दनं कुसुमानि च ॥ २३२ ॥
शुक्लानि चैव वासांसि दत्त्वालिङ्ग्ये स्वयंभुवे ।
त्र्यम्बकाय च दातव्यः सगणायोर्ध्वके बलिः ॥ २३३ ॥
स्वस्तिके लेपिकापूपपिण्डकेण्डरिकैः सह ।
उन्मत्तकरवीरार्कपुष्पैरन्यैश्च भूषितः ॥ २३४ ॥
बलिः कार्यः प्रयत्नेन रक्तो रक्ताम्बरैः सह ।
वैष्णवे मण्डले स्थाप्यः सर्वबीजगतोऽङ्किके ॥ २३५ ॥
स्रग्वस्त्रालेपनैः पीतैश्चरुभिश्च सपायसैः ।
वाचयित्वा द्विजान्स्वस्ति दत्त्वा पूर्वं च दक्षिणाम् ॥ २३६ ॥
पूजयित्वादिगन्धर्वान्पश्चाद्वाद्यं समाचरेत् ।
तन्त्रीभिः पणवं नह्येत्सुमृष्टाभिः समन्ततः ॥ २३७ ॥
ततः पुष्करिकाश्चैव योजयेत सुचर्मणा ।
एवं मृदङ्गपणवाः कर्तव्या दर्दरास्तथा ॥ २३८ ॥
दैवतानि च वक्ष्यामि येषां ते च भवन्ति हि ।
वज्रेक्षणः शङ्कुकर्णो ग्रामणीश्च तथा महान् ॥ २३९ ॥
एतास्तु देवता विप्रा मुरजेषु प्रकीर्तिताः ।
मृन्मयत्वान्मृदङ्गास्तु भाण्डं भ्रमयतीति च ॥ २४० ॥

मुरजास्तूर्ध्वकरणादातोद्यं तोदनादपि ।
भाण्डस्यादौ प्रणीतोऽद्य पणवश्च विधीयते ॥ २४१ ॥
दारयोतो(?) दारयति तस्माद्भवति दर्दरः ।
स्पष्टा मृदङ्गात्पणवान्दर्दरश्च महामुनिः ॥ २४२ ॥
मेघे सुस्वरसंयोगं मृदङ्गानामथासृजत् ।
विद्युज्जिह्वो भवेद्वामो मेघस्य तु महास्वनः ॥ २४३ ॥
ऐरावतो महामेघस्तथा चैवोर्ध्वको भवेत् ।
आलिङ्ग्यके च व..................बलाहकः ॥ २४४ ॥
दक्षिणे पुष्करे मेघः किकिला नाम योजितः ।
मृदङ्गश्चैव नाम्ना तु ऊर्ध्वके नन्द्यथोच्यते ॥ २४५ ॥
अङ्किकः सिद्धिरित्येथमालिङ्ग्यश्चापि पिङ्गलः[1] ।
भूतप्रियो बलिस्तेभ्यो दातव्यः सिद्धिमिच्छता ॥ २४६ ॥
अपूजयित्वा ह्येतान्वै नैव प्रेक्षां प्रयोजयेत् ।
करीषस्य तु संघाते मृदङ्गं स्थापयेद्बुधः ॥ २४७ ॥
(?)पसंघतानंकट्यांश्च तथा चावनताः पुनः ।
आतोद्यपणवैश्चैव नर्तकोपनतास्तथा ॥ २४८ ॥
शान्तिकर्म प्रयुञ्जीत वि[धि]दृष्टेन कर्मणा ।
चत्वारः पणवाः कार्याः दशरूपविधौ पुनः ॥ २४९ ॥
आतोद्यास्वपि तान्येव नानावस्थासु वादयेत् ।
नाटके सप्रकरणे भाणके सप्रहासने ॥ २५० ॥
मृदङ्गं पणवं चैव दर्दरं चैव वादयेत् ।
एवमेतद्बुधैर्ज्ञेयं मृदङ्गानां तु लक्षणम् ।
अत ऊर्ध्वं प्रवक्ष्यामि वादकानां तु लक्षणम् ॥ २५१ ॥
(?) गीतवादात्तलयाव्यसहस्तोक्षरविशारदोऽथ लघुहस्तः ।
(?) किंद्रावणो विज्ञेयः सिद्धिस्थाने ध्रुवाकुशलः ॥ २५२ ॥

---

१. 'रित्येव' इति भवेत्.

कलरिभितमधुरकहस्तः सुनिविष्टो रक्तमार्जनो बलवान् ।
सुविदितशरीरबुद्धिर्मृदङ्गवादी गुणैरेतैः ॥ २९३ ॥
आलेपनप्रमाणज्ञश्चतुर्मार्गकृतश्च सः ।
प्रतिग्रहीता सिद्धीनामङ्गदोषविवर्जितः ॥ २९४ ॥
स्वभ्यस्तकरणैः साम्ये गीतज्ञो गुणितग्रहः ।
सुसंगीतप्रयोगज्ञो मृदङ्गी तु भवेद्गुणैः ॥ २९५ ॥
भ्रान्तोऽर्धहस्तकालज्ञश्छिद्राचरणपण्डितैः ।
अभ्यस्तकरणैश्चैव भवेत्पाणविको गुणैः ॥ २९६ ॥
निश्चलो निर्गुणः शीघ्रो लघुहस्तो विधानवित् ।
वादनान्तरवेदी च दर्दरी तु प्रशस्यते ॥ २९७ ॥

एतत्सर्वं नाट्ययोगं समीक्ष्य प्रोक्तं वाद्यं सर्वलोकानुभावात् ।
नोक्तं यच्चेदागमाद्वस्तुबुध्या सद्भिः कार्यं मार्गजातीः समीक्ष्य ॥२९८॥
स्फुटप्रहारं विशदं विभक्तं रक्तं विघुष्टं करलेपनं च ।
त्रिमार्जनापूरितरागरम्यं मृदङ्गवाद्यं गुणतो वदन्ति ॥ २९९॥
वाद्ये तु यत्नः प्रथमं तु कार्यः [1]शयानि(?) नाट्यस्य वदन्ति वाद्यम्।
वाद्ये च गीते [2]च हि सुप्रयुक्ते नाट्यप्रयोगो न विपत्तिमेति ॥३६०॥

इति भारतीये नाट्यशास्त्रे पुष्करवाद्यो नामाध्यायः पञ्चत्रिंश(चतुस्त्रिंश)ः ।

---

## पञ्चत्रिंशोऽध्यायः ।

विन्यासं भूमिकानां तु संप्रवक्ष्यामि नाटके ।
[3]यादृश्यो यस्य कर्तव्या विन्यासे भूमिकास्ततः ॥ १ ॥
गतिर्वाराङ्गदेष्वेभिः(?) सत्त्वशीलैः समासतः ।
परीक्ष्य पात्रं तज्ज्ञास्तु युष्टा(?)द्भूमिनिवेशने ॥ २ ॥
तस्मादन्विष्य हि गुणान्कार्यः पात्रसमाश्रयः ।
न खेदजननं बुद्धेराचार्यस्य भविष्यति ॥ ३ ॥
आधायो यभजा(?)श्चैव गुणानङ्गान्स्वभावजान् ।
ततः कुर्याद्यथायोगं नृणां भूमिनिवेशनम् ॥ ४ ॥

---

१. 'शया(द्यां)हि' ख. २. 'ऽत्रहि' ख. ३. 'यादृशा' क-ख.

अङ्गप्रत्यङ्गसंयुक्तमहीनाङ्गं वयोन्वितम् ।
न स्थूलं न कृशं चैव न दीर्घं न च मन्थरम् ॥ ५ ॥
श्लिष्टाङ्गं द्युतिमन्तं च सुस्वरं प्रियदर्शनम् ।
एतैर्गुणैस्तु संयुक्तं देवभूमिषु योजयेत् ॥ ६ ॥
स्थूलं प्रांशुं बृहद्देहं मेघगम्भीरनिस्वनम् ।
रौद्रस्वभावनेत्रं च स्वभावभ्रुकुटीमुखम् ॥ ७ ॥
रक्षोदानवदैत्यानां भूमिकासु प्रयोजयेत् ।
पुरुषाणां प्रयोगस्तु तथाङ्गक्रिययान्वितः ॥ ८ ॥
सुनेत्राः सुभ्रुवः स्वङ्गाः सुललाटाः सुनासिकाः ।
स्वोष्ठाः सुगण्डाः सुमुखाः सुकण्ठाः सुशिरोधराः ॥ ९ ॥
स्वङ्गप्रत्यङ्गसंयुक्ता दीर्घाश्च मदमन्थराः ।
न स्थूला न कृशाश्चैव स्वभावेन व्यवस्थिताः ॥ १० ॥
सुशीला ज्ञानवन्तश्च तथा च प्रियदर्शनाः ।
कुमारराजभूमीषु प्रयोज्या भरतोत्तमाः ॥ ११ ॥
अङ्गैरविकलैर्वीरं स्फुटं वचनकर्मणि ।
न दीर्घं नैव च स्थूलमूहापोहविचक्षणम् ॥ १२ ॥
अहीनं च प्रगल्भं च प्रत्युन्नतविनिश्चयम् ।
सेनापतेरमात्यानां भूमिकासु प्रयोजयेत् ॥ १३ ॥
पिङ्गाक्षं दीर्घनासं च ह्रस्वमुच्चमथापि वा ।
कञ्चुकिश्रोत्रियादीनां भूमिकासु नियोजयेत् ॥ १४ ॥
एवमन्येष्वपि तथा नाट्यधर्मप्रवेशने ।
दशावस्थानुरूपेण पात्रं युञ्ज्यात्स्वभूमिषु ॥ १५ ॥
मन्थरं वामनं कुब्जं विकृतं विकृताननम् ।
निष्टब्धनेत्रं काणाक्षं स्थूलं चिपिटनासिकम् ॥ १६ ॥
दुर्जनं दुःस्वभावं च विकृताकारमेव च ।
दासभूमौ प्रयुञ्जीत बुधा दासाङ्गसंयुतम् ॥ १७ ॥

प्रकृत्या तु कृशं क्षामं तपःश्रान्ते सुयोजयेत् ।
तथा च पुरुषं स्थूलमुपयोगेषु योजयेत् ॥ १८ ॥
यदि वा नेतराः सन्ति प्रकृत्या पुरुषा द्विजाः ।
आचार्यबुद्ध्या योक्तव्या भावचेष्टास्वभावतः ॥ १९ ॥
या यस्य सदृशी चेष्टा ह्युत्तमाधममध्यमा ।
सा तथाचार्ययोगेन निवम्या भावभाविनि ।
अत ऊर्ध्वं प्रवक्ष्यामि भरतानां विकल्पनाम् ॥ २० ॥
भरताश्रयाच्च भरतो विदूषकस्तौरिपो ने(न्ये) च(?) ।
नन्दी[1] ससूत्रधारो नाट्यरसो नायकश्चैव ॥ २१ ॥
मुकुटाभरणविकल्पैर्विज्ञेयो माल्यवस्तुविविधैश्च ।
कारककुशीलवाद्या विज्ञेया नामतश्चैव ॥ २२ ॥
धुर्यवदेको[2] यस्माद्दुद्धारो[3]ऽनेकभूमिकायुक्तः ।
भाण्डग्रहोपकरणैर्नाट्यं भरतो भवेत्तस्मात् ॥ २३ ॥
लोको हृदाश्रयकृतां सर्वप्रकृतिप्रचारसंयुक्ताम् ।
नानाश्रयां प्रकुरुते तथा च[4] नार्यां च सर्वत्र ॥ २४ ॥
प्रत्युत्पन्नप्रतिभो नर्मकृता नर्मगर्भनिर्भेदैः ।
छेदविभूषितवदनो विदूषको नाम विज्ञेयः ॥ २५ ॥
नरपतिस्तूर्यमतिः सर्वातोद्यप्रवादने कुशलः ।
तूरपतिग्रहयुक्तो(हि)विज्ञेयस्तौरिपो नाम ॥ २६ ॥
नटइ(य)ति धात्वर्थभूतं नाटइ(य)ति लोकवृत्तान्तम् ।
रसभावसत्त्वयुक्तं यस्मात्तस्मान्नटो भवति ॥ २७ ॥
स्तुत्याभिवादनकृतैर्मधुरवाक्यैः समङ्गलाचारैः ।
सर्वं स्तौति हि लोकं यस्मात्तस्माद्भवेद्बहुधा ॥ २८ ॥
तस्मिन्.........साश्चर्यो वदति नाट्ययोगेषु ।
प्राकृतसंस्कृतपाठ्यो नान्दी नामेति विज्ञेयः ॥ २९ ॥

---

१. 'नान्दी' इति त्वग्रे. २. 'धुर्ये' क-ख. ३. 'दुर्धरो' क-ख. ४. 'तथात्वनार्यां' इति भवेत्.

गानस्य च वाद्यस्य च पाठ्यस्याप्येकभावविहितस्य ।
शास्त्रोपदेशयोगात्सूत्रज्ञः सूत्रधारस्तु ॥ ३० ॥
(?)यस्माद्यथोपदिष्टान्सास्वभावाद्यसत्त्वयुक्तान् ।
(?)भूमिर्विकल्पैति यति च नाट्यकारः कीर्तितस्तस्मात् ॥ ३१ ॥
चतुरातोद्यविधानं सर्वस्य तु शास्त्रोदविहितस्य ।
गच्छति यस्मान्नाट्ये तस्माद्वैनायको भवति ॥ ३२ ॥
नानाप्रकृतिसमुत्थं करोति यः शीर्षकं मुकुटयोगे ।
विविधैर्वेषविशेषैः स च मुकुटकार(?)[1] विज्ञेयः ॥ ३३ ॥
यश्चाभरणं कुर्याद्बहुविधिविहितं स चाभरणम् ।
कर्ता यश्चोपकरणायोगात्स तेन नाम्ना विधातव्यः ॥ ३४ ॥
यो वै माल्यं कुरुते पञ्चविधं माल्यकृत्स विज्ञेयः ।
यश्चापि[2] वेषयोगं सच वेषकरस्तु विज्ञेयः ॥ ३५ ॥
चित्रज्ञश्चित्रकरो वस्त्रस्य च रञ्जनाद्भवेद्रजकः ।
जत्वश्मलोहकाष्ठैर्द्रव्यकरः कारुकश्चैव ॥ ३६ ॥
नानातोद्यविधाने प्रयोगयुक्तः प्रवादने कुशलः ।
आतोद्येऽप्यतिकुशलो यस्मात्स कुशीलवस्तस्मात् ॥ ३७ ॥
यद्यत्समाचरन्ते शिल्पं वा कर्म वा प्रयोगं वा ।
तेनैवापगत(?)गुणा विज्ञेया नामतः पुरुषाः ॥ ३८ ॥
एवं तु नाटकविधौ जातिर्नटसंश्रया बुधैर्ज्ञेया ।
नाम्नोपकरणयुक्ता नानाशिल्पप्रयुक्ता च ॥ ३९ ॥

इति भारतीये नाट्यशास्त्रे भूमिविकल्पो नामाध्यायः षट्त्रिंशः(पञ्चत्रिंशः) ।

---

षट्त्रिंशाध्यायः ।

एवं तु मुनयः श्रुत्वा सर्वज्ञं भरतं तदा ।
पुनरूचुरिदं वाक्यं कुतूहलपुरोगमम् ॥ १ ॥
यस्त्वया गदितो ह्येष नाट्यवेदः पुरातनः ।
एकचित्तैः सदास्माभिः सम्यक्समुपधारितः ॥ २ ॥

---

१. 'मुकुटकृत्तु' इति भवेत्. २. 'यश्चाविशेष' क-ख.

एकश्च संशयोऽस्माकं तन्नो व्याख्यातुमर्हसि ।
को वान्यो यन्निवेद्यस्य निश्चयं वेत्ति तत्त्वतः ॥ ३ ॥
न वयं परिहासेन विरोधेन च नान्यथा ।
इच्छामो भगवन्नाट्यमुपदेशार्थमेव तु ॥ ४ ॥
अस्माभिश्च तदा नोक्तं व्याच्छेदो [न] भवेदिति ।
इदानीं रूपशिक्षार्थं नाट्यं गुह्यं प्रकाशय ॥ ५ ॥
लोकस्य चरितं नाट्यमित्यवोचस्त्वमीदृशम् ।
शेषाणां लोकगुह्यानां निश्चयं कर्तुमर्हसि ॥ ६ ॥
लोकस्य कस्य चरितं पूर्वरङ्गे द्विजर्षभ ।
किमर्थं युज्यते घोषप्रयुक्तः किं करोति च ॥ ७ ॥
कस्माच्चैव मुनिः शौचं शुचिश्चरति सूत्रधृक् ।
कथमुर्वीतले नाट्यं स्वर्गान्निपतितं विभो ॥ ८ ॥
कथं तदायं वंशश्च नष्टसंज्ञः प्रतिष्ठितः ।
सर्वमेतद्यथातत्त्वं कथयस्व महामुने ॥ ९ ॥
तेषां तु वचनं श्रुत्वा मुनीनां भरतो मुनिः ।
प्रत्युवाच पुनर्वाक्यं गुह्यार्थाभिनयं प्रति ॥ १० ॥
कथयामि कथां गुह्यां यन्मां पृच्छथ सुव्रताः ।
पूर्वरङ्गविधानस्य तां च मे संनिबोधत ॥ ११ ॥
प्रोक्तवानसि यत्पूर्वं शुभं विघ्ननिबर्हणम् ।
तस्यानुबन्धेन मया पूर्वरङ्गः प्रकीर्तितः ॥ १२ ॥
शस्त्राणां प्रतिकारार्थं शरीरावरणं यथा ।
क्रियते हि यथा पापं हुतेनैव प्रशाम्यति ॥ १३ ॥
एवं जत्तै(?)श्च हासैश्च देवताभ्यर्चनेन च ।
स्तुत्याशीर्वचनैः शान्तैः कर्मभावानुकीर्तनैः ॥ १४ ॥
सर्वातोद्यनिनादैश्च तथा गतिस्वनेन च ।
मया पापापकरणे कृते विघ्ननिबर्हणे ॥ १५ ॥

---

१. 'भगवान्ना' क-ख. २. 'नोक्तव्या' क-ख.

स्तुतिगीताभिसंहृष्टैर्देवैरभिहितोऽस्म्यहम्[1] ।
नितरां परितुष्टाः स प्रयोगेणामुना तव ॥ १६ ॥
देवतासुरमानन्द्य यस्माल्लोकं च निन्दति ।
तस्मादयं प्रयोगस्तु नान्दीनामा भविष्यति ॥ १७ ॥
गीतवाद्यात्तु नान्दी हि यत्र काकस्वनः शुभः ।
तस्मिन्देशे विपाप्मा नो मङ्गल्ये च भविष्यति ॥ १८ ॥
यावत्तं पूरयेद्देशं ध्वनिर्नाट्यसमाश्रयः ।
न स्थास्यन्ति हि रक्षांसि तं देशं न विनायकाः ॥ १९ ॥
आवाहे च विवाहे च यज्ञे नृपतिमङ्गले ।
नान्दीशब्दमुपश्रुत्य हिंसा[2] नश्यन्ति चैव हि ॥ २० ॥
वाद्यं नाट्यं तथा गेयं चित्रं वादित्रमेव च ।
वेदमन्त्रार्थवचनैः समं ह्येतद्भविष्यति ॥ २१ ॥
श्रुतं मया देवदेवाद्भवतः शंकरोदितम् ।
स्नानजप्यसहस्रेभ्यो यत्र संगीतवादितम् ॥ २२ ॥
यस्मिन्नातोद्यनाट्यस्य गीतवाद्यध्वनिः शुभः ।
भविष्यत्यशुभं देशे नैव तस्मिन्कदाचन ॥ २३ ॥
एवं पूजाधिकारार्थं पूर्वरङ्गः कृतो मया ।
नानास्तुतिकृतैर्वाक्यैर्देवताभ्यर्चनेन च ॥ २४ ॥
यतोऽभिवादने क्लिष्टं शितं तद्रङ्गमण्डले ।
ततस्तस्य हि तच्छौचं विहितं तु द्विजोत्तमाः ॥ २५ ॥
शौचं कृत्वा यतो मन्त्रपूजनं जर्जरस्य तु ।
उच्यते पूर्वरङ्गेऽस्मिंस्तस्माच्छौचं प्रकीर्तितम् ॥ २६ ॥
.......................चैवमाद्यमेतन्महीतले ।
वक्तव्यं सर्वमेतद्धि न शक्यं हि निगूहितम् ॥ २७ ॥
स[र्व]मेतत्तया सर्वे नाट्यवेदसमन्विताः ।
सर्वलोकप्रहसनैर्वाद्यं तेनाद्य संश्रये ॥ २८ ॥

---

१. 'ह्यदम्' क-ख. २. 'हिंसा' इति तूचितम्.

कस्यचित्त्वथ कालस्य शिल्पकं ग्राम्यधर्मकम् ।
ऋषीणां न्यङ्गकरणं कुर्वद्भिर्ग्रहसंश्रयम् ॥ २९ ॥
अश्रव्यं(?) सुदुराचारं ग्राम्यधर्मप्रवर्तितम् ।
निष्ठुरं चास्वशस्तं (?) च काव्यं संसद्वियोजितम् ॥ ३० ॥
तच्छ्रुत्वा मुनयः सर्वे भीमरोषं प्रकम्पिताः ।
ऊचुस्तान्भरताक्रुद्धा निन्दयन्त इवाग्नयः ॥ ३१ ॥
मा तावद्भो द्विजा युक्तमिदमस्मद्विडम्बनम् ।
को नामायं परिभवः किंवा नास्मासु संमते ॥ ३२ ॥
यस्माज्ज्ञानमदोन्मत्ता न चेच्छाविनयान्विताः ।
तस्मादेतद्धि भवतां कुज्ञानं नाशमेष्यति ॥ ३३ ॥
ऋषीणां ब्राह्मणानां च समवायसमागमे ।
निर्ब्रह्मणो निराभू(हू)तः शूद्राचारो भविष्यति ॥ ३४ ॥
यश्च वा भवतां वंशः स चाशौचो भविष्यति ।
ये च वो वंशजास्तेऽपि भविष्यन्त्यथ नर्तकाः ॥ ३५ ॥
परोपस्थानवन्तश्च पुंस्त्रीबालोपजीविनः ।
शापं दत्तं तथा ज्ञात्वा सुतेभ्यो मे तदा सुराः ॥ ३६ ॥
सर्वे विमनसो भूत्वा तानृषीन्समुपस्थिताः ।
याचमानैस्ततः प्रोक्तं देवैः शक्रपुरोगमैः ॥ ३७ ॥
इदानीं दुःस(ख)मुत्पन्नं नाट्यमेतद्विनङ्क्ष्यति ।
ऋषिभिश्च ततः प्रोक्तं न हि त्वेतद्धि वक्ष्यति ॥ ३८ ॥
शेषमन्यत्र यत्प्रोक्तं सर्वमेतद्भविष्यति ।
एतच्छ्रुत्वा तु वचनं मुनीनामुग्रतेजसाम् ॥ ३९ ॥
विषण्णास्ते ततः सर्वे श्रुत्वा तं समुपस्थिताः ।
प्रोक्तवन्तश्च मां पुत्रास्त्वयाहो नाशिता वयम् ॥ ४० ॥
अनेन नाट्यदोषेण शूद्राचारा हि यत्कृताः ।
मयापि सान्त्वयित्वोक्ता मा क्रोधं व्रजतानघाः ॥ ४१ ॥

कृतानुविहितोऽस्माकं नूनमेष विधिः सुताः ।
मुनीनां न मृषा वाक्यं भविष्यति कदाचन ।
निधने च मनो मा भूद्युष्माकमिति सान्त्विताः ॥ ४२ ॥
जानीध्वं तत्तथा नाट्यं ब्रह्मणा संप्रवर्तितम् ।
शिष्येभ्यश्चैतदन्येभ्यः प्रयच्छामः प्रयोगतः ॥ ४३ ॥
मा वै प्रणश्यतामेतन्नाट्यं दुःखप्रवर्तितम् ।
महाश्चर्यं महापुण्यं वेदाङ्गोपाङ्गसंभवम् ॥ ४४ ॥
अप्सरोभ्य इदं चैव यथातत्त्वं तथा स्तुतम् ।
नाट्यं दत्त्वा ततः सर्वे प्रायश्चित्तं चरिष्यति ॥ ४५ ॥

इति भारतीये नाट्यशास्त्रे नाटशापो नाम सप्तत्रिंशः (अष्टत्रिंशः) अध्यायः ।

---

सप्तत्रिंशोऽध्यायः ।

····················लिप्रयोगार्वीप्रोक्तवास्तुषु ।
कस्यचित्त्वथ कालस्य नहुषो नाम पार्थिवः ॥ १ ॥
प्राप्तं वा देवराज्यं हि नयबुद्धिपराक्रमैः ।
प्रशशास तदा राज्यं देवैर्व्युष्टिमपाब्रुवन् ॥ २ ॥
गान्धर्वं चैव नाट्यं च इष्टां चिन्तामुपागमत् ।
इष्टचिन्तासु मनसा कथमेष गृहे मम ॥ ३ ॥
नाट्यप्रयोगो हि भवेद्दिवि देवर एव सन् ।
कृताञ्जलिः प्रयोगोर्वी प्रोक्तवान्सुपुरान्नृपः ॥ ४ ॥
अप्सरोभिरिदं सार्धं नाट्यं भवतु नो गृहे ।
प्रत्युक्तश्च ततो देवैर्बृहस्पतिपुरोगमैः ॥ ५ ॥
दिव्याङ्गनानां नैवेह मानुषैः सह संगतिः ।
हितं पथ्यं च वक्तव्यो भवान्स्वर्गाधिपो हि यत् ॥ ६ ॥
आचार्यस्तत्र गच्छतु················ते प्रियम् ।
प्रोक्तवांस्तु ततो मां तु नृपतिः स कृताञ्जलिः ॥ ७ ॥

इदमिच्छामि भगवन्नद्य मुर्व्यां प्रवर्तितम् ।
पूर्वमाचार्यकं चैव भवतो हि प्रतिश्रुतम् ॥ ८ ॥
व्यक्तभावात्त्विदं लब्धं त्वत्सकाशाद्विजोत्तम ।
पितामहगृहेऽस्माभिरेतदन्तःपुरे जने ॥ ९ ॥
पितामहक्रियायुक्तं पूर्वस्यां संप्रवर्तितम् ।
तस्याः प्राणाशशोकेन उन्मदोपरते नृपे ॥ १० ॥
विपन्नेऽन्तःपुरजने पुनर्नाशमुपागतम् ।
प्रणाशमेतदिच्छामि भूयस्तत्संप्रयोजितम् ॥ ११ ॥
(?)तिथियज्ञक्रियास्ते तद्यथासन्मङ्गलैः शुभैः ।
तस्मिन्मम गृहे बद्धं नानाप्रकृतिसंश्रयम् ॥ १२ ॥
स्त्रीणां ललितविन्यासं प्रणाशो नाशयिष्यति ।
तथास्त्विति मया प्रोक्तो नहुषः पार्थिवस्तदा ॥ १३ ॥
सुताश्चाहूय संप्रोक्ताः सम(?)पूर्वं सुरैः सह ।
अयं हि नहुषो राजा याचते नः कृताञ्जलिः ॥ १४ ॥
गम्यतां सहितैर्भूमिं प्रयोक्तुं नाट्यमेव हि ।
करिष्यामश्च शापान्तमस्मिन्सम्यक्प्रयोजिते ॥ १५ ॥
ब्राह्मणानां नृपाणां च भविष्यथ न कुत्सिताः ।
तत्र गत्वा प्रयुज्यन्तां प्रयोगा वसुधातले ॥ १६ ॥
न शक्यं चान्यथाकर्तुं वचनं पार्थिवस्य हि ।
अस्माकं चैव सर्वेषां नहुषस्य च महात्मनः ॥ १७ ॥
आत्मोपदेशसिद्धं हि नाट्यं प्रोक्तं स्वयंभुवा ।
शेषं प्रस्तारतन्त्रेण कोलाहलः कथिष्यति ॥ १८ ॥
प्रयोगान्कारिकाश्चैव निरुक्तानि तथैव च ।
अप्सरोभिरिदं सार्धं क्रीडनीयैकहेतुकम् ॥ १९ ॥
अधिष्ठितं मया स्वर्गे स्वातिना नारदेन च ।
ततश्च वसुधां गत्वा नहुषस्य गृहे द्विजाः ॥ २० ॥

स्त्रीणां प्रयोगं बहुधा बुद्धिवन्तो यथाक्रमम् ।
तत्रोपभोगतस्ते तु मानुषीषु ममात्मजाः ॥ २१ ॥
बुद्धिमन्तोऽधिकस्नेहस्ते स्तुतिर्द्विजसत्तमाः ।
पुत्रानुत्पाद्य बद्ध्वा च प्रयोगं च यथाक्रमम् ॥ २२ ॥
ब्रह्मणा समनुज्ञाताः प्राप्ताः स्वर्गं पुनः सुताः ।
एवमुर्वीतले नाट्यं शिष्यैः समवतारितम् ॥ २३ ॥
भरतानां च वंशोऽयं भविष्यं च प्रवर्तितः ।
कोहलोदिभिरेवं तु वत्सशाण्डिल्यधूर्तितैः ॥ २४ ॥
मर्त्यधर्मक्रियायुक्तैः किं चेच्छालमवस्थितैः ।
एतच्छास्त्रं प्रणीतं हि नराणां बुद्धिवर्धनम् ॥ २५ ॥
त्रैलोक्यस्य क्रियोपेतं सर्वशास्त्रनिदर्शनम् ।
मङ्गल्यं ललितं चैव........................ ॥ २६ ॥
य इदं शृणुयान्नित्यं प्रोक्तं चेदं स्वयंभुवा ।
कुर्यात्प्रयोगं यश्चैवमथ वाधीतवान्नरः ॥ २७ ॥
या गतिर्वेदविदुषां या गतिर्यज्ञकारिणाम् ।
या गतिर्दानशीलानां तां गतिं प्राप्नुयाद्धि सः ॥ २८ ॥
दानधर्मेषु सर्वेषु कीर्तनेषु महत्फलम् ।
प्रोक्षणीयप्रदानं हि सर्वदानेषु शस्यते ॥ २९ ॥
न तथा गन्धमाल्येन देवा मुह्यन्ति पूजिताः ।
यथा नाट्यप्रयोगस्थैर्नित्यं तुष्यति मङ्गलैः ॥ ३० ॥
गान्धर्वं चेह नाट्यं च यः सम्यक्परिपालयेत् ।
स ईश्वरगणेशानां लभते सद्गतिं पराम् ॥ ३१ ॥

एवं नाट्यप्रयोगे बहुविधिविहितं कर्मशास्त्रप्रणीतं
नोक्तं यच्चात्र लोकादनुकृतिकरणात्संविभाव्यं तु तज्ज्ञैः ।
किं चान्यत्संप्रपूर्णा भवतु वसुमती नष्टदुर्भिक्षरोगा
शान्तिर्गोब्राह्मणानां भवतु नरपतिः पातु पृथ्वीं समग्राम् ॥३२॥

महापुण्यं प्रशस्तं च लोकानां नयनोत्सवम् ।
नाट्यशास्त्रं समाप्तेदं(?)भारतस्य यशोवहम् ॥ ३३ ॥

इति भारतीये नाट्यशास्त्रे गुह्यविकल्पो नामाध्यायः सप्तत्रिंशः (अष्टत्रिंशः) ।

**समाप्तश्चायं [ग्रन्थः][१] । नन्दिभरतसंगीतपुस्तकम्(?)**

---

१. अस्य शास्त्रस्येदानीं विरलप्रचारत्वेन दुर्लभतया महता कष्टेन पुस्तकद्वयमासादितम्. तत्रापि द्वयोरपि तुल्यत्रुटिपाठोपलम्भेनैकादर्शकत्वमेवानुमीयते. तथा च पुस्तकान्तरालाभेन यथाशक्यं पाठे शोधितेऽप्यशुद्धीनामशक्यज्ञानानां संदिग्धपाठानां च बहुत्वेन शुद्धिपरिश्रमस्याशुद्धिसागरे निमज्जितत्वेऽपि केवलं ग्रन्थप्रकाशनमात्रं प्रयोजनं मत्वा प्राकाश्यं नीतः. अतः परं च येषां सविधे पुस्तकान्तरं भवेत्तर्हि तत्प्रेषितपुस्तकाधारेणैवायं पुनरपि संशोध्य प्रकाशनीयः—इति प्रार्थयामहे.